श्रीः

# श्रीमन्महाराज संस्कृत महापाठशाला पत्रिका

(त्रै मा सि की)



सम्पुटम् १०]		जनवरि १९३४		[सञ्चिका १

सम्पादकः
एच्. योगनरसिंहार्यः, एम्. ए.,
श्रीमन्महाराज संस्कृत महापाठशालाध्यक्षः.




मैसूरु
राजकीय शाखामुद्रालये सम्मुद्रिता
१९३४

॥ श्रीः ॥

## श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

---

# सम्पादकीयसमितिः

---

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए.,
विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः. एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचलशास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानोपाध्यायाः

६. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशाला-साहित्यप्रधानोपाध्यायाः

७. महाविद्वांसः करूरु शेषाचार्याः, महापाठशाला ज्यौतिष-प्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए. महापाठशालाध्यक्षाः (सम्पादकाश्च)

## विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः–संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपारिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (3s.) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

एच्. योगनरसिंहार्यः, एम्.ए.,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

1. संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगर.
2. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता.
3. उद्यानपत्रिका, तिरुयाडि.
4. सुप्रभातम्, काशि.
5. सूर्योदयः, काशी.
6. श्रीपीयूषपत्रिका, नडियाद्.
7. संस्कृतरत्नाकर, जयपुर.
8. कल्याण, गोरख् पुर.
9. The Mythic Society Journal, Bangalore.
10. The School Folk, Tumkur.
11. Annals of the Bhandarkar Oriental Research Institute, Poona.
12. Review of Philosophy and Religion, Poona.
13. Journal of Oriental Research, Madras
14. The Law College Magazine, Madras.
15. The Literary and Educational Supplement to "The Hindu," Madras.
16. The Aryan Path, Bombay.
17. The Theosophical Movement, Bombay.
18. The Philosophical Quarterly, Calcutta
19. Karnataka Historical Review, Dharwar.
20. Saqi, Secunderabad.
21. Ardra, Ceylon.
22. Wiener Beitrage Zur Kulturgeschichte and Linguistik, Wien.

23. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ
24. ಭಾರತೀ, ಮದ್ರಾಸು
25. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ.
26. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ
27. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು
28. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
29. ಅಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಬೆಂಗಳೂರು.
30. ರಂಗಭೂಮಿ, ಬೆಂಗಳೂರು.
31. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.
32. ಜ್ಯೋತಿಷವಿಚಾರಸಾಗರ, ಶಿವಮೊಗ್ಗ.
33. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ.
34. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು.
35. ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು.
36. ಸದ್ವೈದ್ಯ, ಮೈಸೂರು.

अभिनवः अत्यद्भुतः प्रकाशः

# दर्शनोदयः

## सकलदर्शनमूलविवेकसंग्रहरूपः

महामहोपाध्यायेन, पण्डितरत्नेन, महीशूरमहाराजास्थान धर्माधिकारिणा

**लक्ष्मीपुरं श्रीनिवासाचार्येण**

प्रणीत·

**सुगृहीतनामधेयस्य श्री राधाकृष्णमहाशयस्य**

**आङ्गलभाषा प्रस्तावनया च समलङ्कृतः**

षट्शतपुटात्मकः पञ्चशतप्रतिकृतिमात्रः

**रूप्यपञ्चकनिष्क्रयः**

विषयास्तु

पीठिका, शून्यतादर्शनम्, सत्यतादर्शनम्, मिथ्यात्वदर्शनम्, सेश्वरमीमांसा, विशिष्टाद्वैतदर्शनम्, शैवदर्शनम्, कार्यकारणभावविचारः, श्रीभाष्यभूषणम्, आगमसारः इति दशभिः प्रकरणैः परिष्कृतः सकृदवलोकनमात्रेण स्वकयिदर्शनश्रद्धातिशयं परकीयदर्शने विद्वेषविनिवृत्तिं च संपादयतीत्यत्र नास्ति विशयलेशावकाशः ॥

प्राप्तिस्थानम्.—

लक्ष्मीपुरं श्रीनिवासाचार्यः,

चामराजपुरं मैसूरु.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः"

(ईशोपनिषत्)

सम्पुटम् १०] जनवरि १९३४ [सञ्चिका १


एकस्य तिष्ठति कवेर्गृह एव काव्य-
मन्यस्य गच्छति सुहृद्भवनानि यावत् ।
न्यस्याविदग्धवदनेषु पदानि शश्व-
त्कस्यापि सञ्चरति विश्वकुतूहलीव ॥

प्रतिभातारतम्येन प्रतिष्ठा भुवि भूरिधा ।
भावकस्तु कविः प्रायो न भजत्यधमां दशाम् ॥

(काव्यमीमांसायामुदाहृतौ)

यो नाम कश्चिदिह संविदितं प्रमेयं
ग्रन्थान्तरे लिखति वा वदति स्वयं वा ।
मत्कर्तृतामननुकीर्त्य स कीर्तिलोभा-
न्निस्सन्ततिर्जगति जन्मशतानि भूयात् ॥

(तौतातिमततिलके भवदेवः)

# तुतातभट्टाचार्यः*

(600–700 क्रि.श.)

---

## १. अवतरणम्

महाभागश्चायं कदा कां मेदिनीमलमकार्षीत्, कतमद्वा कुलमन्वग्राह्यनेन, कथं वेदृशमनितरसाधारणमस्य प्रावीण्यमुदपादि, कति वा प्रबन्धानयं प्रणिनाय, तादात्विकी भारतपरिस्थितिर्वा कथमवर्तते-त्यादिविशयजातनिरासो न सम्प्रति प्राप्तावसरः। यतस्तादृशमहत्तम-व्यक्तिसद्भाव एव विपश्चितामस्ति महती विप्रतिपत्तिः। केचिदयं खलु कुमारिल एव, तुतात इति तु तस्यैवाभिधानान्तरमिति जगदुः। अन्ये पुनरासीत्ततोऽन्यः कश्चिद्विपश्चिदुत्तंसस्तुतातनामा, तस्यैव मतं "तौतातिक" मिति गीयते दर्शनजगतीत्यगादिषुः। अत आदौ पक्षयोरेतयो-रेकतरो वरीयानिति निर्णयाय यथामति प्रयततेऽयं जनः॥

अत्राद्यपक्षमनुरुन्धाना एव बहवः। ते च स्वोक्तप्रमेयपरिरक्षणाय काश्चन युक्तीर्निर्दिशन्ति। तास्वाद्या खल्वियम्—

### I एकविधसिद्धान्त·

साम्प्रतमुपलभ्यमानतुतातमतस्य कुमारिल (700 क्रि श.) निरूपितप्रमेयजालस्य चैकरूपतैवेत्याकरनिकरपरिकलनेन सुष्ठु ज्ञायते तथाहि—

(१) तुतातमते नित्यसुखाविर्भाव एवापवर्ग इत्यनुज्ञायते। यदाहोदयनः (1000 क्रि.श.) किरणावल्यां "तौताततितास्त्वकार्यमपीश्वर-

---

* प्रबन्धश्चायं मन्निर्मित "दर्शनचारित्रविज्ञाना" दुद्धृतः॥ (का. प्राणेशाचार्य. )

ज्ञानं शरीरमन्तरेणानिच्छन्तःकार्यमेव सुखज्ञानमपवर्गेऽस्तीति वदन्तः . . . . ." इत्यादिना । कुमारिलसमयोऽपि तादृश इति मानमेयोदयपरिकलनादवसीयते । तथाहि, मानमेयोदये "दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्तिनः । नित्यानन्दस्यानुभूतिर्मुक्तिरुक्ता कुमारिलैः ।" इति ॥

किञ्चोदाहृतकिरणावलीप्रकाशे 'भाट्टं मतं त'दिति विस्पष्टमगादीत् गङ्गेशसूनुर्वर्धमानः (1300 क्रि श) (दुःखसाधनशरीरनाशे नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिरिति भाट्टं मतं निराकरोति 'तौताितितास्त्विति' कि. प्र.) भट्टशब्दस्तु निरुपपदो भट्टकुमारिल एव प्रयुज्यमानो बहोः कालादपि दार्शनिके जगति दृष्टः । अस्य च शब्दस्य प्रथमप्रवर्तकस्सुरेश्वर (मण्डनमिश्रः ?) इति वयं सम्भावयामः, यतोऽयं शब्दस्सुरेश्वरविरचिते मानसोल्लास एव प्रथमं दृष्टिपथमारोहति ("प्रत्यक्षमेक चार्वाका . . . . . भाट्टा वेदान्तिनस्तथा मानसोल्लास 17-18-19) अयं किल सुरेश्वरश्श्रीशङ्करान्तेवासी सप्तमशताब्दीय (686 क्रि श) इति मत्प्रणीतदर्शनचारित्रविज्ञानात्मकनिबन्धे नैकयुक्तिसहकारेण निरणायि । एवञ्च भाट्टशब्दस्सप्तमशताब्दीमारभ्यैव भूरिप्रयोगपरिकर्मित इत्यत्र न संशीतिलेशोपि । तामेव सरणिमनुरुन्धाना जैनविपश्चिद्विद्यानन्द(800 क्रि.श.) जयन्त(1000 क्रि श.) माधव (1400 क्रि.श.) गदाधरप्रभृतयः कुमारिलमतप्रस्तावे भाट्टशब्दमेव प्रायुञ्जत ॥

कुमारिलस्यैव निरुपपदभट्टशब्दाभिधेयतायां निदानान्तरमप्यस्ति । अयं हि बहुवार भारतं परीत्य बहुवादिजयपूर्वकमास्तिकमतमुद्धार । अयमेव महीसूरजनपदान्तर्गताशिवमोग्गानिकटवर्ति-'हुंचा'भिधानग्राममध्यासीनमाप्तमीमांसाजन्मभूमिमप्रतिमपण्डितं 'समन्तभद्रं' वादे निर्जित्य प्रथिताभिधानोऽभूदितीतिहाससमालोचकाःप्रोचुः ।

जगति हि प्रसिद्धपुरुषमेव निरुपपदा 'चार्यभट्टादि' शब्देन भूषयन्ति। तस्मादयं निरुपपदभट्टाभिधानभूषितो जगति जेगीयते। सति चैवं किरणावलीप्रकाशकारोक्तभट्टशब्देनायं तौतातित. कुमारिल एवेति निश्चिनुमः॥

(२) किञ्च वैशेषिकदर्शनव्याख्यायामुपस्काराख्यायां शङ्करमिश्रः (1500 क्रि श) "समयश्च जातिमात्रे व्यक्तेराक्षेपत एवोपस्थितेरिति तौतातिकाः। जातौ व्यक्तौ चोभयशक्ति, किन्तु जात्यंशे ज्ञाता व्यक्त्यंशे स्वरूपसती प्रयोजिकेति प्राभाकराः' (उपस्कार, ७तमाध्याये, २याह्निके २०तमसूत्रे) इति तौतातिकमततया कुमारिलमतमेव प्रादर्शयत्। तत्समनन्तरमत्र प्राभाकरमतमप्यूचे। अतस्तत्पूर्वतनं मत कौमारिलमिति निर्व्यूढम्॥

सति चैवं तुतातकुमारिलमतयोरैक्ये असति च तदन्यव्यक्तौ प्रमाणे प्रसिद्धस्यैव कुमारिलस्य 'तुतात' इति नामान्तरमिति वक्तुं युक्तम्॥

## II सहनिर्देशः

अपि च प्रसिद्धप्रभाकरगुरुणा सह निर्देशो तुतातशब्दाभिधेयस्य बहुषु प्रत्नप्रबन्धेषु अवलोक्यते। तथा हि—

(१) पूर्वोदाहृतवैशेषिकदर्शनोपस्कारे 'इति तौतातिका' इति 'इति प्राभाकरा' इति तुतातमतानुसारिणां प्रभाकरेण सहाभिधानमस्ति॥

(२) एवं प्रबोधचन्द्रोदयनाटके कृष्णमिश्रः (1100 क्रि श) 'नैवाश्रावि गुरोर्मतं न विदितं तौतातिकं दर्शनं' (प्र.तृ.अं. ३) इत्यभाणीत्। अत्र च तुतातशब्दः कुमारिलवची, तद्दर्शनं तन्मतं वा तौतातिकमित्यभिधीयत इति न तिरोहितम्॥

एवञ्च गुरु (प्रभाकर) कुमारिलयोर्दर्शनसमरे परस्परं प्रत्यनीकभावस्सुप्रसिद्ध एवेति सहनिर्देशः कुमारिलस्य तुतातशब्दवाच्यतायां गमकतां भजते ॥

### III. पद्योदाहरणम्

एवं पद्योदाहरणमपि कुमारिल एव तुतात इत्यत्र गमकं। तथाहि, सर्वतन्त्रस्वतन्त्रो माधवाचार्यस्सर्वदर्शनसंग्रहे पाणिनीयमतप्रस्तावे 'तौतातितै' रित्यादावुदीर्य 'यावन्तो यादृशा ये च यदर्थप्रतिपादने' इति पद्यमुदाजहार। पद्यमेतत्कौमारिलश्लोकवार्त्तिके स्फोटवादे (६९तमं) समुपलभ्यते। एतेन श्लोकवार्त्तिककारस्तुतातादभिन्न इत्यवसीयते ॥

### IV. कोशसम्मतिः

एव प्रसिद्धविश्वकोशे कुमारिलशब्दपर्यायनिरूपणप्रसङ्गे 'तुतात–तौतातिक (त) कुमारिलशब्दाः पर्याया' इति प्रत्यपादि ॥

एवमन्यैश्च निदानैः कुमारिल एव तुतातादभिधानः, न ततोऽतिरिक्तः कश्चित्तन्नामा पुमानासीदिति संक्षेपः ॥

### २. सिद्धान्तसङ्ग्रहः

अत्र यथामति प्रत्नप्रबन्धतत्त्वपरिकलनेन मम चरमः पक्ष एव वरीयानिति प्रतिभाति। अयमत्र सिद्धान्तसङ्ग्रहः। तुतातपदाभिधानो विपश्चिदुत्तंसः कुमारिलातिरिक्त एव, तावुभावपि प्रायस्समराद्धान्तौ समसमयौचास्तां, परन्तु तुतातः किंचित्प्राक्तनः, स कंचित्प्रबन्धमपि प्रणिनाय, तद्गतान्येव पद्यानि कानिचित्कुमारिलप्रबन्धेऽपि स्थेमानमश्नुवत, परवर्तिकुमारिलमहिम्ना स तदीयप्रबन्धश्च नामशेषतां प्रापतुः। सम्प्रति तु हन्त! तादृशमहीयसस्सद्भाव एव महती विमतिरिति महदिदं विषादनिदानम् ॥

सम्प्रति प्रोक्तप्रमेयेषु प्रमाणान्याकलयामः, तदनु पूर्ववाद्युक्तविषयानपि विमृशामः ॥

निम्ननिरूपितयुक्तिनिकरेण कुमारिलातिरिक्तः कश्चन तुतातनामा पण्डितप्रकाण्डास्सिध्यति । तथाहि ॥

## I. पद्यानुपलब्धिः

(१) माधवाचार्यस्सर्वदर्शनसङ्ग्रहे जैनमतनिरूपणप्रसङ्गे प्रथमत 'स्तदुक्तं तौतातितै' रिति निरूप्योपरिष्टात्कानिचित्पद्यान्याचष्टे । तानि च 'सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः । दृष्टो न चैकदेशोऽस्ति लिङ्गं वा योऽनुमापयेत् । न चागमविधिः कश्चिन्नित्यसर्वज्ञबोधकः' इत्यादीनि । एतानि च कुमारिलप्रबन्धे कुत्रापि नावलोक्यन्ते । श्लोकवार्तिके त्वेतदर्थप्रतिपादकान्यन्यविधान्येवोपलभ्यन्ते । तानि तु सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः । निराकरणवच्छक्या न चासीदिति कल्पना । न चागमेन सर्वज्ञस्तदीयेऽन्योन्यसंश्रयात् । नरान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम्' । (श्लो. २ रयसू ११७—११८) इत्यादीनि । एवं शान्तरक्षित (800 क्रि.श.) प्रणीते 'तत्त्वसङ्ग्रहे', विद्यानन्दविनिर्मिताष्टसाहस्र्यां,' प्रभाचन्द्रकृते प्रमेयकमलमार्ताण्डे च सार्वज्ञ्यनिराकरणप्रसङ्गे उदाहृतानि पद्यानि कानिचिद्भट्टप्रणीतश्लोकवार्तिके न वर्तन्ते । अथ चैतदुभयगतपद्यानां भाषाभावसाम्यं वरीवर्ति । सतिचैवमेतानि पद्यानि माधवः कस्मात्प्रबन्धादुद्दधार? विद्यानन्दो वा कुत्रत्यानि जग्राह? सङ्ग्रहकारश्शान्तरक्षितो वा कुतस्त्यानि पपाठ? विचिकित्सा चैषा विना कुमारिलान्यव्यक्तिमुत्तरयितु न शक्या । एवञ्च कुमारिलातिरिक्ततुतातसिद्धिर्निष्प्रत्यूहा ॥

अत्र पुण्यपत्तनमुद्रितसर्वदर्शनसङ्ग्रहव्याख्याने 'दर्शनाङ्कुरा'भिधाने 'तौतातितै' रित्यस्य 'बौद्धै' रिति व्याख्या दृश्यते ।

तद्व्याख्याकारा अभ्यङ्करमहोदयाः प्रोक्तामनुपपत्तिमनुसन्दधाना एवैवं व्याचक्रुरिति प्रतिभाति। परन्तु तादृशव्याख्यायां गमकं किमपि नास्माभिरुपालम्भि। त एव महाशयाः पाणिनिदर्शनगततच्छब्दस्य कामपि वृत्तिं कुतो न व्यदधुरिति न जानीमो वयम् ॥

(२) पार्थसारथिमिश्रश्शास्त्रदीपिकायाम्मुक्तिविचारे आनन्दमोक्षवादिनाम्मतमुपवर्णयन्नुपसंहारे 'निजं यत्त्वात्मचैतन्य' मित्यादिपद्यमुद्धृतवान्। तदपि न कुमारिलनिबन्धे दृश्यते। एवं तत्रैवापरेषां मतमनुवदन्य 'दानन्दवचनं त्वि' त्याद्यूचे, तस्यापि मूलं व्याख्या वा नोपलभ्यते। प्रायश एतद्वाक्यद्वयमपि तुतातनिबन्धगमेव भवेदिति वयं प्रतीमः। स्पष्टीभविष्यतिचेदमुपरिष्टादिति ॥

## II अभिधानवैखरी.

अन्यदप्यत्रास्ति निदानं। माधवाचार्यः पाणिनिदर्शने 'तदुक्तं भट्टाचार्यैर्मीमांसाश्लोकवार्त्तिके' इत्यादावभिधाय 'यस्यानवयवस्फोटो व्यज्यते वर्णबुद्धिभिः' (९६) इति पद्यं श्लोकवार्त्तिकगतमुदाहरत्। एवं तत्समनन्तरमेव 'तदुक्तं तौतातितै'रिति प्रथममुदीर्य 'यावन्तो यादृशा ये च यदर्थप्रतिपादने इति पद्यं पपाठ। यद्यपीदं श्लोकवार्त्तिकेऽपि स्थेमानमश्नुते। तथाप्येकस्मिन्नेव प्रकरणे कुमारिलप्रबन्धगतवाक्ययुग्मोदाहरणे एकत्र 'भट्टाचार्यैर्मीमांसाश्लोकवार्त्तिके' इति, अपरत्र 'तौतातितै'रिति वैलक्षण्येनाभिधाने किमपि निदानं नास्ति? तुताताभिधानेनान्येन व्यरचि तत्पद्यं, तदेव कुमारिलस्स्वीयश्लोकवार्त्तिके संयोजयामासेत्युक्तौ तु तदुक्तनामभेदस्य कारणं सम्पद्यत इति सर्वमनवद्यं भवति। न हि कुमारिलनिबन्धे अपरप्रबन्धगतवाक्यं नास्तीति साम्प्रतम्। श्लोकवार्त्तिकगतमङ्गलपद्यस्यैव (विशुद्धज्ञानदेहाय) कीलकस्तोत्रादुद्धारादिति ॥

### III. सिद्धान्तभेदः

किञ्च तुतातकुमारिलमतयोस्सिद्धान्तभेदोऽपि दृश्यते । तेन कुमारिलस्तुतातशब्दाभिधेयो नेति जानीमः । तथा हि—

(१) वैशेषिकदर्शनविवृतिकारो जयनारायणपञ्चाननो निजनिर्मितविवृतौ 'तुतातभट्टमतानुयायिनस्तु द्रव्य-गुण-कर्म-सामन्यरूपाश्चत्वार एव पदार्था इति वदन्ति (वै. द. वि. 117 PP) इत्यभ्यधात् । एतेन तुतातः पदार्थचतुष्टयमात्रवादीति स्पष्टमवगच्छामः । कुमारिलस्तु श्लोकवार्त्तिके अभावपरिच्छेदे अभावमपि साधयामास । सति चैवं कुमारिलस्तुतातपदवाच्यः कथं भवेदिति वाचकास्समालोचयन्तु । एतेन सिद्धान्तैक्योक्तिरपि प्रत्युक्ता वेदितव्या ॥

एवमियता प्रबन्धसन्दर्भेण माधव आर्हतदर्शने कुमारिलश्लोकवार्त्तिकगतश्लोकान्नोदाजहार । परन्तु तुतातप्रबन्धगतानेव । एवञ्च सति पाणिनिदर्शनेपि 'तदुक्तं तौतातितै' रित्यादिनोदाहृतं पद्यं (यावन्तो यादृशायेच) तुतातस्यैव, न श्लोकवार्तिकस्थं, तदेव पद्यं कुमारिलोऽपि निजनिबन्धे निविवेशेति गत्यन्तरविरहादङ्गीकरणीयमिति सिध्यति । एतेन तुतातः प्रामाणिकप्रबन्धप्रणेतेति च सुसाधम् । इतःपरम्पूर्ववाद्युदीरितविषयानालोचयामः ॥

## ३. पूर्वपक्षिमतसमालोचनम्

### I

(१) यदवादि सिद्धान्तैक्यात्तुतातशब्दवाच्यता कुमारिलस्येति । तदविचारचारु । तथा हि । न खलु कुमारिलो निजनिबन्धसन्दोहेषु कुत्रापि 'नित्यसुखाभिव्यक्तिर्मुक्ति' रिति निरवोचत् । न वा यत्र कुत्र वा येन केनाचित्पदेन तादृशी मुक्तिमसूचयत् । प्रत्युत श्लोकवार्त्तिके

सम्बन्धाक्षेपपरिहारप्रकरणे 'सुखोपभोगरूपश्च यदि मुक्तिः प्रकल्पते। स्वर्ग एव भवेदेष पर्यायेण क्षयी च सः। न हि कारणवत्किञ्चिदक्षयित्वेन गम्यते। तस्मात्कर्मक्षयादेव हेत्वभावेन मुच्यते। नह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम्' (१०५–११०) इत्यादिप्रबन्धसन्दर्भेण सयुक्तिकं प्रोक्तां मुक्तिं व्युदस्याभावरूपामेव तां सिद्धान्तयामास। यद्येवं, कथंकारं कुमारिलो नित्यानन्दापवर्गवादीति वक्तुं शक्यते? मानमेयोदयकारिणो वा नारायणस्य 'दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्तिनः। नित्यानन्दानुभूतिर्मुक्तिरुक्ता कुमारिलै'रिति वचनं कथं विश्वसिमः॥

(२) कुमारिलमतपारम्यवादी तन्निबन्धव्याख्याता च पार्थसारथिमिश्रोऽपि शास्त्रदीपिकायां तर्कपादे प्रथमत आनन्दमोक्षवादिनां मतमनुवादपूर्वकं निरस्यान्ते दुःखनिवृत्तिरेव मुक्तिरिति निश्चिकाय ('तेनाभावात्मकत्वेपि मुक्तेर्नापुरुषार्थता। सुखदुःखोपभोगो हि संसार इति कथ्यते। तयोरनुपभोगश्च मोक्षं मोक्षविदो विदुः। श्रुतिरप्येवमेवाह भेदं संसारजीवयोः। न ह वैसशरीरस्य प्रियाप्रियविहीनता। अशरीरं वावसन्तं स्पृशतो न प्रियाप्रिये। इत्यादि शास्त्र.तर्कपादे)। एषैव पार्थसारथिमते कुमारिलमतमिति प्रतीयते। यतोऽयं प्रथमत एव 'कुमारिलमतेनाहं करिष्ये शास्त्रदीपिकामि'ति प्रतिजज्ञे। यद्यपि पार्थसारथिसमयेपि भट्टमतासिद्धमुक्तिविषये महान्विवादस्समासीदिति तदीयानेकप्रवादुकप्रदर्शनात्प्रतीमः। तथापि सोऽयं विवादस्तुतातभट्टकुमारिलभट्टयोरभेदविभ्रमानिबन्धनः। इतरथा सयुक्तिकनित्यसुखमुक्तिनिरासककथितवाक्यव्याकोपस्तावद्दुष्परिहरो भवेत्। पार्थसारथिनोदाहृतेषु बहुषु मतेष्वपि अपरेषाम्मत एव तस्य निर्भर इत्यत्र न विशयलेशः ('अपरे त्वाहुरभावात्मकत्ववचनमेव स्वमतमुपपत्यभिधानात्। आनन्दवचनन्तु' (?) पन्यासमात्रत्वात्परमतं।

न हि मुक्तस्यानन्दानुभवस्सम्भवति कारणाभावात् । मनःस्यादिति चेदमनस्कत्वश्रुतेरेवा अमनो अवागिति, शास्त्रदी तर्कपादे) एतत्प्रकरण उदाहृतं वचनद्वयं ('आनन्दवचनन्तु' 'निजंयस्त्वात्मचैतन्यं') नेदानीं कुत्राप्युपलभ्यते ॥

प्रसङ्गात्किञ्चिदुच्यते । नित्यसुखाभिव्यक्तिमुक्तिवादोऽयं नितराम्प्राचीनः । न तुतातेन नूतनतयोन्नीतः । यतो मतमेतत्परमप्राचीनेन वात्स्यायनमुनिना न्यायभाष्ये सविस्तरं निराकारि । यद्यपि वार्त्तिकतात्पर्यटीकायां वाचस्पतिमिश्रस्त्वेतन्मतमद्वैतवेदान्तिनामित्यभ्यधात्तथापि प्रसिद्धिमाश्रित्यैव तथोक्तिरित्यवसेयम् ॥

वस्तुतस्त्वेतन्मतं भासर्वज्ञ (900 क्रि.श.) प्रभृतिशैवाचार्याणां गुरुपरम्पराप्राप्तमित्यादिकं मन्निर्मित 'भाट्टमनमुक्ति' नामकप्रबन्धे द्रष्टव्यम् । एतत्सर्वमभिप्रेत्य सर्वशास्त्रपारदृश्वानस्तर्कवागीशमहोदया एतन्मतं तुतातभट्टाचार्यमतमिति बहुयुक्तिनिरूपणपूर्वकमगादिषुः ॥

(३) परवर्ती गागाभट्टोऽपि (अयं च शिवराजाभिषेकसमये प्रधानः पण्डित आसीदिति पाण्डुरङ्गवामनकाणे एम्.ए., एल्.एल्.एम्. महाशयः पूर्वमीमांसाया ऐतिह्य नामके प्रबन्धे प्राह) 'भाट्टचिन्तामण्यभिधाने स्वीयनिबन्धे 'तस्मात्प्रपञ्चस्य सर्वथाविलय एव मुक्तिस्सचदुःखाभावरूपत्वात्पुरुषार्थ एव तेन सुखदुःखोपभोगाभावो मुक्तिरिति फलित' मित्याचख्यौ । एवञ्च तुतातकुमारिलमतयोर्मुक्तिविषये पदार्थविभागविषये च महदन्तरं वर्तत इति न तयोस्सिद्धान्तैक्यम् ॥

## II

एवं सहनिर्देशोऽपि न हेतुः कुमारिलस्य तुतातशब्दवाच्यतायाम् । अन्यथासिद्धत्वात्तथाहि—

(१) शंकरमिश्रीयोपस्कारस्थं तौतातिकपदं शब्दशक्तिविषये तुतातमतानुयायितया कुमारिलमेव बोधयतीत्यपि वक्तुं शक्यं । तावतापि कुमारिलातिरिक्तस्तुतात इत्येषोऽर्थो न हीयते ॥

(२) एवं प्रबोधचन्द्रोदयगतवाक्यमपि नेयं, नोचेन्निरवकाशकुमारिलादिवाक्यव्याकोपापातात् । अत एव किरणावलीगततौतातिकपदं-कुमारिलपरं न भवितुमर्हतीत्यादिकं प्रागुक्तमनुचिन्तनीयं । वस्तुतस्तु-प्रबोधचन्द्रोदये नैष पाठष्टीकाकृत्सम्मतः, तदभिमतपाठस्तु 'नैवाश्रवि गुरोर्मत न विदितं कौमारिलं दर्शनं तत्त्वज्ञानमहो न शारिकगिरां वाचस्पतेः का कथेति । एतमेव पाठमनुमोदते काणेमहाशयोऽपि । चन्द्रिकाभिधानायां प्रबोधचन्द्रोदयनाटकटीकायां भवदेवनामकमीमांसकप्रवरस्य तद्ग्रन्थस्यचोल्लेखो दृश्यते । स च भवदेवस्तौतातिमततिलकाभिधानं ग्रन्थमग्रथ्नदिति पूर्वमीमांसैतह्यकारः काणे महोदयो वदति । स च ग्रन्थो मद्रपुरीमध्यविद्योतमानराजकीय प्राच्यकोशागारीय लिखितपुस्तकसूचिकायां ( Vol IV Part I R. No. 3,735) प्रथमाध्यायान्तभागएव निर्दिष्टस्समुपलभ्यते । तत्रत्याद्यन्तभागमात्रविवेचनेन भवदेवः तुतातशब्दवाच्यं कमभिप्रैतीति न ज्ञातुं पारयामः । परन्तु स प्रबन्धः कं विषयमधिकृत्य प्रावर्ततेति न जानीमो वयं ॥

III

माधवस्तौतातितास्त्वित्युदीर्य यत्पद्यमुदाहरत्तदपि तुतात प्रबन्धगतमेव । तदेव श्लोकवार्त्तिककारोऽपि निबबन्ध निजप्रबन्धे । अत्र च युक्तयः प्राक्प्रदर्शिता एवेति नेह प्रतन्यन्ते ॥

IV

विश्वकोशकारेणापि तुतातकुमारिलशब्दयोः पर्यायत्वे न किमपि प्रमाणं प्रादर्शीति तदुक्तिं न प्रतीमः ॥

## ४. उपसंहारः

एवञ्च तौतातिकवचनतया समुदाहृतानां श्लोकानां कुमारिलप्रबन्धेऽनुपलब्धेर्माधवीयाभिधानवैखर्या नित्यसुखमुक्तिवादस्य कुमारिलेन विधूननात्कुमारिलसमयानुसारिपार्थसारथ्यादिभिस्तदुपपादनादानन्दमुक्तिवाद्युक्तवचनसन्दोहस्य कुमारिलग्रन्थनिकरेष्वनवलोकनाच्च नित्यसुखमुक्तिवादितुतातभेदासम्भवात्कुमारिलस्य कुमारिलातिरिक्ततुतातसिद्धेर्निष्प्रत्यूहत्वादिति सर्वमवदातम् ॥

---

॥ श्रीः ॥

# तुतातभट्टाचार्यः



प्रबन्धा

विद्वान् काशी प्राणेशाचार्यः



मैसूरु
राजकीय शाखामुद्रालये मुद्रापितः
१९३४.

## विज्ञप्तिः

---

वाचकवरेण्यानां सविधे विज्ञप्तिः । एतद्ग्रन्थप्रणयनादिविषये समुचितप्रबन्धोत्साहदानादिना समुपकृतवद्भ्यश्श्रीमन्महिसूरमहाराज-संस्कृतमहापाठशालाध्यक्ष श्रीयोगनृसिंहार्य ए.ए., महाभागेभ्यो निरतिशयं कृतज्ञतामावेदयाम इति शम् ॥

काशी प्राणेशाचार्यः.

# सूचीपत्रम्.

यत्पुनः प्रथमे भोगे पदार्थानां वृद्धाः प्रवर्तयितारो बालानिति, तत्र प्रष्टव्यं, स्तनन्धयो जातमात्रः स्तन्यं चोषयति कोऽत्रैनं प्रवर्तयितेति? 'ननु सूतिकैवेति चेत्, तत्किमस्यास्ये स्तन्यमर्पयतीति प्रवर्तयित्र्येषा? उताहो एवङ्कारमेवङ्कारश्चोषयितव्यं जातेति अभिनीय दर्शयति स्तनमन्यं चोषयन्तीति प्रवर्तयित्र्येषेति?' नात्रासन्दिग्धं पूर्वेण 'यत एव जातमात्रस्ततस्तरां न स्तन्यार्पणं तच्चोषणाविनाभूतमित्येवञ्जातीयिकां व्याप्तिं गृह्णानः सः चोषयत्यनुमिमान इति वदन्नुपादेयवचा भवेत् कस्यापि सचेतनस्य' नतराञ्चैतदर्पणं वाय्वादिवत् प्रसह्य प्रवर्तयतीति वदन्॥

तद्यथा—वातरोगपरकाष्ठानिबद्धसर्वाङ्गीणवेपथुः बालातपप्रपातवत्प्राङ्गणाभ्यर्णमध्यासीनो देवदत्तः पृष्टो वेपथुनिदानं आचष्टे 'नाहं कम्पं करोमि, अपितु वातरोगेण कम्पते मे शरीरमिति, तद्वदिति चेत्—न अदर्शनात्। न खल्वर्पणसामान्यं स्तनार्पणं वा एवं प्रवर्तयतीति क्वचिदपि पश्याम इति। नतमाञ्च विलक्षणो व्यापारस्तनार्पणे समस्ति येनेदमर्पणं प्रवर्तयति बालमित्याद्याचक्षाणः, अदर्शनादेव। तस्मादसाधुः स्तनार्पणप्रवर्तनावादः। नतराञ्चासन्दिग्धं परेण। तत एव हेतोः न भाषाविज्ञानस्य गन्धमप्याघ्रातुमीष्ट इति दूरतरा तत्पूर्विका प्रवृत्तिवाञ्छेति। तदेवञ्जातीयकं कल्पनमपि अतिसन्धानचातुरीमहिमनिबन्धनमेवेति स्फुटितम्॥

इदं त्विह स्यात्। यत्र यत्र विचित्राः प्रवृत्तयः तत्तदर्थगोचराः अनुपलभ्यमानतत्तदनुगुणकारणाः प्रथन्ते संस्कारपूर्विका एवैताः प्रथन्त इति समस्ति नः सर्वेषां सम्प्रत्ययः। तद्यथा—अशिक्ष्यमाणा एव पञ्चषवयस्का बालकाः साङ्गीतिकीमानन्दलहरीमनुभवन्ति, गायन्तितराञ्च सुदीर्घकालनिरन्तरसत्कारासेवितसङ्गीतोपनिदांमहतामपि पण्डितानां

आश्चर्यजनकम्। इति तदेवज्जातीयकेऽर्थे जन्मान्तरीयसंस्कारं विना कागतिरिति। तदिहापि जन्मान्तरीयेण संस्कारेणावश्यं भाव्यम्। क्षुधा पिपासया चैष शिशुः पीड्यत एवेति च वक्तव्यम् यत्कारणं घूर्णयति रसानां, ओष्ठाभ्यां निष्पीड्य चोषयति च रसनामिति। स एष कालस्तं संस्कारमुद्बोषयति। उद्बुद्धसंस्कारश्च प्रवर्तते। न च संस्कारो नामातीत्याप्यनुभवं सम्भवन् दृष्टचरः श्रुतचरो वा। नतराञ्चेह जातमात्रस्यानुभवं शङ्कितुमप्यर्हामः, नतमाञ्चानुभवसंस्कारावनाश्रयावेव नानादिक्कालौ कार्यं कुरुतः। कार्यकारणे समानमधिकरणमाश्रित्यैव यतः प्रसिध्यतः॥

न च कालमेव समानमधिकरणं पश्याम इति शङ्क्यम् अनुक्तिसहत्वात्। स यदि अखण्डः प्रत्यक्षश्च, कस्येन्द्रियस्येति पर्यनुयोज्योसि? इह हि पञ्चेन्द्रियाणि ग्राहकाणि, ग्राह्याणि च तत्तदनुगुणगुणवन्ति वस्तूनि। कतमः पुनरेष काल एषु स्यात्? यत्कारणं पञ्चानां गुणानां मध्येऽन्यतमस्यापि गुणस्य नाश्रयः न वा गुणात्मैषः। अथवास्त्वेषकालः कथञ्चिदाश्रयः। नियतकार्यदर्शनं पुनः कुत्रायतताम्। कालाधाराः संस्काराः। कालश्च सर्वदेशेष्वेकः, सर्वदेशस्थैः सर्वैः शरीरैः सम्बद्ध इति सर्वेष्वपि शरीरेषु सर्वाणि प्रसिध्येयुः इति न्यायादापतति। नचैवमनुभवः। तदिह नियतकार्यदर्शने निदानमन्यत् कल्पनीयम्। ततो वरं 'ममानुभवः, मम संस्कारः, मम स्मृतिः, गुरूपदिष्टमर्थं स्मृत्वाहं त्वामुपदिशामि, तन्तमर्थमनुभूतमनुष्ठितं स्मृत्वा तत्तत् कर्म करोमि' इत्यादिव्यवहारसिद्धः अहम्प्रत्ययगम्य आत्मास्तीत्यङ्गीकार एव। तानीमानि कल्पकानि भिन्नानीति भिन्ना एवेहात्मानः प्रथन्ते। पूर्वपूर्वा संस्कारादिधारा उत्तरोत्तरासु संस्कारादिधारासु कारणमिति अनादय एवैत संस्कारादिधाराश्रया आत्मान इति प्रथन्ततराम्॥

अभ्युपगम्य प्रवृत्तिं प्राथमिके भोगे वृद्धोपदेशेन दोष उक्त । वृद्धोपदेशनमेव प्रत्यक्षैकप्रमाणवादिनः कथं सिध्यति ? नहीदं प्रत्यक्षरूपं यदुपदेशनं नाम । अथवानभ्युपगच्छन् शब्दं प्रमाणं कथमभिलषितानर्थान् दारेष्वाविष्कुरुषे ? कथन्तराञ्च दारैरावेदिततत्तदर्थलिप्सोऽतिसन्धत्सेऽतिचाटुभटो भाद्रिकाः प्रजाः मनांस्यासामावर्जयन् ? कथन्तमाञ्चाशब्दायमान एव विक्रेतृभ्यो भोग्यवस्तूनि क्रीणीषे ? कुतस्त्या चैतस्मिन् सर्वस्मिन्नसति ते सर्वेन्द्रियसुखास्वादं प्रति प्रत्याशा तदिहान्ततो गत्वा ॥

शरीरयात्रापि च ते न प्रसिध्येदशब्दतः । सर्वथाङ्गीकरोष्येव शब्दं मानं सदा मृदो । सर्वात्मना नास्ति शब्दो मानमित्यात्थ दुर्धिया । वन्ध्या मे जननीत्येतद्वाक्यवत्ते वचो मृषा । नेतः परमिह साधूनतिसन्धीथा न जातु मुष्णीष्व । परधनमेते त्वद्वत् दुःखे गहने विमज्य नश्येयुः । एवं बहुविधपापान्याचरतस्ते भवेद्धि नरकौघः। पुनरपि दुष्टं जन्म प्राप्नोष्यन्ते च नरकौघम् । नादेयकीटकल्पो बह्वार्त्तान् प्रपद्य खिन्नस्स्याः । त्वाद्विधदृष्ट्या करुणा हृदयाद्धुद्भिद्य सम्भूता । आविष्ट एतयाहं तत्वं चक्षे सुपथ्यञ्च । बहुविधसुखदुःखाद्याः कारणमासाद्य बहुरूपम् । साध्या नेह तदास्ते बहुविधजीवेषु दृश्यं नः । तस्मात् भिन्नान् देहान् जीवा आसाद्य कृतवन्त । बहुरूपकारणौघं तेनेहाभान्ति बहुरूपाः । इति नो युक्त्या सिद्धे नेह शरीरात्मवादाय । प्रयतेथास्त्वं किन्तु प्रयतस्वात्मात्र को वा स्यात् ? विविधे भोगे चास्य प्रयोक्तृहेतुश्च को वा स्यात् ? इत्यादि निर्णयेऽतो बहुविधकल्याणभूमिः स्याः । इदमिह चान्यद्बोध्यं मानुषवैचित्र्यसदृशं हि । विविधाः सन्ति प्राणिन आकीटान्नागपर्यन्ताः । तद्वद्वृक्षादीनामचराणामस्ति वैचित्र्यम् । तदिदं सर्वं कारणवैचित्र्यायत्तमास्थेयम् ।

युक्त्या सिद्धे चैवं शास्त्रवशादस्य निर्णीतिः। श्रीयाज्ञवल्क्यमुख्यैः ऋषिभिः स्पष्टं स उक्तोऽर्थः। यदाह भगवान् याज्ञवल्क्यः॥

'वेदैः शास्त्रैः सविज्ञानै जन्मना मरणेन च। आर्त्या गत्या तथागत्या सत्येन ह्यनृतेन च। श्रेयसा सुखदुःखाभ्यां कर्मभिश्च शुभाशुभैः। निमित्तशाकुनज्ञानग्रहसंयोगजैः फलैः। तारानक्षत्रसञ्चारैः जागरैः स्वप्नजैरपि। आकाशपवनज्योतिर्जलभूतिमिरैरपि। मन्वन्तरैर्युगप्राप्तया मन्त्रौषधिफलैरपि। वित्तात्मानं वेद्यमानं कारण जगतस्तथा'। इत्यादि॥

अयमर्थः—अस्थूलमनण्वह्रस्वम्, जीवापेतं वाव किलेदं म्रियते नजीवो म्रियते, य आत्मापहतपाप्मा विजरो विमृत्युः विशोको विजिघत्सोऽपिपास सत्यकामः सत्यसङ्कल्पः, नैव स्त्री न पुमानेष न चैवायं नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन स लक्ष्यते। स एष मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम्। स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत् परितृप्तिमेति। स्वप्ने तु जीवः सुखदुःखभोक्ता स्वमायया कल्पितजविलोके। सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति। पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः। इत्याद्याः वेदाः शरीरातिरेकिणमात्मानमवबोधयन्ति॥

तथा अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति, वर्णा आश्रमाश्च स्वकर्मनिष्ठा प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टकुलजात्यायुर्भोगादिमन्तो जन्म प्रतिपद्यन्त, इति चैवञ्जातीयाकानि शास्त्राणि तथाविधमेनं गमयन्ति, मम शरीरमित्याद्यस्ति नो विज्ञानमनुभवात्मकम्, मरणजन्मार्त्यागमनगमनादीनि स्वप्नेप्यनुभूयमानानि शरीरातिरेकिणमात्मानं गमयन्ति। नचाश्रद्धेयानि वेदशास्त्रादीनि, भूकम्पादीनि निमित्तानि पिङ्गलादिपतत्रिचेष्टितशकुनानि, सूर्यादिग्रहसंयोगाविशेषाः तारानक्षत्रसञ्चाराः, जाग्रतानुभूयमानं सच्छिद्रादित्यज्ञानादिकं, स्वा-

म्रिकं खरवराहयुक्तरथारोहणविज्ञानं, विचित्रफलजनकानि 'इत्यादि बोधयन्ति, तथैवानुभवाम इति सत्यमेव शास्त्रमिति सुदृढञ्चावगच्छामः मन्त्रौषधीनां तत्तत्फलजनकतां यत् शास्त्रेण बोध्यते आकाशादीनि च वस्तूनि शरीरेन्द्रियविषयादिरूपेण भोग्यतया परिणतानि यतः, ततस्तरां भोक्तारं गमयन्ति । स्वायम्भुवादीनि मन्वन्तराणि, कृतत्रेतादियुगवत् विलक्षणस्वभावकानि आत्मानं साधयन्ति ॥

यदाह मनुः—'अरोगाः सर्वसिद्धार्थाः चतुर्वर्षशतायुषः । कृते त्रेतादिषुत्वेषां वयो ह्रसति पादशः । चतुष्पात् सकलो धर्मः सत्यं चैव कृते युगे । चौरिकानृतमायाभिः धर्मश्चापैति पादशः' इत्यादि । यत्कारणञ्च **एषां वयो ह्रसति पादशः** इत्याद्याह तत्कारणमेव मन्या । महे अनेकयुगसम्बन्धिनः मन्वन्तरसम्बन्धिनो वा न भिन्ना आत्मानः, अपित्वभिन्ना एवेति । अन्यन्मतम्—कस्य चिद्धि राजकुले जन्म, अन्येषां विचित्रकुलेषु जन्मानि, नेमानि तत्तदनुगुणपुण्यपापान्यतीत्य सम्भावयितुमप्यर्हाणि अदृष्टान्युच्चावचानि तत्सम्बन्धिन आत्मनश्च उच्चावचान् गमयन्ति । एवं मरणमपि उच्चावचं विविधदुःखपुरस्सरं बाल्ययौवनस्थाविरकालिकं, तत्तदनुगुणमदृष्टविशेषं तत्सम्बन्धिन आत्मनश्च विविधान् गमयति । जीवद्दशायामप्यार्तिरनेकाकारानेकप्राणिसमवेता अवगम्यमानादृष्टमदोनुगुणं गमयत्यनेकरूपमात्मनश्चैतत्समवेतान् विविधान् । पुण्यकृतां स्वर्गगतिः पापकृताञ्च नरकगतिः, उभयमिश्रयोगेन च मनुष्यत्वाप्तिः, इत्याद्युपनिषद्भिः बोध्यते, न चैतत् शरीरस्य सम्भवति, ततोपि शरीरादतिरिक्त आत्मास्तीत्यवगच्छामः ॥

एवं समानकुलोत्पन्नाः समानमेवमात्रा पित्रा आचार्यैश्चानुशिष्टाः विचित्रतरप्रीतिभाजः, सत्यानृतान्युच्चावचमाचरन्तः विचित्रसुखदुःखान्यनुभवन्तः शुभाशुभानि भिन्नभिन्नान्येवानुतिष्ठन्ति कर्माणि । नैतत्सर्वं

तत्तदनुगुणमदृष्टमन्तरोत्पत्तुमर्हम् । नतराञ्च, अदृष्टसमवायिनमात्मानं जन्मान्तरानुस्यूतमिति, शरीरातिरिक्तात्मावगमकम् । इति । स्पष्टञ्चाह—
'अहङ्कारः स्मृतिर्मेधा द्वेषो बुद्धिः सुखं धृतिः । इन्द्रियान्तरसञ्चार इच्छा धारणजीविते । स्वर्गस्वप्नश्च भावानां प्रेरणं मनसोऽगतिः । उन्मेषश्चेतना यत्नः आदानं पाञ्चभौतिकम । यत एतानि लिङ्गानि दृश्यन्ते परमात्मनः तस्मादस्ति परो देहात् आत्मा सर्वज्ञ ईश्वरः' इति देहादतिरिक्तमात्मान गमकैः लिङ्गैः । इदम्प्रत्ययग्राह्याणि शरीरेन्द्रियादीनि, तदहम्प्रत्ययग्राह्य एतेभ्योतिरिक्त इत्यवगच्छामः ॥

नन्वयं ममात्मेति समास्ति सम्प्रत्ययः, इदम्प्रत्ययग्राह्य इहात्मा भासते, तदसाधूक्तं इदम्प्रत्ययग्राह्यभिन्न आत्मेति चन्नेति ब्रूम, अयमिति हि प्रत्यक्षनिर्देशः, स कम्प्रति क्रियते, किंविषयकश्चेति विवेक्तव्यम् । यदि समीपवर्तिनं पुत्रादिकं अतिप्रेम्णा स्निग्धाय कथयति, ततो गौण एवायं पुत्रो आत्मशब्दप्रयोग इति सुस्पष्टम्, यदि दासामात्यादिकं कार्यनिर्वाहकतया, ततस्तराम्, इति नैवञ्जातीयकप्रत्ययप्रदर्शनात् व्यभिचरति अहम्प्रत्यय आत्मनो विषयात् । यदि पुनरहम्प्रत्ययग्राह्य एवात्मा एवञ्जातीयके प्रत्यये प्रकाशत इत्यास्थीयेत तत्तर्ह्ययं ममाहमित्यापि प्रयोगं अभ्रान्तमङ्गीकुर्याः । तस्मादहम्प्रत्ययः शरीरादिभिन्नमात्मानं गमयतीति सिद्धम् । स्मृतिरपि जन्मान्तरानुभूते शास्त्रादौ स्तन्यपानादौ वा प्रवृत्तिविशेषैः शीघ्रावगतिविशेषैर्वा संस्कारद्वारा संभाव्यमाना जन्मान्तरीयमनुभवं तत्सम्बन्धिनमात्मानं च गमयतीति पुरैवावोचाम । मेधावी कश्चित् सकृदध्ययनादिनापि धरयत्यर्थान् शास्त्रीयान् इति, तदनुगुणं संस्कारं जन्मान्तरीयं, आत्मानञ्च तादात्विकं जानीमहे ॥

एतेन द्वेषो बुद्धिः सुखञ्च व्याख्यातम् । ननु सुखं नाम शरीराकारपरिणतानां भूतानां गुणः, तन्नात्मनो गमकम् । मैवम्,

यावच्छरीरमविद्यमानत्वात्। नन्वेतदात्मनो गुण इत्यभ्युपगन्तुरपि दूषणं समानं, सत्यं अथापि कारणस्य कादाचित्कत्वात् कादाचित्कं सुखमित्यभ्युपगच्छामः। नन्वेतदपि समानं शरीरगुणवादिनः समाधानम्। इति चेत् किन्तत् पुनः कारणं स्यादिति जिज्ञासा, अदृष्टविशेष इति आत्मवादिनः सम्प्रत्ययः, तच्च जन्मान्तरानुष्ठितपुण्यकर्मजन्य इति च, नैवं शरीरात्मवादिनः सम्भवेत्सम्प्रत्यय इति विषम उपन्यासोयं समानं समाधानमिति। तत्सिध्यति सुखं देहातिरिक्तं आत्मानं गमयतीति। द्वन्द्वसहिष्णुतालक्षणा धृतिरपि प्राणिविशेषनिष्ठा अदृष्टगमिका॥

किञ्चान्यत्। अस्तीन्द्रिय तत्तद्गत्वा अन्यदन्यत् गच्छतीति गन्तृविषया संवित्। यन्नयुगपत् चाक्षुषरासनादिसंविदुपजायते। मन एवेन्द्रियं विविधं गत्वा पर्यायेण संविदमादधातीति कश्चित् कल्पः। मम मन इति अहंप्रत्ययग्राह्यात् आत्मनो भिन्नं मन इति षष्ठीविभक्तिरवगमयति। अहं जानामि गन्धं रसं रूपं स्पर्शं शब्दं वेति आत्मसमवेतं ज्ञानं विद्मः। तत् अदधातु कामं संविदम्मनः, मनस्सहकारिकः आत्मा तत्र गन्तेति निश्चीयते। न देहः, सर्वेन्द्रियव्यापी जडश्च स इति न गन्तेति। अथवेन्द्रियान्तरैः अनुभूतमर्थं नष्टेपि तत्तदिन्द्रिये परामर्शः, इन्द्रियान्तरसञ्चारः, सोयं शरीरेन्द्रियातिरिक्तस्यात्मनो गमक इत्यर्थः। कश्चित्पुनरप्रतिसमाधेयव्याधिः स्वेच्छया म्रियते, शरीरं न धारयति, अपि तु तत्परित्यजति॥

तदिदं इच्छाऽधारणं नाम, शरीरस्यानात्मतां ज्ञापयति। तिष्ठति शरीरं, अम्रियत देवदत्तः, नाधुना जीवितं व्यवहरन्ति व्यवहर्तारो देवदत्तस्य, तदेतत् शरीरातिरिक्तात्मावगमकम्। भावानां स्वप्नसर्गश्चाख्यापयति अतिरिक्तं शरीरादात्मनम्। तथाचास्त्याम्नायः 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः

सृजते" इत्यादिः । एवं जाग्रदवस्थायां यो मनः प्रेरयति, अव्याप्रियमाणेपि मनसि सुषुप्तावस्थायां यः सुखमज्ञानञ्चानुभवति, कथं सोऽपलपनीयः अस्ति च परामर्शः 'सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इति नीरुजो व्यायामखिन्नस्य युक्ताहारविहारस्य निश्चिन्तस्य प्रबोधे सौषुप्तसुखतमसाः स नातीत्यानुभूतिमुत्पत्तुमर्हति । न वैषोनुभूत्यात्मापरामर्शः विषयासन्निधेः । तदाह तत्वविवेककारः 'सुप्तोत्थितस्य सौषुप्ततमो बोधो भवेत् स्मृतिः । सा चावबुद्धविषया अवबुद्धं तत्तदा तमः' इति । एवं निमेषोपलक्षिताः सर्वाः कायचेष्टा, चेतना चान्तर्वर्तिनी, सर्वप्रकारः प्रयत्नः, नित्यनैमित्तिककाम्यभिन्नकर्मानुसारि पाञ्चभौतिकार्थादानं च भूतधर्मविलक्षणा धर्माः तद्भिन्नमात्मनं गमयन्तीति अभिप्रायः ॥

तत्सिद्धं सङ्घातचैतन्यात्मवादिनां 'शास्त्रदृष्ट्या तूपदेशः अनेकप्रतिपत्तेदर्शनात्' इति । तथा सङ्घातादतिरिक्तं आत्मानं बोधयतां 'शास्त्राणां निर्दिष्टपूर्वाणां दर्शनेन पारलौकिकमहिमोपदेशः' इति वाचक्ष्महे । कश्चिदत्राह 'अग्निहोत्रं त्रयोः वेदाः त्रिदण्डं भस्मगुण्ठनं बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः' । अस्ति चाधुनातनैः विरच्यमानोत्पाद्येतिवृत्तग्रन्थपरम्परा, दृश्यरूपा, श्रव्यरूपा, वा, या आनन्दयत्यागोपालाङ्गनम् । यन्निबन्धनमेवैते रचयितारो दर्शयितारो वा धनवर्षं लभन्ते । तदेवमाद्यनुभवतां नः तामेव दृष्टिं वो ग्रन्थेषु अविशेषेण क्षिपतां शास्त्रदृष्ट्या पारलौकिकमहिमोपदेशोऽनर्थकः प्राप्नोतीति । तत्रोच्यते—नायं दो'षोनेकप्रतिपत्तेर्दर्शनात्' इति । यानीमान्यात्मसाधकान्युपस्तानि शास्त्राणि, नेमानि विषयिमनोनन्दनानि दृश्यश्रव्यग्रन्थनन्दनम् । नतरां च धनलम्भने निमित्तानि । अपित्वादानोपक्रम एवास्वादान् पुरा भूत्कृत्य त्यागार्हाणि, यत्कारणमन्तरन्तरवगाहमना

एवानेका उपपत्तीः प्रतिपद्यन्ते प्रतिपद्यन्ते । न च विषयपिशाचिकापहृतचेतनाः पुरुषाः तत्तदिन्द्रियतर्पणविषयानतीत्यान्यत्र चित्तं व्यापारयितुमुत्सहन्ते । तत्र विषयिमनोनन्दनं धनलाभो वैवज्ञातीयकशास्त्रप्रवृत्तौ निमित्तमिति शास्त्रबोधिता अर्थाः सत्या एवास्थेयाः । यतः परबोधनायैव शास्त्राणि प्रवर्तितानीति । शरीरात् अतिरिक्तमात्मानमवगमयन्ति लिङ्गानि च शास्त्रेषु प्रपञ्चितानि अवोचामेति नासत्यत्वमर्थानां शङ्कितुमवसरः । तस्मात् ये आत्मतत्त्वं बुभुत्सन्ति, तदनु चान्तरन्तः शास्त्रार्थानवगाहन्ते, तेऽनेकाः प्रतिपद्यन्त उपपत्तीरिति पश्याम इति सिद्धम् ॥

अस्त्वात्मा तथाविधः, स कीदृशः स्यादिति मीमांसा, तत्र वदन्ति जीवजातयः विचित्राः दशधा विभज्यन्ते, तथा हि 'प्रथमं स्थावरा जातिः ततः सारीसृपी स्मृता । पक्षिजातिस्तृतीया तु चतुर्थी मृगजातिका, पञ्चमी पशुजातिस्तु षष्ठी चैवान्त्यजा स्मृता । सप्तमी शूद्रजातिस्तु वैश्यजातिस्तथाष्टमी । नवमी क्षत्रजातिस्तु दशमी विप्रसंज्ञिता'. इत्यस्ति आगमः । जङ्गमा इह नव जातयः सार्वाङ्गीणमगच्छन्ति सुखं वा दुःखं वा । तद्यदि आत्मा साक्षात्कर्ता स्यात् तर्हि सर्वाङ्गसम्बन्धिना भाव्यम । अतश्च तत्तत्प्राणिकायसमानपरिमाणः इति युक्तम्, इति अत्राह—अनेकप्रतिपत्तिः प्राणिसामान्याश्रयिणी जन्मान्तरकृतकर्मनिबन्धनेति, अविनाश्यात्मसाधकैः प्रमाणैरवगतम्, तन्न प्रस्मर्तव्यम् । मृगो वा नरो वा सरीसृपाद्या वा यदा म्रियेरन्, अनन्तरजन्मैषां तदन्वभिन्नमेवेति न नियमयितुं प्रभवामः, कर्माणि हि शुभान्यशुभानि वा नानाजातिप्रापकाणीति यतोऽवगच्छामः, अथवैकमेव कर्मानेकजातिषु जन्मकारणमवगच्छामः ॥

तथाहि स्मृतिः 'मृगाश्वसूकरोष्ट्राणां ब्रह्महा योनिमृच्छति । खरपुल्कसवेनानां सुरापो नात्र संशयः, कृमिकीटपतङ्गत्वं स्वर्णहारी

समाप्नुयात् । तृणगुल्मलतात्वं च क्रमशो गुरुतल्पगः । मूषको धान्यहारी स्यात् स्यात् यानमुष्टः कपिः फलम् । जलं प्लवः पयः काकः गृहकारी (चटकाख्यः कीटविशेषः) ह्युपस्करम् । मधु दंशः पलं गृध्रः गां गोधा अग्निं बकस्तथा ! श्वित्री वस्त्रं श्वा रसन्तु चीरी (उच्चैस्वरः कीटविशेषः) लवणहारकः । इत्यादिका तद्यदि नरः कीटत्वं प्रतिपद्यते, प्राचीनंकर्मानुरुध्य गजो वा यदि कीटत्वं, कीटो वा गजत्वं, तदा वक्तव्यं कीटस्यात्मा गजे एकदेशे वर्तते, वर्तते वा सर्वदेशे? इति यद्यसन्दिग्धम्पूर्वेण, तर्हि तद्भिन्नैरङ्गैरननुभवः सुखदुःखादेरापद्येत, अथैतं दोषं परिजिहीर्षुरसन्दिग्धंपरेणेत्याचक्षीत, ततो वक्तव्यं कीटात्माप्यल्पपरिमाणो गजस्य देहं कथं सर्वं व्याप्नुयादिति? अथाचक्षीत अस्त्यस्य सङ्कोचो विकासं चात्मन इति, ततोऽवयववानेष आत्माङ्गीकार्यः तथाभूतश्चासौ विकारी अनित्यश्चापतति, ततश्च कृतानि कर्माणि आत्मानुगुणं फलं अददत्येव नश्यन्ति इत्यापतति ॥

अथाभ्युपगम्याप्यवयवत्वं पृच्छामः गजशरीरं विशन् कीटात्मा कुतः प्रदेशात् अपेक्षितमवयवसङ्घातमाददीतेति? ननु कर्मात्र निदानं तत्तादृक्षशरीरादाने । तदेतत्कर्मोपचितावयवमात्मसमवेतमित्यात्माप्युपचितो भवतीति समाचक्ष्महे इति चेत् तत्तर्हि वक्तव्यम् कर्म वा कुतस्त्यमुपचायकमवयवं आदद्यादिति? एवं गजात्मा यदा कीटशरीरे प्रविशेत् तदा अल्पावयवलेशेनैवैतच्छरीरं पूर्णमिति अवशिष्टो गजात्मा कुत्र गच्छतु? किञ्चान्यत् गजात्मा तच्छरीरपरिमाणरूपावयवसङ्घातस्तच्छरीरे चेतयिता? उताहो एकैकावयवरूपः, नासन्दिग्धं पूर्वेण, कीटशरीरे नैष चेतयेत् यत्कारणमत्र सङ्घातो नास्तीति नतरां चासन्दिग्धं परेण कतमोऽत्र कीटशरीरे प्रविशतु कतमो नेति कस्कोऽत्र नियच्छेत्? अथवा नासन्दिग्धं पूर्वेण, यदैष गज एकाङ्गेन बालधिना

शुण्डया कर्णेन दन्तेन वा विकलः सम्पद्यते, अथवा कालेन बाल्य-यौवनस्थाविरादिभेदवतोपचितावयवयो वा सम्पद्यते नैवैष एतस्मिन् काले चेतयेत् यत्कारणं भिन्नभिन्नः सङ्घात इति । नाप्यसन्दिग्धं परेण अनेके चेतयितारो गजशरीरे वसन्तः किन्निमित्तं ऐकमत्यं भजेरन्? कदाचिदभजमानाः स्युर्लोकवत् इति वक्तुमेव युक्तम् । एतस्मिंस्तु काले अपर्यायं विरुद्धदिक्क्रियै शरीरमुन्मथ्येत । अक्रियं वा शरीरं प्रसज्येत । तदेतत्सर्वं अनुभवविरुद्धमिति सर्वथा अयुक्तोयं सावयवात्म-वादः इति सिद्धम् ॥

अथ कथमस्यात्मनः उपदेश इति? प्राप्ते आह—"शास्त्र दृष्टत्वातूपदेश" इति । उक्तमेव तु शास्त्रं "अहङ्कारस्मृतिर्मेधा . . . . निमेषश्चेतना यत्न· आदानं पाञ्चभौतिकम् । यत एतानि चिह्नानि दृश्यन्ते परमात्मनः । **तस्मादस्ति परो देहात् देही सर्वग ईश्वरः ।**" इति गमकसमर्पकप्रघट्टके सर्वग इति स्वरूपोपदेशः । ईश्वर इति महिमोपदेश. शक्त्युपदेशश्च देहीति साधनोपदेश, इति विवेकः । अथ कथं सर्वग एष आख्यायते? यावता तत्तद्देशकोणग एवैष चेतयन् दृष्ट इति । तत्राह–असम्बद्धामिदं **दृष्ट** इति, **न** ह्येष रूपसमवायी रूपात्मा वेति । एवमेव त्वाख्यातव्यं "देहो न चेतयिता जडो हि स इति, चेतना चोपलब्धा प्रवृत्त्यादिभिः अतोत्र चेतयित्रा भाव्य"मिति ॥

स एष देवदत्तोन्यो वा गृहे रथ्यायां आपणे वनगिरिनदी-प्रभृतिषु देशविशेषेषु कालविशेषेषु च चेतयन् प्रवृत्त्यादिभिरेवोह्यते इति तत्तादृशेषु देशेषु तत्तादृशेषु कालेषु च आत्मास्तीत्यवश्यमभ्युप-गन्तव्यम् । अत्रोच्यते नैवमभ्युपगन्तुमर्हामः, सर्वत्रास्तीति । अथ कथं प्रवृत्त्यादयः सिध्यन्ति? शरीरगमने आत्मापि गच्छतीति नावश्यं

सर्वत्रावस्थितेनैवात्मना भाव्यमिति प्रवृत्त्यादयः सिध्यन्ति इति । अत्र प्रष्टव्यम् । गमनं तत्र तत्रात्मनोऽवयविनो भवति? उताहोऽनवयवस्यैवेति? यद्यवयवी स एषोऽङ्गीक्रियेत, उक्तचरात् गजकीटशरीरप्रवेशविकल्पात् नोद्धर्ता सिध्यतीति नासन्दिग्धं परेण, अनवयवस्य गमनं प्रामाणिकं नास्तीति । ननु गुणी अनवयवा· गुणिगमने गमनवन्तो भवन्तीति चेत् तर्हि आत्मा कस्य गुण इति विवेक्तव्यम् । यदि शरीरगुणः यावच्छरीरं अनेन स्थातव्यम् । अथ तद्गुणत्वेपि आगन्तुक एषः? कुत आगच्छति इति प्रश्नः । यतः कुतश्चिदागमेपि प्राक् शरीरसम्बन्धात् कुत्रैष समवेतः सन् शरीरमागच्छतीति प्रश्नः, किन्निमित्त च समवायिनमन्यं परिहाय शरीरमाश्रयतीति प्रश्नः, वा दुरुत्तर इति न गुणदृष्टान्तेनार्थः सिध्यति ॥

अथ गुण उत्पद्यते आत्मरूप इति मतम्, तदपि प्रत्युक्तम् सुखदुःखाद्यनेकप्रतिपत्तिवैचित्र्यप्रदर्शनेन तस्मात् सर्वत्रोपलब्धिः प्रवृत्त्यादीनां चेतयितुः सर्वत्र देशे काले च सत्त्वं लिङ्गम् । अत्रोच्यते यदि सर्वगो देवदत्तात्मा, यज्ञदत्तविष्णुमित्रादिशरीरेष्वपि गत इति तदीयसुखदुःखादीनामप्युपलब्धापतति । अत्यल्पमिदमुच्यते, अमूमेव सरणिमास्थाय सकलस्वर्गेषु वैकुण्ठकैलासादिषु तामिस्रादिनरकेषु च ॥

"तामिस्रं लोहशङ्कश्च महानिरयशाल्मली । रौरवं कुड्मलं पूतिमृत्तिकं कालसूत्रकम् । सङ्घातं लोहितोदश्च सविषं सम्प्रतापनम् । महानरककाकोलं सञ्जीवननदीपथम । अवीचिमन्धतामिस्रं कुम्भीपाकं तथैव च । असिपत्रवनञ्चैव तपनश्चैकविंशकम् ।" इत्यादिशास्त्रावसेयेषु गत इति तत्तादृशानां सुखानां दुःखानाञ्चोपलब्धापतति । अत्र तामिस्रः=अत्यन्ततमो बहुलः । लोहमयशङ्कवोऽनवरतं यत्र सर्वगात्रेषु निखन्यन्ते=स लोहशङ्कुः । महता रयेण वेगेन नितरां यत्राजस्रं क्षेपणं

=स महानिरयः। ताम्रमया अग्निवर्णाः शल्मालिद्रुमाः कण्टकिनो यत्र परिष्वज्यन्ते=स शल्मली। यत्रास्थीनि भित्वा रुरुवत् तप्तानि लोहशृङ्गाणि उत्तिष्ठन्ति=स रौरवः। यथा पद्मादि अविकसितं पिण्डी-भूतमास्ते, तद्वत् यत्र सर्वाङ्गानि सम्पीड्य कुड्मलीक्रियन्ते=स कुड्मलः। पूतिमृत्तिकम्=अतिदुर्गन्धिमृत्तिकं। कृष्णसूत्रे प्रोता यत्रान्तरिक्षस्थाः धार्यन्ते तच्च सूत्रमविरतं नित्य चाल्यते–स काल-सूत्रकः। व्रीहिघातं मुसलाभ्यां यत्र द्वाभ्यां हन्यते–स सङ्घातः। सर्वेषूदककार्येषु लोहित यत्र–स लोहितोदः। सविषाः सर्पा यत्रानवरतं भक्षयन्ति–स सविषः। प्रकर्षेणान्तः बहिश्च तापनवत्–स सम्प्र-तापनः। कालसूत्रादिनरका येन लघूक्रियन्ते–स महानरकः। लोह-तुण्डैः काकोलूकैर्यत्राहर्निशं तुद्यन्ते–स काकोलः पुनः पुनर्मृतं सञ्जीव्य सञ्जीव्य यत्रानेकविधैः प्रकारैः प्रमाण्यन्ते–स सञ्जीवनः। वैतरणी नाम नदी पूयप्रायोदका, पन्था यस्य नरकस्य–स नदीपथः। अधोमुखा गर्तेषु अङ्गारपूर्णेषु निखाता दावाग्निना यत्रोप-ज्वाल्यन्ते—सोवीचि। तमिस्रायामिव अन्धसर्पाः सन्तः यत्र शकटैः सञ्चूर्ण्यन्ते—सः अन्धतामिस्रः। यस्मिन् तालवने खड्गधारावत् तीक्ष्णानि पत्राणि—सोऽसिपत्रवन। अतिप्रचण्डं सवितारं विना यत्र किमपि भूतं नाति—स तापनः। इति पदार्थविवेकः इतो-प्यधिका नरका देवीभागवतादौ प्रतिपादिता यमसावित्रीसंवादादौ तत एवानुगन्तव्या विस्तरभयान्नेह प्रतन्यन्ते। नैव चैतत्साम्प्रतम्, यत् षट्कर्माभिरतः श्रोत्रियोऽत्यन्तपरित्यक्तनिषिद्धाचरणो देवदत्ता-स्मैवज्ञातीयकान् नरकान् यातीति। यत्कारणं पापिनां भोगायैवेते स्थापिता इत्यवगच्छामः। तथाच स्मृतिः—'महापातकजैर्घोरैः उपपातकजैस्तथा। अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः'।

इत्यादिकी । आत्मावयवित्वसर्वगत्वपक्षद्वय दुष्टं ज्ञात्वा मध्यस्थः शङ्कते। नन्वात्मा यद्यवयवी, अनित्य आपद्येतेति कृतहानिः अकृतागमश्च दोषः । यद्यनवयव. सर्वग', सर्वानुभवापत्तिः, इति अवतप्ते नकुलस्थितमिति अविचाररमणीय एवैवञ्जातीयोर्थ इति तूष्णीमवस्थितिः समीचीना, यतोऽन्यथा मनः कलुषीभवतीतिचेत् । साक्षेपसमाधान आत्मनः सर्वगत्वेपि अनतिप्रसक्तानुभवसमर्थनम् । परिहृतमेतत् सर्वगत्वपक्षे देहीत्युपदेशं प्रदर्शयता उपलब्धिसाधनं देह' । न च देवदत्तदेहः सर्वगः नातः सर्वतोपलब्धिरस्य सावयवात्मवादितनैरापादनीया । नन्वेवमपि अतिप्रसज्येतैवानुभवः । यत्र गृहकोणे विष्णुमित्रो सुखं दुःखं वान्वभूत्, ततः तस्मिन्नपसृतवति तत्रागत्य यज्ञदत्तोपीमे उभे अनुभवेत्, तत्कोणावच्छिन्न आत्मा देही अनुभवे हेतुः, यथा विष्णुमित्रात्मेति अनुभवामो यतः, इति चेत् । तदिदमपि परिहृतं देहीत्युपदेशं प्रदर्शयतैव । दिहातिर्ह्युपचयार्थ. । स्थूलोपि देह उपचीयते सूक्ष्मोपि, तथाचाम्नायः "योमध्यमः तन्मांसं योऽणिष्ठः तन्मन' इति नह कोणावच्छिन्न आत्मा अनुभवे निमित्तम् । अपि तु सूक्ष्मशरीरावच्छिन्न एव । नचातो विष्णुमित्रोऽपसर्पन् सूक्ष्मं देहं त्यक्त्वाऽपसर्पति, येन यज्ञदत्तः तत्र गच्छन् तेन विष्णुमित्रस्य सूक्ष्मदेहेन ते उभे अनुभवेत् । तस्मादनुक्तिसहोयमाक्षेप' ॥

## सूक्ष्मदेहस्य सर्वानुभवसाधनत्वस्थापनम्.

नान्विदं अयुक्तं, देह उपचीयत इति अस्मिन्नर्थे मनस उपचयबोधक आम्नाय उपन्यस्त इति । न च वाच्य मन एव सूक्ष्मो देह इति, यत आहुः प्रामाणिकाः—पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । शरीरं सप्तदशभिः सूक्ष्माङ्गं भोगसाधन'मिति । इति चेत्—नायं, दोषः, मनःप्रधानो हि सूक्ष्मो देह इति । मनश्च तैजसं, विचित्र-

शक्तिरूपं । यानि यानि कर्माणि कर्तव्यत्वेन शास्ति आम्नायः, तदनुसाराणि वा शास्त्राणि स्मृतिसूत्रात्मकानि, पुराणानीतिहासा वा, तानीमानि तथा तथैवानुतिष्ठतो मनसि भिन्नभिन्नाः शक्तीरादधति तान्येव कर्माणि । यानि च हेयतया निषेधति आम्नायस्तदनुसारीण्यन्यानि च शास्त्रादीनि, तानीमानि च अनुष्ठीयमानानि अनुष्ठातुर्मनसि विचित्रा शक्तीरादधति ॥

एवं विधायकानि वा निषेधकानि वा सर्वाण्यास्तिकानां ग्रन्थजातानि, साक्षाद्वा प्रणालिकया वा यानि चतुर्दशविद्यास्थानानीति कथ्यन्ते 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराण धर्मशास्त्रञ्च विद्याह्येताश्चतुर्दश' इति । इह पुराणान्यष्टादश, उपपुराणानि च धर्मशास्त्रञ्च मन्वादिप्रोक्तमनेकसङ्ख्याकम् ॥

तदाह वृद्धयाज्ञवल्क्यः 'भूयांसो धर्मवक्तार उत्पन्ना भाविनस्तथा । निधानं सर्वधर्माणा वेद एव हि शाश्वतः' इति । अत एवाश्वमेधिके पर्वणि अष्टादशस्मर्तॄन् विहाय बहवः स्मर्तारः कीर्त्यन्ते । तथाहि 'औमामहेश्वराश्चैव नन्द्रिधर्माश्च पावनाः । ब्रह्मणा कथिताश्चैव कौमाराश्च श्रुता मया । धूम्रायनकृता धर्माः काण्वा वैश्वानरा अपि । भार्गवा याज्ञवल्क्याश्च मार्कण्डेयाश्च कौशिकाः । भरद्वाजकृता ये च बृहस्पतिकृताश्च ये कुणेश्च कुणिबाहोश्च विश्वामित्रकृताश्च ये । सुमन्तुजैमिनिकृताः शाकुनेयास्तथैव च । पुलस्त्यपुलहोद्गीताः पावकीयास्तथैव च । अगस्त्यगीताः सौधन्याः शाण्डिल्याः सौलभायनाः । बालखिल्यकृता ये च ये च सप्तर्षिभिः कृताः । वैयाघ्रा व्यासगताश्च विभाण्डककृताश्च ये । तथा विदुरवाक्यानि भृगोराङ्गिरसस्तथा । वैशम्पायनगीताश्च ये चान्ये एवमादयः' इति, एतेभ्योन्ये च स्मर्तारः क्वचित् आख्यायमाना विस्तरभयान्न लिख्यन्ते । तत्सिद्धमनेकसङ्ख्याकं धर्मशास्त्रमिति ॥

धर्मशास्त्रत्वादितिहासा अप्युपलक्षिताः । अत एव स्मरन्ति 'बिभेति अल्पश्रुतात् वेदो मामयं प्रतरिष्यति । इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति' । तस्मात् एवञ्जातीयकैः प्रमाणैः यानि विधीयन्ते निषिध्यन्ते वा कर्माणि, तानि सर्वाणि अनुष्ठीयमानान्यनुष्ठातॄणां मनस्तु विचित्रतराः शक्तीरादधतीति ताभिः शक्तिभिः उपचीयन्ते मनांसि इति, तत्तच्छक्तिकृता उच्चावचाः फलावाप्तयो भवन्तीति च तदिदं सर्वमभिहितम् 'देही सर्वग ईश्वरः' इति ॥

आत्मनः पुण्यकर्माहितशक्तिजन्यमहिमवर्णनम् ।

अस्ति सावित्रीसङ्कथा पुराणगीता. सा यथा कालधर्मं गतं पतिं पातिव्रत्यमहिम्नान्वसार्पीत् धर्मराजेन नीयमानं । वारयन्तीहैनां धर्मराजः कर्मशक्तिं विविधां मनस्याहितां उच्चावचफलान्यादधानाम् । तथाहि 'कर्मणा जायते जन्तुः कर्मणैव प्रलीयते । सुखं दुःखं भयं शोकः कर्मणैव प्रणीयते । कर्मणेन्द्रोभवेज्जीवः ब्रह्मपुत्रः स्वकर्मणा । हरेर्दासः जन्मादिरहितो भवेत् । स्वकर्मणा सर्वसिद्धिममरत्वं लभेद्ध्रुवम् । लभेत् स्वकर्मणा विष्णोः सालोक्यादिचतुष्टयम् । सुरत्वञ्च मनुत्वञ्च राजेन्द्रत्वं लभेन्नरः । कर्मणा च शिवत्वं च गणेशत्वं तथैव च कर्मणा च मुनीन्द्रत्वं तपस्वित्वं स्वकर्मणा इत्यादि ॥

इह चान्यत्र चाचाण्डालं मनुष्यमात्रकर्तव्यानि चातुर्वर्ण्यानुबन्धीनि आश्रमानुबन्धीनि च कर्माणि तानि तानि तत्तादृक्षफलान्याख्यायन्ते, यानि फलानि अस्मादृशैः अत्यन्तमविदितानि, अतिविचित्रशेमुषीकैरपि अचिन्त्यकल्पनानि भवन्ति । विस्तरभयादुपरम्यते । दिङ्मात्रन्तूक्तम् ॥

किं बहुना । अन्तत एषा सावित्री वरेणैतदर्थितेनैवमनुगृहीता 'सत्यवतः औरसानां पुत्राणां शतकं मम । भविष्यति महाभाग वरमे-

॥ श्रीः ॥

# मुखरमुखमुकुरम्.

## (प्रहसनम्)



(अथ प्रविशति कश्चित्कराळः कालायसछविस्सप्तारत्निमात्रः तावतैव परिणाहवान्, कडारशिथिलसितकेशपाशः पृथुघोणसंपिष्टाधरः, विशङ्कितदृष्टिः, कर्णान्तव्यात्तवदनकुहरदरीदृश्यमानविरळवक्रदशनः चाषपक्षप्रतिमानकायछविः, अकारणाविष्कृतदौर्जन्यप्रतिभयपलायितजननिवहः । पश्चिमे वयसि वर्तमानोऽपि वयस्यपश्चिम इवाभिनयन्, करांगुळिछोटिकासूचितकार्यनिर्णयः, सभाध्यक्षपदलाभविक्लचेताः, स्वसमानवेषचेष्टानिष्ठुराभ्यां संभूय कार्यदर्शिभ्यां कोपनोन्मादाभ्यां धनामिषगृध्नुभिरन्यैस्सदस्यैः परीवृतः सभाप्राङ्गणं सगर्वं किंचिदिव परिवृत्यावलोक्य)—

**अये**—कोपन अपि सिद्धं क्रियातन्त्रम्? प्रचलेदपि निष्प्रत्यूहम्?

**कोपनः**—ओं । ओं । किं तु केचन श्रद्धाळवो वैदिकाः पराङ्मुखा भवंतीति मन्ये, नानुमन्वते च संप्रदायविप्लवम् ॥

**कराळः**—अहो वैदिकानां जाड्यं, न जानते देशकालवैषम्यं, केवलमुष्ट्रासिकया समासते, (सकोपं हस्तौ निष्पिष्य) तदनुयायिभिः किं फलमनुभूयते (सोन्मादं) सैषा पुनरेषां निरर्थिका श्रद्धा । केचन प्रतारणकुशलाः कल्पयांचक्रिरे स्वार्थाय प्रबन्धजालं, श्रुतिमात्ररमणीयं, देशकालविरोधि च । (साक्षपं) आस्तामेतत् । अये उन्मादसाधिते पुनरस्मदभिमतार्थे प्राशिथिलाभवेयुर्वैदिकाः । अवश्यमेव साधनीयानि संततिवृद्धिनिमित्तानि सुखसाधनानि ।

सन्तु ते वेदजडाः प्रचीनाः। सन्ति खलु बहवोऽप्यस्मदभिमतानुमोदनपराः विश्रृङ्खला नवीनाः। स चैषसमयस्सुकरस्सर्वसाधनाय। नेदानीं साधितं चेदभिमतं नान्यदा कदाचिदपि संसिद्ध्येत् (साचिन्तम्) अहो! विपक्षा अपि प्रबला इति ममापि शङ्कास्थानं, तिष्ठन्त्वेते छान्दसाः अहो! दौर्जन्यं वेदजडानां। यैरनर्थकायासफलानि अविचाररमणीयानि कानि चिद्वाक्यान्युपदिश्य पशूकृतास्सर्वेऽपि। अतीतप्रायस्स खलु समयः। स्वतन्त्रा एव यथाकामं विचेष्टन्ताम्। निखिलोऽपि कोपन प्रस्तूयतां प्रासङ्गिको विषयः। मदीया एव प्रथममुपन्यस्यन्तु (परिवृत्य) पशुलोमन् मदभिप्रायमेव ये समर्थयन्ति त एव प्रथमकक्ष्यापारितोषिकग्राहिणः नान्ये। तथा समाहितेन भवता विलिख्यन्तांत्तन्नामानि। सर्वमपि निभृतं च सुकरं च यथाभवेत् तथा साधनीयम् (इत्यादिश्य सर्वाङ्गीणविलोचनः प्रवर्तयामास कार्योपक्रमम्) ॥

इति प्रस्तावना.

---

(अथ प्रविशतः सत्यकामः श्रुतधरश्च)

**श्रुतधरः**—सखे! सत्यकाम धर्मतत्त्वबुभुत्सुभिः कैश्चन महाशयैः पण्डितपरिषन्मेळनं क्रियत इति महान् परितोषः। तदेतन्निकषोपलः प्रज्ञासुवर्णस्य ॥

**सत्यकामः**—सखे! यद्यन्तरापक्षपरिग्रहो न स्यात् ॥

**श्रुतधरः**—इयता धनव्ययेन महता परिश्रमेण च समारब्धे कर्मणि कुतः पक्षपातस्यावकाशः ॥

**सत्यकामः**—विश्रृङ्खलाः खलु ते सनातनधर्मप्रतिरोधिनः ॥

**श्रुतधरः**—नानादिगन्तागताः पण्डिताश्च कथमनुमंस्येरन् धर्मविप्लावकं पक्षपातम् ॥

**सत्यकामः**—अये! अन्वर्थनामा भवान्। न जानीषे लोकतन्त्रं वित्तदासानाम्। पांडित्यं दुराग्रहसमानाधिकरणं। जागृत्सु पूर्वोत्तरमीमांसापदवाक्यरहस्येषु विचारणीयेष्वपि किमिदमारब्धं महाजनैः। नन्वयमेव प्रसङ्गः प्रत्याययति पक्षपातं। विश्रान्तमानसाः केचन यथाकामं विचेष्टन्ते ॥

**श्रुतधरः**—धिक् प्रहसनम्। आः पुरोभागिन्। लोकहिताय प्रवर्तितेऽप्यस्मिन्नुपक्रमे कुतस्तवैकस्य पक्षपातशङ्का। समाहितो भव ॥

**सत्यकामः**—भोस्सत्यवादिन् ननु पृच्छामि आर्तवानन्तरविवाहकरणेन पतितसङ्ग्रहेण च कीदृशं लोकहितं संपाद्यते। नाममात्रावशिष्टस्यापि ब्राह्मणधर्मस्य वध्यशिलारोपणमेव प्रथमं प्रयोजनमस्य। तदेतदधुनातनानां स्वमनीषामात्रपरिस्फुरितकुतर्कोपपादितधर्मसेतुभङ्गानाम् अनुकामीनं विचेष्टितं। भवादृशा अपि सखे मुह्यन्तीति चित्रं। समाधत्स्व ॥

**श्रुतधरः**—सखे! मर्षय मर्षय। आवां प्रेक्षकौ। तत्र गत्वा विभावयावः। किंच ब्रह्मतेजःप्रदीप्तानां विप्राणां दर्शनेन तावदात्मानं पुनीवहे ॥

**सत्यकामः**—यथाभिरुचितं सुहृदे (उभावग्रतोऽवलोक्य) कथमुपक्रान्त एव प्रश्नप्रतिवचनयोरवकाशः विपश्चिताम् ॥

**सत्यकामः**—(निपुणमवलोकयन्) सखे। ताविमौ शामशबलौ भार्गवान्तेवासिनौ। तेन गुरुणा विनिर्मितगंधर्वनगरीविचित्रसन्निवेशोपन्यासाय प्रोत्साहितौ। अर्थदासाभ्यामाभ्यां किमपि समारब्धं सन्तताभ्यस्तकिंचित्पारिभाषिकशब्दवाचाटावेतौ किमपि जल्पतः। दत्तावधानौ शृणुवः ॥

**शामः**—(सावष्टंभं समालम्बितकाष्ठदण्डः संरम्भोन्नतमुखः आकुञ्चितकरांगुळिमभिनयन्) भोभोः! स्मार्तश्रुति–श्रुतिलिंगयोःप्राबल्यदौर्बल्यसमर्थनाय किंचिद्व्यलेखि मया। तदिदमुपपाद्यते। दत्तावधानाः श्रुणुत। (शाममास्फाल्य भुजयोः शबलः स्मारयामास)॥

गुरुणा भार्गवेण लिखितां गंधर्वनगरीमधिकृत्यैव प्रस्तूयतां विषयः॥

**शामः**—सम्यगनुस्मारितोस्मि। अयमत्र प्रासंगिकः। विवाह्यकन्यावयोनिर्णये मान्त्रवर्णिकं लिङ्गमेव प्रमाणं। न त्वष्टवर्षां विवाहयेदिति स्मार्ती श्रुतिः। यद्येवं नाङ्गीक्रियते 'अश्विनौस्तनौ रक्षत्वि' ति प्रार्थयमानो भर्ता कुमारीमव्यञ्जितस्तनी पुरो निधाय कथं ब्रूयात्। (इति ससंरम्भं स्वानवलोकते। सर्वे सहस्तताळं श्लाघन्ते)॥

**कश्चित्पारिषद्यः**—(सहसोत्थाय) यद्यनेन श्रुतिशकलावष्टम्भेनर्तुमतीविवाहस्साध्येत तत्पुरःस्थितेन वाक्येन 'स्तनंधयं ते सवितािभिरक्षतु' इत्यनेन पुत्रवतीविवाहोऽपि तुल्ययुक्त्या सिद्ध्यत्येव॥

**शामः**—नहि नहि। पूर्वं विवाहस्ततः पुत्रोत्पत्तिरिति संहितायां क्रमो निरूपितः॥

**पारिषद्यः**—समानयोगक्षेमत्वाद्वचनयोः भवदुदीरितानुपपत्तिरत्रापि जागर्त्येव॥

**शामः**—(किंचिदिव ध्यात्वा) स्यान्नाम। तावतापि का नो हानिः। किंच स्फुटमुदैरयन्मनुरपि सहोढस्य दायभागं तदेतज्ज्ञापकमस्यार्थस्य। (सर्वे सलज्जमधोमुखास्तिष्ठन्ति। प्रतिब्रुवन् पारिषाद्यः घण्टारावेण निवारितः)॥

**शामः**—(सकोपाटोपं बाहू विधून्वन् देशं च कालं च प्रमाणमात्मानं च विस्मृत्य किमपि किमप्युच्चैरुज्जगाद) पाणिग्रहणाधिकरणश्रुतेः अश्वप्रतिग्रहाधिकरणस्य च पाणिनीये हयवरट् । समावेशनाधिकरणपश्वेकत्वाधिकरणयोः उपक्रमाधिकरणन्यायेन जबगडदश्। ऋतुमतीविवाहाधिकरणस्य कपिंजलाधिकरणस्य च झभघढधष् । कथमिति व्यावल्गति । (सभाध्यक्षः सचमत्कारं शिरः कम्पयति साधु साधु प्रपंचितमिति च श्लाघते) ॥

**श्रुत**—किमुपन्यस्तमनेन वाचाटेन ॥

**सत्यकामः**—(किञ्चिद्विहस्य) किन्न विदितं माहेश्वरसूत्राणां ऋतुमतीविवाहपरत्वमभिधाय मीमांसाशास्त्रस्य तदनुवादकत्वमाविष्कृतम् । शास्त्राण्येतानि समार्थकानीति हृदयम् ॥

**श्रुतधरः**—किमिदमसांप्रतमभिधीयते ॥

**सत्यकामः**—इदानीमध्यक्षैरनुमोदितं सांप्रतमेवैतत् ॥

**श्रुतधरः**—क एते तद्व्यपदेशिनस्सव्यदक्षिणनिर्विशेषवृत्तयः । संशसकास्त एते यथाकामं विचेष्टन्ते (पुरोवलोक्य अङ्गुल्या निर्दिश्य) सखे शबलो वल्गति ॥

**सत्यकामः**—वैतसवृत्तिरयं बलिदानानुरूपं किमपि विचेष्टते ॥

**शबलः**—(सोन्मादं मुखमुन्नमय्य) श्रुणुत सभाध्यक्षाः विवाहो नाम समावेशनमेव। तदेतत् सप्रपञ्चं निरूपितं पूर्वतन्त्रे । श्रौतं लिङ्गमपि तमेतमर्थं समर्थयति । (यस्यां बीजं मनुष्या वपन्ति), तदर्थं ऋतुमतीविवाहः प्रशस्ततमः । अन्यथा बहुवचनवैयर्थ्यापत्तेः । कृष्णलंपचतीत्यादौविक्लित्यदर्शनात् ॥

**पारिषद्यः**—(तावद्विवाहयेत्कन्यांयावन्नर्तुमतीभवेत्) इति प्रत्यक्षश्रुतिविरोधादृत्वनन्तरविवाहो न साधीयान् । अन्यथासिद्धं श्रुति-

लिङ्गं । विनियोजकश्रुत्यनुरूपमेवार्थं गमयति । दुर्बलयति च भवत्पक्षं ॥

**शबलः**—मैवं । नर्तुमतीभवेदित्यत्र । ना ऋतुमती भवेदिति पदच्छेदः । ना पुरुष इति व्याख्यायते । इत्थंच पुरुषः यावत्कन्या-ऋतुमती भवेत् तावद्विवाहयेत् । जरतीनां विवाह्यताभावो ऋत्वभावादेवेति संप्रतिपन्नोऽयमर्थः लोकेऽपि । अथवा । गृहैक-त्वाधिकरणन्यायेन लिंगवचनमतन्त्रं । कस्यैव कथमिदानीम् (इति साट्टहासगर्वमवलोकते सभाध्यक्षं) ॥

**अध्यक्षः**—(सश्लाघं) शबल पात्रभूतोऽसि पारितोषिकस्य (इति सबहु-मानमालोकते । पारिषद्यस्तु निर्वेदान्निववृते पश्चात्) ॥

**सत्यकामः**—श्रुतधर सखे दृष्टा वा धर्मविविदिषा सभाध्यक्षाणां । उपच्छन्दितानां पंडितम्मन्यानां वाक्यार्थसरणिश्च ॥

**श्रुतधरः**—पूर्णा मे मनोरथा (इति सविषादमास्ते) ॥

**कश्चिन्नागरीकः**—(रांकवं समीकुर्वन् ससंभ्रममुत्थाय) साध्यक्षास्सभा-स्ताराः । प्रासंगिकेषु विषयेषु बहवः प्रबंधा मयैव लिखिताः । तदत्र किंचिन्निवेदयामि । अस्ति मे द्वितीयं हृदयं भार्गवो नाम । तेन लिखितायां गन्धर्वनगर्यां समुदीरितम् । यत्समावेशनं मुख्यमङ्गं विवाहस्य । तदभावेनाङ्गलोपे प्रधानमफलं भवेत् । अतो ऋत्व-नन्तरविवाह एव श्रेयान् । इति । तदनुमोदितं पारस्करेण । अप-रार्कोऽपि मनुते । राणः सिद्धवत्कृत्य वदति—गोविंदस्वामी डिंडिममाहत्य घोषयति । सर्वमपि पिंडीकृत्य समावेशनार्थमेव विवाह इति निश्चीयते । समावेशनं मिथुनीभाव इति रहस्यम् ॥

**श्रुतधरः**—किमयमसंगीतकं नृत्यति ॥

**सत्यकामः**—नर्तयन्त्येनं नस्योतमिव गावृषं ॥
**कश्चित्पारिषद्यः**—कश्चित्पारिषद्यः किमहो गन्धर्वनगरीमवलंब्य यद्येवं निगद्यते तर्हि तस्यामेव आष्टमाद्वत्सरात् आद्वादशं विवाहस्य मुख्यः काल इति प्रतिपाद्यते। मुख्यकालेष्टमनवमादौविवाहितानां भवदभिमतसमावेशविलोपात् विवाहस्यैव लोप इति वक्तव्यम्। अस्तु वा तदपीति चेत्। कस्स चेतनः नवाष्टवर्षदेशियां कन्यामुदूह्य भवदभिमतसमावेशनाय प्रयतेत ॥
**नागरिकः**—(किमपि प्रतिवक्तुकाम इव गद्गदिकावरुद्धकण्ठः) न—न—न (इत्यर्धोक्त एव विरमति। प्राहसीत्फुल्ललोचनो विपश्चिद्गणः) ॥
**कश्चित्कोपनः**—(सहसाभ्युपेत्य ससंरंभं पारिषद्यं निवार्य) अलमलमेतावता। सिद्धप्रायोऽस्मदभिप्रायः। पशुलोमन् विलिख्यतामृतुमतीविवाहस्सर्वसम्मत इति प्रस्तूयतामन्यो विषयः। (सोन्मादं सभामालोक्य) पंडितमहाशयाः समुद्रयायिनां मतांतरप्रविष्टानां च संग्रहे कीदृशं श्रुतिलिङ्गं तन्त्रेषु प्रतिपाद्यते। विचार्यताम् (इत्यभिधायान्तर्हितः) ॥
**श्रुतधरः**—सत्यकाम कीदृशं पूर्वतन्त्रम् ॥
**सत्य**—अनर्थरमणीयं तदिति ॥
**जितकाशी**—(ससंभ्रममुत्थाय वेपमानाधरः स्विद्यल्ललाटः स्खलन्नूर्ध्वदृष्टिरभ्यर्णमासाद्य सदसः नातिस्फुटाक्षरं) मया पूर्वमेव विचारितोऽयमर्थः। सिन्धुयायिनो गृहीतप्रायश्चित्ताः तद्भिन्नाश्चेति द्विप्रकाराः। तत्र ये यज्ञोपवीतानि पंचगव्यं तीर्थमृत्तिकां दक्षिणाद्रव्यं च संगृह्य नौकायां यान्ति न तेषां पापलेशोऽपि लगति। अतः प्रबन्धकारैस्समुद्रयायिनां प्रायश्चित्तमनाभिहितम्। ये पुनः पूर्वोक्तानि प्रायश्चित्तद्रव्याणि परित्यज्य यान्ति प्रतिनिवृत्तेभ्यः

प्रायश्चित्तद्रव्याणि दत्वा संग्रहः कर्तव्य इति हि राद्धान्तः। अस्यार्थस्य प्रसिद्धत्वादेव न विशिष्याभिधानं कृतं। सर्वत्र प्रसिद्धोपदेशादिति हि बादरायणीयं सूत्रमत्र ज्ञापकं (सर्वे सहस्तताळं प्रशंसन्ति) समाहिताः भवत। पतितसंग्रहे किंचिदुपपादयामः। पतितानां यदि जातिभ्रंशस्स्यात् तदा प्रायश्चित्तमभिहितं धर्मशास्त्रेषु। तच्च सुतरामेव न घटते। यावद्व्यक्तिदर्शनं तावज्जातिभ्रंशः कथमुपपद्येत। जातिव्यक्त्योः नित्यः संबन्धः। इति शास्त्ररहस्यम्। इत्थं च व्यक्तेरभाव एव शास्त्रीयो जातिभ्रंशः। तदानीमेव प्रायश्चित्तमिति विवेकः। तस्माद्यावद्व्यक्तिदर्शनं संग्राह्या एव ते। अस्माभिर्महाब्राह्मणैरमुमेवार्थं मनसि निधाय सार्ववर्णिकः संसर्गः कर्तव्य इत्येव निर्णीतं। यदि कश्चित्प्रतिवादी स्यात् पुरतःसमागच्छतु। (सभाध्यक्षः रोमाञ्चकञ्चुकितः श्लाघयामास। सानन्दमभ्यनन्दन् तत्पक्षीयाः)॥

**सत्यकामः**—सखे! दृष्टा वा धर्मविविदिषा दुरात्मनाम्॥

**श्रुतधरः**—(सविषादं निश्वस्य) धर्मकंचुकिनामेषां को वेद हृदयं। संशप्तकैरेभिः परमार्थदर्शिनः प्रत्याख्याता इति विषीदिति मे हृदयम्॥

**सत्यकामः**—नात्र विषादस्यावकाशः प्रियमांसमृगाधिपोज्झितः किमवद्यः करिकुंभजो मणिः॥

**अध्यक्षः**—पण्डितमहाशयाः श्वः सार्धैकहोरायामेव सभाकार्यमारभ्यते। तत्पूर्वमेवागन्तव्यम्। (इत्यनालोकितकेननिष्क्रांत एव)॥

**श्रुतधरः**—पर्यवसितेऽपि विचारे किं निमित्तं पुनर्मेळने। किमवशिष्यते तन्निमित्तं। यत् समूलघातं घातयेद्ब्राह्मण्यम्॥

**सत्यकामः**—नातिनिगूढोऽयमर्थः । प्रायशः पल्लवग्राहिपाण्डित्यस्य पारितोषिकप्रदानायेति अलमेतावतैव सिन्धुसंभेदमवगाह्य प्रतिनिवर्तावहे । (उभौ किंचिदन्तरं गत्वा) सखे! श्रुतधर दक्षिणेन कावेरीतटमालाप इव श्रूयते । निभृतं निभालयावः । स्त्रैणसंमुचितकण्ठविरावः । अतिरहस्यार्थभेदको हि योषितामालापः (इति निगूढौ स्थितौ) ॥

**सुशीला**—अयि चतुरिके! अपि जानासि परिषदुपक्रमं । निमित्तं च ॥

**चतुरिका**—कथं न जानामि? प्रविशतां निर्गच्छतां विहसतां विषीदतां कुप्यतां सांत्वयतां पंडितानां कोलाहलेन बधिरीकृतं मे कर्णकुहरम् उत्पादितं च शिर शूलम् ॥

**सुशीला**—ननु फलितं पृच्छामि महतोऽस्य परिषदुपक्रमस्य ॥

**चतुरिका**—ननु फणामि बधिरीकृतं कर्णकुहरमिति ॥

**सुशीला**—किंवदन्ती पुनर्बलीयसी कश्चिदभिनवोऽर्थो निर्णेष्यत इति । घोषयन्ति च चत्वरे चत्वरे यथाश्रुतग्राहिणः ॥

**चतुरिका**—(सभ्रूभंग) आं निर्णेष्यते । भट्टत्रियंबकप्रभृतिभिरौत्तराहैः श्रीमदप्पयदीक्षितप्रभृतिभिर्दाक्षिणात्यैः श्रुतपारदृश्वभिः संप्रतिपन्नर्थेषु विषयेषु शिष्टैरनुमोदितेषु च इदानीन्तनानां प्रत्यग्राभिनिविष्टदुरापूरतर्काणां । त्रिचतुरवचनभ्रमोद्बलिताभिसन्धीनाम् अनधीतवेदवैदिकसांप्रदायिकग्रन्थानां केषांचिद्दुस्वप्न एवायमुपक्रमः ॥

**सुशीला**—सखि? किन्नु भवेदेतेषामसंगीतकनर्तनरहस्यम् ॥

**चतुरिका**—यद्युपाध्यायिनी समागच्छति सर्वथा त्वमधिगतार्था भवसि । सा हि सरळस्वभावा रहस्यमपि निरवशेषं कथयत्येव ॥

**सुशीला**—सा कथं जानीयादतिरहस्यप्रवृत्तं—वृत्तं ॥

**चतुरिका**—तस्या विभ्रमाक्षिप्तहृदयेनोपाध्यायेन कथितं स्यात् ॥

**सुशीला**—कुटिलः खलूपाध्यायः गूढमुत्क्षिप्त वस्तु कथं प्रकाशयेत् ।

**चतुरिका**—रहःप्रचारकुशलासु कुतूहलाचरासु कस्सचेतनः गोपायेद्रहस्यं (विलोक्य) कथमागतैवोपाध्यायिनी। अयि स्मेरवदने किं चिरायसे (साकूतं) केन प्रतिरुद्धासि ॥

**उपाध्यायिनी**—(सभ्रूभंगं) अपेहि परिहासशीले । किमात्मानमिव सर्वं विशङ्कसे । गृहकर्मणि व्यग्रया विळंबितम् ॥

**चतुरिका**—एषाहं निभृतास्मि । निद्राशेषकषायितयोरनयोर्लोचनयोः किं प्रतिविधास्यसि । अवसन्नांगकस्य निमित्तमासीद्गृहकर्म ॥

**उपाध्यायिनी**—गृहस्वामिनो विळंबस्तत्रापराध्यति ॥

**चतुरिका**—को हेतुर्विळंबस्य यदेकाकिन्यास्तवाप्यस्मार्षीत् ॥

**उपाध्यायिनी**—प्रथितं खलु परिषन्मेळनं । तत्संविधानाय व्यापृत-चेतसा स्वामिना निद्राभ्यवहारावपि विस्मृतौ ॥

**चतुरिका**—न लाभमन्तरेण धूर्त उपाध्यायश्चेष्टते । मन्ये तव-हस्तयोः कंकणयुगळमापातिष्यतीति । कथय वासु । किमुपाध्यायेन चिंतितं । किमेवमहर्निशं परिभ्रमति ॥

**उपाध्यायिनी**— प्रतिषिद्धास्मि । तीक्ष्णदण्डः खलूपाध्यायः ॥

**चतुरिका**—अयि भीरु तदहं जानामि । यदि त्वमेकवार विस्फारयसि नासामणिं तदैवं विद्रुतहृदय· पादलग्नो भवतीति । अहं खलु हृदयनिर्विशेषा तव सखी । किमिव विशङ्के । विस्रब्धा कथय ॥

**उपाध्यायिनी**-चतुरिके निपुणासि । ह्यः किल निशीथात्परत उपाध्यायः समागतः । प्रतिच्छन्दितः प्रणयेन पृष्टश्च विळंबहेतुं । समुप-दर्शितप्रणय विलास-विभ्रम निर्वेद समाक्षिप्तहृदयबन्धो गूढमप्यनाख्येयमपि व्यवीवृतत् ॥

**चतुरिका**—(स्वगतं) प्रणयरसविप्लावितविश्लथे चेतसि किमालम्बनं रहस्यस्य विवेकस्य वा (अंगुल्या संज्ञापयन्ती सुशीलां) (प्रकाशं) कथमिव वयस्ये धीरं कथय हृदयमस्मि तव ॥

**उपाध्यायिनी**—मिळितेषु पंडितेषु यथा मद्वर्ग्या एव सम्माननां लभेरन्। तथा कांचन संविधां छद्मना विधाय सर्वानतिसंधास्ये इति । चतुरः खलूपाध्यायः धर्मकञ्चुकावृतश्चरति तटस्थ इव ॥

**चतुरिका**—परमार्थदर्शिनो धर्मगोप्तारः कथमनुमंस्येरन् धर्मविप्लव । कथं वा सिद्ध्यत्युपाध्यायमनोरथः । अथ वा कैतवप्राया व्यवहारा भुवनं विमोहयन्ति । एतावता किमुपाध्यायस्य समीहितार्थलाभः ॥

**उपाध्यायिनी**—किमन्यत्कोपनोन्मादयोराराधनमन्तरा—विशिष्यते । याभ्यां प्रोत्साहितो नित्यमेवं निराहारनिद्रः परिश्रमति ॥

**चतुरिका**—दुर्मुखयोरनयोराराधनाय साधुजनगर्हामपि बहुमनुते । समतिक्रामति च श्रौतं पन्थानमपि—अथ किं साधयितुमीहते ॥

**उपाध्यायिनी**—प्रजनार्थाः स्त्रियः । ता यथा वन्ध्या न भवेयुः तथा सस्कार्या विवाहकर्मणा । अन्यथा शास्त्राणामानर्थक्यमिति ॥

**चतुरिका**—तत्रापिधनपिशिनगृध्नुना परछंदानुवर्तिना स्मृतिवचनशकलमासादितम् । अथ वा श्रुतिरपि बिभेत्यस्य दौर्जन्यात् ॥

**उपाध्यायिनी**—मान्त्रवर्णिकं लिङ्गमेव तत्रप्रमाणमिति द्रढयति ॥

**चतुरिका**—अपि स्मरसि मांत्रवर्णिकस्य । कथयतु भवती ॥

**उपाध्यायिनी**—(किंचिदिव ध्यात्वा) पुनर्जायां । न न--पतिभ्योजायां आ । दाग्ने—प्रजया- वह--नैवं । सह । परमार्थभागिनि अतिनिगूढमपि तव स्नेहात्प्रवक्ष्यामि । चिराय समुद्धृतं हृदयशल्यं मम पापभ्रान्तिविषण्णचेतसः पंडितेन भर्त्रा ॥

**सुशीला**—अयि चतुरिके श्रुतं श्रुतं । कुलाङ्गनाकर्णविदाहि वचनं न केवलमुपाध्यायो लोकद्वयाद्भ्रष्टः । तद्भार्यापीति विदीर्यते हृदयम् । अथ वा नियत एवायमधर्मविषविपाकः, परिणाम विरसः, सम्मोहयति पंडितमपि, धीरमपि, सचेतनमपि । हा । हतविधेर्विचित्रो विपाकः । अविछिन्नाग्निहोत्रधूमश्यामळीकृतदिगन्तरेप्यस्मिन्नग्रहाराभ्यन्तरे पदं न्यधायि बलिना कलिना । किमनेन जागर्ति खलु प्रपन्नार्तिहरो भगवान् धर्मगोप्ता । उपरि चरन्तोऽपि विद्वांसः गृध्रा इव मलिनैकदृष्टयः । सर्वथा सांप्रदायिको धर्मो विजयतां ॥

**चतुरिका**—(स्मेरानना परिवृत्य) स्त्रीषु रहस्यसंयमः कुतः । (उपाध्यायिनीं विलोक्य) अयि मुग्धे । केनैवं दारुणा निर्मितासि । यद्यात्मने प्रभवासि तथा रहस्युपाध्यायमुपशिक्षय । यथा पुनरनीदृशव्यवहारी भवेत् कळत्राधीनं हि धर्मगोपनं । किञ्च त्वमपि समुपार्जितकलुषमात्मानं पत्या सह सेतुस्नानेन तावत्पुनीहि । (इति साधिक्षेपमालोकते । सर्वाः विहसन्ति विनिन्दन्ति विषीदन्ति विलज्जन्ते च कुलाङ्गनाः । उपाध्यायिनी साश्रुलोचना सलज्जमधोवदना निष्क्रान्तैव) ॥

**श्रुतधरः**—श्रुतमेतत्कर्णरसायनं सखे वैवाहिके कर्मणि विनियुज्यमानाः (अघोरचक्षुरित्याद्या मन्त्राः) त्रिरात्रब्रह्मचर्यविधानं चतुर्थ्यां समावेशनं च, विवाह्याया वध्वा युवतीभावमेव सूचयन्ति । श्रुतिलिङ्गमपि सन्निकृष्टं प्रमेयावगतौ तमर्थमेवानुमोदते । एवमविसंवादिन्यप्यर्थे कुतो विवादावकाशो वैदिकानां । मन्त्रलिङ्गापेक्षया स्मार्ती श्रुतिर्दुबला प्रमेयावगतौ ॥

**सत्यकामः**—(उत्स्मयन्) सखे तवापीदृशी मतिः कथं जाता । स्मार्ते

श्रुतिलिङ्गयोः बलाबलनिर्णयस्तु प्रमेयावगमसन्निकर्षविप्रकर्षाभ्यामेव व्यवस्थितः । निरपेक्षरवा श्रुतिः प्रमेयावगमे नितरां सन्निकृष्टैव विनियोजकश्रुत्यभावे किं कुर्यान्मन्त्रवर्णिकं लिङ्गं । किञ्च सर्वे नियोगा मन्त्रलिङ्गमनुसरन्तीती कथं निरचैषीः । इदं कर्म अनेन मन्त्रेण कार्यमिति श्रुत्या कर्मविशेषं प्रत्यङ्गत्वे गृहीते तत्र कर्मणि तेन मन्त्रेण कश्चिदर्थोऽनुमीयेत । नागृहीताङ्गभावेन भवदुदाहृता मन्त्रा विवाहकर्मण्येव नियुक्ता इति कुतो निश्चिनोषि । तत्र च द्वाभ्यांजपति त्रिभिरभिमन्त्रयत इत्याद्या स्मार्ती श्रुतिः शरणीकरणीया । यामुपजीव्य नियुक्ता मन्त्राः तामेवातिवर्तितुं न क्षमन्ते । परमार्थतस्तु विवाह्ययोर्वधूवरयोर्वयोनिर्णायको विधिः पुरस्तात् पश्चाद्विवाहविधिः तदनन्तरञ्च तदङ्गभूतमन्त्रप्रवृत्तिरितिक्रमो विवक्षितः । अतः परमोपक्रमस्थं वयोनिर्णयविधिं न बाधितुमीशते हि मांत्रवर्णिकानि लिङ्गानि । उपक्रमो बलीयानिति हि शास्त्ररहस्यं तमेतमर्थं वैदिका जानते नावैदिकाः । भ्रान्ताः पुनरेवं कलहायन्ते । आस्तामेतदन्यत्र विस्तरः ॥

**एवं विवेकविकलान् शतशो विलोक्य**
**दुःखासिकाशतविलूनहृदो वदामः ।**
**नैवान्यदोषगणना भुवि भूषणाय**
**दृष्टश्रुतार्थकथनं न हि दूषणाय ॥**

सर्वथा कालविप्लुतान् धर्मानभिरक्षतु महेश्वरः.

---

# कश्चन विमर्शः

(पियूषपत्रिका)

नडियाद् प्रान्ततः प्रसरन्ती रसिकस्वान्तपीयूषवर्षिणी काचित् पीयूषनाम्नी पत्रिका तत्रत्यमनीषितल्लजविलिखितशास्त्रीयविषयविभूषिता अस्मन्त्रैमासिकपत्रिकाविनिमयरूपेण सम्पादिता अस्मन्नयनपथमवतीर्णा। अस्यां च पत्रिकायां सर्वज्ञजीवविवेचना–शुद्धाद्वैतपरिष्कार–विधितत्त्व-संग्रह–पुरुषोत्तमयोग–ब्रह्माद्वैतवाद–दिगम्बरश्वेताम्बरमतभेद -- शाण्डिल्योक्तभक्तितत्त्वादीन्यधिकृत्य पण्डितप्रकाण्डैः सपूर्वपक्षसिद्धान्तं समुपन्यस्ताः ते ते विषयाः समग्राहिषत इति सर्वेषां नः प्रमोदावहम्। एतेषु विधितत्त्वसंग्रहे वैयाकरण–नैय्यायिक–मीमांसक–वैयासिकादि-दर्शनरीत्या विधितत्वं सम्यङ्न्यरूपि। मीमांसकेष्वपि प्राभाकरमतरीत्या "यजेत स्वर्गकाम" इत्यादौ कालान्तरभाविफलसम्पादनयोग्यं तावत्पर्यन्तस्थायि किञ्चिद्वस्तु कृतिसाध्यत्वात्कार्यमिति व्यपदेश्यं लिङा अभिधीयते। तदेव फलसाधनत्वात् स्वस्मिन् पुरुषं नियोजयतीति नियोग इति, कार्यत्वात् कार्यं इति प्रमाणान्तरेण अनवगम्यमानत्वात् अपूर्वमिति च। आख्यायते। अयं च नियोग लिङर्थवादः प्राभाकरशिष्येषु स्तोकं विभिन्नोऽपि एकादशधा विभिन्नस्सन् निरूपितः। तथाहि— (१) शुद्धः अन्यनिरपेक्षः कार्यरूपो नियोगः। (२) शुद्धा प्रेरणा-नियोगः। (३) प्रेरणासहितं कार्यं नियोगः। (४) कार्यसहिता प्रेरणा नियोगः। (५) कार्यस्यैव प्रवर्तकत्वं नियोगः। (६) कार्यप्रेरणयोः सम्बन्धो नियोगः। (७) तत्समुदायो नियोगः। (८) तदुभयस्वभाव-विनिर्मुक्तो नियोगः। (९) विषया(याग)रूढो नियोगः। (१०) भो-

ग्यरूपो नियोगः । (११) पुरुषो नियोगः—इति । इमे च भेदाः अपूर्वं नियोगाख्यं, प्रेरणां, नियोज्यं पुरुषं च अङ्गीकृत्य, तेषां विशेषणविशेष्यभावादिविन्यासविशेषेण संपादिताः । अयं च नियोगवादः अवश्यं द्रष्टव्यः मन्तव्यश्च ॥

किञ्चास्यां पत्रिकायां वैष्णवसम्प्रदायप्रवर्तकानामाचार्याणां सिद्धान्तस्सङ्ग्रहेण प्रादर्शि । तेषां सिद्धान्ताः विद्यार्थिजनसुबोधायात्र संगृह्यन्ते । तत्र श्रीवल्लभाचार्याणां सिद्धान्तः एकेनैव पद्येन संगृहीतः—

"जीवस्य ह्यणुता जनिश्च जगतो मायोज्झिताद्ब्रह्मणः
तादूप्यादथ सत्यतास्य निगमोक्तेष्वादरः कर्मसु ।
सेव्यत्वं च सदैव गोकुलपतेः पुष्ट्या पुनश्शुद्धया
लीलाप्राप्तिरनुत्तमं फलमिति श्रीवल्लभानां मतम् ॥ १ ॥"

श्रीकृष्णचैतन्याचार्याणां सिद्धान्तः—

आराध्यो भगवान् व्रजेशतनयः तद्धाम वृन्दावनं
रम्या काचिदुपासना व्रजवधूवर्गेण या कल्पिता ।
श्रीमद्भागवतं प्रमाणमखिलं प्रेमा पुमर्थो महान्
श्रीचैतन्यमहाप्रभोः मतमिदं तत्राग्रहो नः परः ॥ २ ॥

श्रीनिम्बार्काचार्याणां सिद्धान्तः—

ज्ञानस्वरूपं च हरेरधीनं शरीरसंयोगवियोगयोग्यम् ।
अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यमनन्तमाहुः ॥ ३ ॥
अनादिमायापरियुक्तरूपं त्वेनं विदुर्वै भगवत्प्रसादात्
मुक्तं च भक्तं किलबद्धमुक्तप्रभेदबाहुल्य मथापि बोध्यं ।
अप्राकृतं प्राकृतरूपकं च कालस्वरूपं तदचेतनं मतं
मायाप्रधानादिपदप्रवाच्यं शुक्लादिभेदाश्च समेति तत्र ॥

स्वभावतोऽपास्तसमस्तदोष मशेषकल्याणगुणैकराशिम्
व्यूहांगिनं ब्रह्मपरं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिं।
अंगे तु वामे वृषभानुजां मुदा विराजमाना मनुरूप सौभगां
सखीसहस्रैः परिसेवितां सदा स्मरेम देवीं सकलेष्टकामदां ॥
उपासनीयं नितरांजनै स्सदा प्रहाणयेऽज्ञानतमोनुवृत्तेः ।
सनंदनाद्यैः मुनिभि स्तथोक्तं श्रीनारदाया खिलतत्वसाक्षिणे ॥

श्रीरामानुजाचार्याणां सिद्धान्तः—

श्रीभाष्यद्रविडागमप्रवचनं श्रीशस्थलेष्वन्वहं कैंकर्यं
यदुशैल . . वसतिः सार्थद्वयोच्चारणं ।
यद्वा भागवताभिमानमननं श्रेय स्सतामित्यलम्
शिष्या न्प्राह यतीश्वरः परमगात् विष्णोः पदं शाश्वतम् ॥
अर्चा विष्णौ शिलाधीः गुरुषु नरमतिः वैष्णवे जातिबुद्धिः
विष्णो र्वा वैष्णवानां कलिमलमथने पादतीर्थेषु बुद्धिः ।
कंसारेर्नाममात्रे कलिकलुषहरे शब्दसामान्यबुद्धिः
श्रीशे सर्वेश्वरेशे तदितरकुमतिः य स्सवा नारकी सः इति ॥

अत्र अनुक्ता अपि अन्येषां सिद्धान्ताः अन्यत स्संगृह्य लिख्यन्ते ॥

वैष्णवेषु मध्वाचार्याणां सिद्धान्तः—

"श्रीमन्मध्वमते हरिः परतरः सत्यं जगत्तत्वतो
भेदो जीवगणा हरेरनुचरा नींचोच्चभावंगताः ।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च सत्साधनं
ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ॥ ५ ॥

तथा शैवानां सिद्धान्तः —

"श्रीमच्छैवमते शिव परतमः पाशान्विताः पूरुषाः
तेषां वै परिपालनात् पशुपतिः प्राप्योह्युपायै रयं ।

तन्मन्त्रस्तुतितज्जपै स्त्रिषवणस्नानैश्च भस्मान्वितैः
कैलासे परमंप्रमोद मुपयान्त्येते शिवालोकत ॥ ६ ॥

तथा जैनानां सिद्धान्तः—

जीवोऽनादिरनैधन स्सगुणवान् कर्ताच भोक्ता विदन्
सूक्ष्मो देहमितश्च याति नरकं तिर्यग्गतिं चाघतः ।
पुण्या त्स्वर्गमुपैति मानुषगतिं प्राप्नोति तन्मिश्रणात्
मुक्तिं गच्छति कृत्स्नकर्मविलयादित्याह तत्वं जिनः ॥ ७ ॥

बौद्धानां तु सिद्धान्तः —

जीवो नास्ति पुनर्भवोऽस्ति सततं कर्मास्ति कर्त्रोविना
गन्ता नास्ति शिवायचास्ति गमनं बन्धोस्ति बद्धो न च ।
इत्येवं गहनंच यस्य न मुनेः व्याहन्यते शासनं
तस्मै नैकगुणप्रकाशयशसे बुद्धाय तस्मै नमः ॥

तत्र बुद्धशिष्याणां चतुर्णां सिद्धान्तः—

मुख्यो माध्यमिको विवर्तमखिलं शून्यस्य मेने जगत्
योगाचारमते हि सन्ति हि धियः तासां विवर्तोखिलं ।
अर्थोऽस्तु क्षणभङ्गुरस्त्वनुमितो बुध्येति सोत्रान्तिकः
प्रत्यक्षं क्षणभङ्गुरं च सकलं वैभाषिको भाषते ॥ ८ ॥

पातञ्जलसाङ्ख्यानां सिद्धान्तः—

श्रीमद्योगमते प्रधानपुरुषा क्लेशादिशून्येश्वरः
बुद्ध्यादीनि च सप्त षोडशगणः वस्तूनि षड्विंशतिः ।
अष्टांगीगत निर्विकल्पकभिदायोगेन साध्यं नरः
कैवल्यं लभते विशुद्धहृदयः साङ्ख्ये तु नैवेश्वरः ॥ ९ ॥

औपनिषदानां सिद्धान्तः—

"ब्रह्मैकं परमार्थसच्चिदमलं विश्वप्रपञ्चात्मना
शुक्तीरूप्यपरात्मनेव बहुलाज्ञानावृतं भासते ।

तद्ज्ञानात् निखिलप्रपञ्चविलया स्वात्मन्यवस्था परं
निर्वाणं जनिमुक्तमभ्युपगतं मानं श्रुतेर्मस्तकं ॥
श्लोकार्धेन प्रदक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।
ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ॥ १० ॥

पूर्वमीमांसकानां सिद्धान्तः—

वेदान्ता नप्रमाणं चितिवपुषि पदे तत्र संगत्ययोगात्
पूर्वो भागः प्रमाणं पदचयगमिते कार्यवस्तुन्यशेषे ।
शब्दानां कार्यमात्रं प्रति समधिगता शक्ति रभ्युन्नतानां
कर्मभ्यो मुक्तिरिष्टा तदिह तनुभृतामायष स्स्यात् समाप्तेः ॥
विद्यार्थिनां सुबोधार्थं दर्शनानां तु संग्रहः ।
प्रादर्शिच मयात्वस्यां प्रीयतां भगवान् हरिः ॥

**के. गोपालकृष्णशास्त्री,**
आस्थानमहाविद्वान्.

# संपादकस्य विज्ञप्तिः

---

संस्कृतवाग्विलासिनीविलाससन्ततिं सन्ततं वितन्वतां पत्रिका-ग्राहिणामनुग्राहिणां महोदयानामिदमिदानीं सकौतुकमावेद्यते—यत्तेषां साह्यपरम्परावशतो वर्धितैषा पत्रिकापुत्रिका नववर्षाणि सुखेन समतीत्य दशमे वर्षे पदं न्यधादिति ॥

भारतवर्षीयाः विदेशियाश्च पत्रिकान्तरसंपादनधौरेयाः महान्तः निजपत्रिकासु अस्मत्पत्रिकागुणसंकीर्तनेन, तादृशपत्रिकाणां विनिमयतः संप्रेषणेन च यमुपकारमकार्षुः तं सकातज्ञ्यं स्मारं स्मारम् इतोऽनन्तरं करणीयेषु कार्येषु अवहिता भविष्यामः ॥

अस्मत्पत्रिकागतं दोषजातं न कोऽपि तथा जानाति सम्यक्तया, यथा वयं जानीमहे। ये तु दोषैकदर्शिनः तान् प्रत्येषा विज्ञापना यत्तेऽपि एतत्पत्रिकाभ्युदये वयमिव विहितादराः सन्तः मृतभाषायाः अमृतत्वं संपादयन्तः दोषदर्शनसामर्थ्यं सफलीकुर्युरिति ॥

समतीतेषु द्वित्रेषु वत्सरेषु काश्चन संस्कृतपत्रिकाः देशे तत्र तत्र नूत्नतया लब्धात्मभावाः। मनोहारिणी खलु तासु लेखनवैखरी। तासा-मस्मत्पत्रिकायाश्च अकारणपरमकरुणाशीलो भगवन् दिशतु निरतिशय-मभ्युदयमित्याशास्महे ॥

संपादकः.

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

# स म्पा द की य स मि तिः

---

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए., विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचल-शास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासा-चार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानो-पाध्यायाः

६. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशाला-साहित्यप्रधानोपाध्यायाः

७. महाविद्वांसः करूरु शेषाचार्याः, महापाठशाला ज्यौतिष-प्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए. महापाठशालाध्यक्षाः (सम्पादकाश्च)

## विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः–संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमाधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपारिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (*3s.*) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

**एच्. योगनरसिंहार्यः, एम्.ए.,**

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

1. संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगर.
2. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता.
3. उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. श्रीपीयूषपत्रिका, नडियाद्.
7. संस्कृतरत्नाकर, जयपुर.
8. कल्याण, गोरख् पुर.
9. The Mythic Society Journal, Bangalore.
10. The School Folk, Tumkur.
11. Annals of the Bhandarkar Oriental Research Institute, Poona.
12. Review of Philosophy and Religion, Poona.
13. Journal of Oriental Research, Madras.
14. The Law College Magazine, Madras.
15. The Literary and Educational Supplement to "The Hindu," Madras.
16. The Aryan Path, Bombay.
17. The Theosophical Movement, Bombay.
18. The Philosophical Quarterly, Calcutta.
19. Karnataka Historical Review, Dharwar.
20. Saqi, Secunderabad.
21. Ardra, Ceylon.
22. Wiener Beitrage Zur Kulturgeschichte and Linguistik, Wien.

23. The Journal of Music Academy, Madras
24. "Yoga," Bulsar.
25. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ
26. ಭಾರತೀ, ಮದ್ರಾಸು
27. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ.
28. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ
29. ರಾಷ್ಟ್ರಬಂಧು, ಮಂಗಳೂರು.
30. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು
31. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
32. ಅಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಬೆಂಗಳೂರು
33. ರಂಗಭೂಮಿ, ಬೆಂಗಳೂರು
34. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು
35. ಸುಬೋಧ, ಬೆಂಗಳೂರು.
36. ಜ್ಯೋತಿಷವಿಚಾರಸಾಗರ, ಶಿವಮೊಗ್ಗ
37. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ
38. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು
39. ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು
40. ಸದ್ವೈದ್ಯ, ಮೈಸೂರು

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः"

(ईशोपनिषत्)

सम्पुटम् १०]   एप्रिल् जुलै च १९३४   [सञ्चिका २-३

एकस्य तिष्ठति कवेर्गृह एव काव्य-
मन्यस्य गच्छति सुहृद्भवनानि यावत् ।
न्यस्याविदग्धवदनेषु पदानि शश्व-
त्कस्यापि सञ्चरति विश्वकुतूहलीव ॥

प्रतिभातारतम्येन प्रतिष्ठा भुवि भूरिधा ।
भावकस्तु कविः प्रायो न भजत्यधमां दशाम् ॥

(काव्यमीमांसायामुदाहृतौ)

यो नाम कश्चिदिह संविदितं प्रमेयं
ग्रन्थान्तरे लिखति वा वदति स्वयं वा ।
मत्कर्तृतामननुकीर्त्य स कीर्तिलोभा-
न्निस्सन्ततिर्जगति जन्मशतानि भूयात् ॥

(तौतातिमततिलके भवदेवः)

तन्मदीप्सितम् । मत्पितुः पुत्रशतकं श्वशुरस्य च चक्षुषी । राज्यलाभो भवत्वेवं वरमेतन्मदीप्सितम् । अन्ते सत्यवता सार्धं यास्यामि हरिमन्दिरम् । समतीते लक्षवर्षे देहीदम्मे जगत्प्रभो । जविकर्मविपाकञ्च श्रोतुं कौतूहलं मम । विश्वनिस्तारबीजञ्च तन्मे व्याख्यातुमर्हसि' इति प्रार्थना, तथैवानुग्रह सर्वेषामर्थानां दानेन, बुभुत्सितार्थोपदेशनेन च ॥

इदमिहावधेयम् । 'एका नारी पातिव्रत्यादिपुण्यकर्मजन्यशक्तिमास्थाय मृतेन भर्त्रा सहागात् मनुष्यशरीरेण, तत्तत्कर्मफलदात्रा धर्मराजेन व्याहार्षीत्, अविद्यमानामेव लक्षवर्षजीवित्वशक्तिं भर्तुराधात्, तस्यास्तत्पितुश्च पुत्रशतकसम्पादकशक्तिमलभत, शुभानामशुभानां च कर्मणां फलानि विचित्राणि अजानात्, मोक्षसाधनात्मज्ञानोपदेशंचालभत' इति ॥

ततो मन्यामहे योप्यन्यो नरो वा नारी वा तत्तत्कर्तव्यत्वेन विहितानि कर्माणि अविकलमनुष्ठेयुः तेप्येवमेव महाफलेभ्यः कल्पेरन्निति । इदमेव विशेषफलकथनस्य निदर्शनमिति प्रातिस्विकफललेखनाय न लेखनीं व्यापारयामः ॥

आत्मनो निषिद्धानुष्ठानजशक्तिप्रभवा अनर्थाः ।

अवगता विहितानुष्ठानजशक्तिप्रभवाः इष्टावाप्तयः । निषिद्धानुष्ठानजशक्तिजाश्च अनर्थाः प्रसङ्गादाख्याताः । अन्याश्चैवमवगम्यन्ते 'ब्राह्मणं तृषितं तप्तं क्षुधितं गृहमागतम् । न भोजयति यो मूढस्तप्तकुण्डं प्रयाति सः । तत्र तल्लोममानञ्च वर्षं स्थित्वा च दुःखदे । तप्तस्थले वह्नितल्पे पक्षी च सप्तजन्मसु ॥ रविवारे च सङ्क्रान्त्यां अमायां श्राद्धवासरे । वस्त्राणां क्षारसंयोगं करोति केवलं नरः । स याति क्षारकुण्डं च सूत्रमानाब्दमेव च ॥ स व्रजेत् राजकीं योनिं सप्तजन्मसु भारते । वेदशास्त्रपुराणनिन्दकः, ब्रह्मविष्णुशिवादिनिन्दकः,

वाणीलक्ष्मीगौर्यादिदेवीनिन्दकश्च, सर्वान्त्ये भयानककुण्डे अनेककल्पानुषित्वा सर्पयोनिं विशेत् । देवस्य ब्राह्मणस्य वा वृत्तिघाती षष्टिवर्षसहस्राणि विट्कुण्डं विशेत् । तावन्तमेव कालं विट्कृमिश्च भुवि जायेत मारम्मारम् ॥' इत्यादिवचनैः असङ्ख्याताः ॥ विस्तरभयात् विरम्यन्ते ॥

अनर्थजनकशक्तिनिर्हरणम् ।

ये पुनरिच्छन्तोऽनिच्छन्तो वा निषिद्धमनुष्ठाय पश्चात्तापिनो जायेरन् तानुत्तितारयिषु शास्त्रं प्रायश्चित्तं नैकभेद विदधाति ॥ तथाहि 'शिरःकपाली ध्वजवान् मिताशी कर्म वेदयन् । ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्' 'ब्राह्मणस्य परित्राणात् गवां द्वादशकस्य च । तथाश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात्' इति ब्रह्महत्याजन्यशक्तिनिर्हारकं कर्म ॥

यः पुनर्हन्तारमनुमन्यते, यो वा वधमुपदिशति, यश्च हनन प्रकारं सम्प्रतिपादयति, यश्च वा प्रोत्साहयति, यो वा विधानमन्यदाश्रित्य सहकुरुते, यश्च मार्गमस्याचष्टे, अथवाश्रयी भवति, शस्त्राणि शस्त्राणि वास्मा अर्पयति, यश्च वा समर्थोपि निवारणे उपेक्षते वध्यनिष्ठदोषान्वा कीर्तयति, यो वानुमोदते, त एतेपि हत्यापापभाजः तारतम्येनेति, निर्हरणमपि तारतम्येन विज्ञेयम् ॥ विस्तरभयात् विरम्यते हत्ययाऽनया सर्वाण्यपि दुष्टानि कर्माणि व्याख्यातानि ॥

उक्तार्थे शास्त्रसम्मतिः ।

तथाच पैठीनसिः 'हन्ता मन्तोपदेष्टा च तथा सम्प्रतिपादकः ॥ आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम्, उपेक्षकः शक्तिमांश्चेत्, दोषवक्ताऽनुमोदकः ॥ अकार्यकारिणः, त्वेषां प्रायश्चित्तं प्रकल्पयेत्, यथाशक्ति अनुरूपञ्च दण्डञ्चैषां प्रकल्पयेदिति' ॥

हत्याजन्यशक्तेरेव षट् निर्हारकाणि ।

सन्त्यन्यान्यपि निर्हारकाणि ॥ तथाहि शास्त्रम् 'दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा । दृष्ट्वा पथि निरातङ्कं कृत्वा तु ब्रह्महा शुचिः । आनीय विप्रसर्वस्वं हृतं, घातित एव वा । तन्निमित्तं क्षतः शस्त्रैः जीवन्नपि विशुध्यति ॥ लोमभ्यः स्वाहेत्येवं वै लोमप्रभृतिं वै तनुम् । मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रमम् ॥ सङ्ग्रामे वा लक्ष्यभूतः हतः शुद्धिमवाप्नुयात् । मृतकल्पः प्रहारार्तो जीवन्नपि विशुध्यति ॥ अरण्ये नियतो जप्त्वा त्रिर्वै वेदस्य संहिताम् । शुध्येत वा मिताशीत्वा प्रतिस्रोतः सरस्वतीम् ॥ (मिताशी इत्वा इति छेद) पात्रे धनं वा पर्याप्तं दत्वा शुद्धिमवाप्नुयात् । (आदातुश्च विशुध्यर्थं इष्टिर्वैश्वानरी तथा इदं प्रसङ्गात् अनुग्रहबुद्ध्या उपदिष्टम्) ॥ इति । एषाञ्च निर्हारकाणां कर्मणामनुष्ठानप्रकाराः विकल्पः साम्यासाम्ये वा ग्रन्थगौरवभयान् न व्युत्पाद्यन्ते, मार्गदर्शनेन जातप्रत्ययाः मूलग्रन्थेभ्योऽवगच्छेयुः ॥

एकं निर्हारकं शक्तीरनेकाः निर्हरेत्? न वा? ॥

नन्विहैवं सन्दिहे । देवदत्तोऽवधीत् पञ्चब्राह्मणान् । पश्चात्तप न्नितान्तं, नोऽन्वयुङ्क्त 'अवगता भोः हत्यानिर्हारिणी क्रिया, पञ्चषाश्चैता हत्या अन्वतिष्ठम्, तत्किमेकैवैषा निर्हारिणी हत्याजन्याः शक्तीरनेका निर्हरेत्? उताहो शक्तिसमसङ्ख्याका एव निर्हारिण्यो निर्हरेयुरिति?' ततः सन्देह इति ॥

पूर्वोक्तसन्देहे पूर्वः पक्षः निर्हरेदिति ।

नन्विहासन्दिग्धं पूर्वेणेति युक्तम्, दर्शनात्, गौतमीयं वचनं 'पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्टस्पर्शने सवासा जलमाविशेत्' इति पश्यामः, यदा द्विज एकं स्पृशति चण्डालं, अनेकान् वा, एवं सकृद्वा अथवा असकृत्, सर्वान्वा, अन्यतमं वैषां, सकृदेवान्तेऽस्य

स्नानमुपदिशतः शिष्टांश्च पश्यामः, ततो मन्यामहे स्पर्शजशक्तिं शक्ती शक्तीर्वा निर्हरत्येवैतत् स्नानमेकमनुष्ठीयमानमिति, न च विवेचयितुं प्रभवामः, अस्या एव शक्तेः स्पर्शजाया निर्हारकमिदं स्नानं नान्यस्याः न वा सर्वासामिति, अत एवं यदा क्रमशः त्रीणि प्रधानानि कर्माणि अनुतिष्ठन्ति दर्शसंज्ञकानि वा पूर्णमाससंज्ञानि वा, सकृदेवैषु उपकारकाण्यङ्गानि प्रयुञ्जन्ति आदिमान्यन्तिमानि वेति मीमांसन्ते नयज्ञाः ॥

मध्येऽत्राक्षेपसमाधाने ।

ननु 'गुरुणि गुरूणि, लघुनि लघूनि' इति गौतमः स्मरति, इह चैकस्मिन् स्पर्शे लघ्वी शक्तिरिति, अनेकेषु च गुर्वी शक्तिरिति गुरुणैव स्नानेन भाव्यमावृत्त्या । नैव भाव्यम्, अन्यत्राभिनिवेशात् । अन्यत्र ह्यभिनिविशमान एवं सूत्रयति गौतम आचार्यः । एकैवानर्थजनिका पापशक्तिः ज्ञानतोऽज्ञानतः सकृद्वावृत्त्या वा साक्षाद्वा परम्परया वानुष्ठितकर्मणा निषिद्धेन मनस्याधीयते. इह केवलं जातिरेका, व्यक्तिभेदाः पुनः सहकारिभेदेषु आयतन्ते एव, एवञ्जातीयकशक्तीनां निर्हारकर्माण्यपि गुरुलघूनि तरतमभावादिभेदभिन्नानि च आख्यायन्ते, अत्रैवाभिनिविशत एष आचार्य इति ॥

एवमङ्गीकारे सम्भवदाक्षेपपरिहारौ ।

'अन्यत्राभिनिवेशादिति चेन्न मन्वाद्युपरोधात्' यदि अभिनिवेशमन्यत्रास्थाय प्रसक्तदोषं परिजिहीर्षेः ततो मन्वादीनुपरुन्धीथाः, यथाह मनुः 'विधेः प्राथमिकादस्मात् द्वितीये द्विगुणं भवेत् । तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः' इति । एवमेव देवलादयः, इह ह्यावृत्तानुष्ठानं स्फुटमिति, तस्मादावृत्ते निमित्ते नैमित्तिकेनाप्यावर्तितेन भाव्यमिति चेन्न, नैवं भाव्यम् । किङ्कारणम्? अन्यत्राभिनिवेशादित्येव । अवधत्स्वेदमायुष्मन्-यदा यदा ज्वरितो देवदत्तः, तदा तदा

पथ्याशनं सिद्धम्, तादिदं वैदिकेऽपि निमित्ते समानम्' इति । ततः पृच्छामः, किम्पुनरस्य वचनस्य विधित्सितं वस्त्विति? ननूक्तं त्वाह शाभिसन्धिविघटनमिति, एवन्तर्हीमानि त्रीणि वाक्यान्यापद्येरन्, द्विगुण-विधिः, त्रिगुणविधिः, तुरीयाद्यावृत्तनैमित्तिकनिषेधश्चेति । सम्भवति चैकवाक्यत्वे अन्नयाय्यस्तदनेकत्वाङ्गकारः । कथम्पुनरिदं स्वरसतोऽनेकार्थप्रतिपादकं वचनं एकार्थतां गच्छेत्? ॥

इत्थम्, यादेदं प्रतिनिमित्तं नैमित्तिकमावर्तनीयमिति, तत् पापनिर्हारकनैमित्तिकविषये चतुर्थाद्यतिरिक्तनिमित्तावृत्तावेवेति, नैमित्तिकावृत्तिविधायकशास्त्रेण अंशे सङ्कोचकतया एकवाक्यत्वात् । सर्वथा चतुर्थादिनैमिकानुष्ठानं निषेध्य भवतोपि, अन्यश्च न विधेयः सिद्धत्वात्. स चास्मन्मतेपि सिद्धः निषेधश्च सङ्कोचमङ्गकुर्वाणेनाङ्गीकृतो मयेति न प्रमेये वो नश्च विशेषः, गौरवं परं युष्मास्ववशिष्यत, इति । नायमाक्षेपः साधुः, नन्वेवमपि द्वितीयतृतीये नैमित्तिकानुष्ठाने वो न सिध्येतां, यत् सकृदेव सर्वथानुष्ठानं आतिष्ठेथाः इति चेत् परिहृतमेतत् यदा यदाज्वरितो देवदत्तः इति दृष्टान्तं प्रदर्शयता, तद्रीत्यैव निमित्ते निमित्ते नैमित्तिकमिति भिन्नकालाभिप्रायेण, अनेकनिमित्तसन्निपातानन्तरं नैमित्तिकानुष्ठानं तु प्रकृते विचार्यत इति ॥

अत्र मीमांसकानां सम्मतिः पूर्वपक्षोपसंहारश्च ।

अङ्गीकुर्वन्ति हि नयविदः दाहेष्टेः अनेकदाहेष्वपि सन्निपतितेषु सकृदनुष्ठितिं, 'यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदितिवचनप्रमितायाः, जातेष्टेर्वा नैकपुत्रजनने सकृदनुष्ठितिं वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति वाक्यप्रमितायाः, तस्मात् एकैव निर्हारिणी क्रिया सर्वाः शक्तीः निर्हरेदिति, असन्दिग्धं पूर्वेणेति सिद्धम् ।

अथ सिद्धान्तः ।

नैवं सम्भवति असन्दिग्धं पूर्वेणेति, किङ्कारणम्? दुष्टाभिनिवेशात् इदमवधेयमिह 'किमिव हि वचनं न कुर्यात्, नास्ति वचनस्यातिभार' इति प्रवृत्तिविशेषकरञ्च वचनमास्थेयं यदि चात्र यदा यदा निमित्तं तदा तदा नैमित्तिकमिति भिन्नकालिकज्वरदृष्टान्तेन 'द्विगुणं' 'त्रिगुणं' इति भागौ कादाचित्कासिद्धिमदर्थकौ सन्तावनुवादकौ व्याख्यायेयातां अप्रवृत्तिविशेषकरावापद्येयाताम्, यदि पुनर्निमित्तसन्निपातेपि द्वैगुण्यं नैमित्तिके बोधयेतां त्रैगुण्यं च, प्रवृत्तिविशेषकरौ सिध्येतां, तस्मात् असन्दिग्धं परेणेत्येव वक्तुं युक्तमित्युत्पश्यामः ॥

नन्वेवं तर्हि स्नानादिसकृदनुष्ठानरूपशिष्टाचारविरोधः, इष्टिद्वया वृत्त्यापत्तिश्चेति चेन्न विशेषदर्शनात्, विशेषं हि पश्यामो 'चतुर्थे नास्ति निष्कृति' रिति, अतः महापापनिवर्तकविषय एवायं आवृत्त्याख्यानं, न सामान्यतः सर्वविषय इति सर्वानिष्टनिवृत्तेः । तदाख्याह्यङ्ग देवदत्तं असन्दिहानः 'निर्हारिण्यः क्रिया आवर्तनीया' इति ॥

शक्तेः कर्मजन्यत्वस्य दृष्टान्तेनोपपादनम् ।

स्यादेतत् । कः पुनरत्र श्रद्दधीत, तत्तादृशानि कर्माणि विहितानि निषिद्धानि वा शक्तीर्विचित्रा आदधत्यनुष्ठातॄणां मनस्विति, यावता हसितनिमिषितप्लवितताण्डवितान्यनुष्ठातॄणां मनस्सु कामपि शक्तिं आधातॄणि न पश्याम इति ॥ नो खल्वदृष्टान्तसिद्धं स्वभावमर्थस्याऽऽख्यान् श्रद्धेयाख्यनो भवेद्विमर्शरसिकानामिति ॥ नोतरां पुनर्विपरीतमाख्यान् अनुभवस्येति, चेत्, न वैपरित्यं, नतरामदृष्टान्तो नतमाञ्चाश्रद्धेयतेति प्रतिजानीमहे ॥ पृच्छाम्यङ्ग कर्म सर्वथा नेष्टे आधातुं क्वचिदपि शक्तिमित्यभिसन्धत्से? उताहो मनसीति? आद्ये पर्यनुयोज्योसि कथं ताण्डवितं प्लवितं वा आरचयसीति? ॥

ननु बहुशोऽभ्यासपाटवादिति चेत् कोऽयमभ्यासपदार्थः पाटवपदार्थो वेति पुनरपि पर्यनुयोज्यताविशेषः। ससम्बन्धिकश्चासावभ्यासपदार्थः इति कस्येत्यपि पर्यनुयोगो दुर्निवारणः। धर्मवचनश्च सन् पाटवपदार्थः धर्म्याकाङ्क्षया न वियुज्येत। वयन्तु पश्यामोऽभ्यास आवर्तनश्चेत्यनथान्तरमिति, आवर्तनञ्च क्रियाधर्म इति, तज्जन्यपाटवञ्च संस्कारविशेषः क्रियासमानाधिकरणः क्रियावतो धर्म इति। न चान्यक्रियाजन्यसंस्कारोऽन्यजातीयां शक्तिं जनयितुं प्रभवतीति प्रणाल्या प्लविततातण्डविततजातीया क्रिया संस्काराख्यां शक्तिं विधदातीति प्लविततताण्डविते आरचयति देवदत्त इति यावदुक्तं भवति, तावदुक्तं भवति अभ्यासपाटवात् प्लविततताण्डविते आरचयति देवदत्त इति। तस्माद्दुष्टोऽयं क्वचिदपि शक्त्यनाधानतावादः। दुष्टतरश्च मनसि शक्त्यनाधानतावादः। ज्ञानेच्छाकृत्यविनाभूतानि हि सर्वाणि कर्माणि, तज्जन्यत्वाचेषां, संस्कारमूलकानि च ज्ञानादीनीति यां च यावतीं च मात्रां शक्तेः मनस्यप्याधत्त इमे क्रिये यतः इति॥

स्पष्टतरञ्चावगच्छामः तत्तच्छास्त्राभ्यासपाटवात् प्रवचनशक्तिं तत्तच्छास्त्रविषयिणीमिति उपेक्षणीयोऽयं मनसि शक्त्यनाधानतावादः श्रेयस्कामैरिति उपरम्यते। ननु भवतु नाम संस्कारो नाम शक्तिविशेषः क्रियाजन्य इति, "विचित्रफलजनिकाः विचित्राः शक्तयः कर्मविशेषैस्तैस्तैर्जायन्त" इत्येवञ्जातीयको वः पक्षः किमेतावता साधितो भवति? तस्मान्निरर्थक एवैतावानायास इति चेत्, न दृष्टत्वात्। अतन्त्रीकमेवेहस्थो योजनसहस्रैरन्तरितदेशस्थोच्चारितानि वाक्यानि तदात्वे एव शृण्वन् अवगच्छंश्चैतेषामर्थान् तेन साकं व्यवहरति समीपस्थेन साकमिवेति नैतस्मिन्नर्थे भवान् विप्रतिपद्यते। तत्र पृच्छामः कथमिदमिति?॥

नन्वस्ति यन्त्रविशेषो मधुकरवाण्याख्यभौतिकार्थविमर्शशीलि-प्रष्ठोपज्ञो देशद्वये स्थापितः पृथक् । तस्य चायं महिमा यत् तत्समीप-स्थेन व्याहृतान् सर्वानपि वर्णान् वायूकारोति आकाशाशीकरोति वेति। यदा चैते वर्णाः तद्भावमुपगच्छन्ति तदा देशान्तरस्थो यन्त्रविशेषः वायूकृतान् आकाशीकृतान्वा सर्वानेव वर्णान् तत्तद्वर्णात्मना अभिव्य-नक्ति । सोसावप्यस्य यन्त्रविशेषस्य महिमैव । ततश्च तत्रस्थो जानन् व्यवहरति । तेन व्यवहृतांश्च तत्रस्थयन्त्रेणाकाशीकृतान् वायूकृतान्वा वर्णाननुपदमेवेहस्थयन्त्रेण तत्तद्वर्णरूपेण व्यक्तीकृतान् जानन् इहस्थो व्यवहरतीति चेत् ॥

तत्र प्रष्टव्यम्, किन्निबन्धनोनयोर्यन्त्रयोरेष महिमेति ? । विचित्र-तरनिर्मित्या अनेकविधाभिः क्रियाभिश्चेत् सुस्फुटमङ्गीकृतं भवति क्रिया शक्तिविशेषाधायिनीति । सत्य भोः विचित्रे यन्त्रे एवैषा शक्ति-रुत्पद्यते विचित्राभिः क्रियाभिश्चेवेति चेत्, मानुष्यकं मनो विचित्र-यन्त्राद्भिन्नमिति क्रियाश्च विहिता निषिद्धा वा शास्त्रीया विचित्रक्रियातो भिन्ना इति च कुतस्त्योयं वः सम्प्रत्ययः । कथन्नु अभिमुखमभिपत-न्तोर्थाः सर्वे प्रतिकृतिग्राहकेण यन्त्रेण गृह्यन्ते ? कथं वा तन्त्रया व्यव-हरति ? कथं वा तैस्तैस्तैजसैः यन्त्रैः नैकानि विचित्रकर्माणि क्रियन्ते ? तत्तद्द्रव्यविशेषसम्पर्कात् क्रियाविशेषाच्चेतीतोन्यो हेतुर्यत्नतो गवेषमाणानां समाः सहस्रं न प्रापणीयो भवति ॥

अस्ति च गानयन्त्रविशेषः प्रायशः प्रतिगृहं स्थापितः । अयस्कान्तगर्भे सम्पुटे सूची सज्यते । पीठे च वर्तुले विचित्रद्रव्य-निर्मितं वर्तुलं वस्तु क्रियाविशेषाहितविचित्रगानादिशक्तिकं स्थाप्यते । भ्रामणयन्त्रेणान्तस्स्थेनेदं वस्तु यदा सपीठं भ्राम्यते सूची चैषा तत् स्पृशति तदा गानादि आविर्भवति । तत्र चेदं सर्वं कारणं विचित्र-

क्रियामूलकविचित्रशक्तिकं भवतीति, न क्रियाविशेषाणां विचित्रशक्त्याधानकारणत्वं आक्षेप्तुं विमर्शकाः सन्नह्यन्तीति सिद्धम् ॥

इयांस्तु विशेषः एकैकं वर्तुलं वस्तु एकैकगानादिशक्तिकं यावन्नाशं तदेव कार्यं असकृत् करोति यदा यदा यन्त्रे योज्यते । मनस्तु एकमेव महायन्त्ररूपं असङ्ख्यकोटिशक्त्याकरभूतं सत् तत्तत्फलात्मना व्यक्तीभवन्तीभिः ताभिस्ताभिः शक्तिभिः नष्टाभिः वियुज्यते । उपचीयते चाजस्रमनुष्ठीयमानकर्मजन्यशक्तिभिरिति । तदिदमाहुः तत्वविवेककाराः' 'अनादाविह संसारे सञ्चिताः कर्मकोटयः' इति 'कुर्वते कर्म भोगार्थं कर्म कर्तुं च भुञ्जत' इति च ।

कार्यावगम्यशक्तिसद्भावस्य तत्तत्पदार्थेषु समर्थनम्.

अन्यच्चैवेदमिह प्रष्टव्यमास्ते, किन्निबन्धनेयं वस्तुनो वर्तुलस्य कौलालिक्या मृदा, ताक्षणेन काष्ठेन, आयस्कारिकेण लोहेन, पाश्यतोहारिकेण वा अकुप्येन अनिर्मितिः? इति । ननु पदार्था अपि विचित्रशक्तिमन्तः, तत्तादृशद्रव्योपादाना वस्तुनो वर्तुलस्य निर्मितिर्यदा प्रथेत नैवास्य गानसाधनी शक्तिराविर्भवेत् द्रव्यविशेषोपादाना पुनर्निर्मितिर्वर्तुलवस्तुनो गानसाधनशक्त्याधायिनीति अनुभवविशेषावगमितासु शक्तिषु तत्तत्पदार्थसमवेतासु नातीवाभिनिवेष्टव्यम् । एतेन क्रियाविशेषविषया आक्षेपा अपि प्रत्याख्याताः विजातीयाः क्रिया एव शक्तीर्विचित्रा उत्पादयितुमीशत इति । इति चेत् ॥

अत्रापीदं प्रष्टव्यमास्ते, कथमवगम्यतां विचित्रशक्तिमत्ता नाम पदार्थानामस्तीति? तत्रोच्यते—अवधत्स्वाङ्ग देवदत्तः शतयोजनायतायां भूमौ वटाश्वत्थजम्बीरकार्पासेक्षुपनसनालिकेरक्रमुकाम्रनिम्बादिबीजानि अनेकसहस्रसङ्ख्याकजातीयानि वपति । स्वरूपतो गुणतः विपाकतश्च अत्यन्तभिन्नानि अङ्कुरादिक्रमेण फलात्मना विपरिणमन्ते

तानीमानि बीजानि । नैतद्वैचित्र्यं शक्तिमन्यामन्यामतीत्योत्पत्तुमर्हम् । समाना भूमिरिति भूसारादानमेषां बीजानामविशिष्टम् । सिच्यमानजलसहकारोऽप्यविशिष्टः । वायन् वायुरप्यविशिष्टः । तत्तत्कालिकाः शैत्यातपाद्यनुग्रहा अप्यविशिष्टाः । नैव चैतेषां सहकारिणामभावे तत्तत्फलात्मना विपरिणामो दृष्टचरः । बीजांशश्चेहातिस्वल्पः इति सहकारिणामेकरूपत्वात् भूयस्त्वाच्च एकाकारस्वरूपरसवीर्यविपाकवतैवाङ्कुरादिपरिणामेन भाव्यम् । अतिविचित्रतत्तद्वांस्त्विहावगम्यते, इह चेमे सर्वे वैद्यकग्रन्थाः प्रमाणम्, ये तत्तत्पदार्थानां रसवीर्यविपाकादिवैचित्र्यमाश्रित्य तत्तानि औषधानि उत्पादनीयानि प्रकारविशेषैः बोधयन्तो रोगिणां परश्शतविधानां भैषज्यैः रोगान् निर्हरन्ति । तस्मादस्ति विचित्रा शक्तिः पदार्थेषु ॥

न च वाच्यम्, बीजानि विचित्राणि, तस्मात् कारणभूततद्भेदात् कार्याणामङ्कुरादीनां वैचित्र्यमिति, भौतिकविमर्शशीलिनामग्रेसरोऽपि अणुशो बीजानि परीक्षार्थमुत्पाट्य परिशोधयन् पार्थिवाद्यंशमेवैषु बीजेषु समानमवगच्छतीति, नावयववैचित्र्यहेतुकं परिणामवैचित्र्यमाख्यातुमीष्टे । नापि स्वरूपवैचित्र्यहेतुकं, अभिन्नमेव स्वरूपं तत्तादृशानां बीजानां यत्नतो रक्षति देवदत्तः, परुद्भवानीमानि प्ररोहन्त्युप्तानि, न परार्यादिभवानि, नैव च लेशतो भर्जितानि, येनैषां स्वरूपं मात्रयापि न व्यत्यस्येत; न वा क्षारादिनिक्षिप्तानि कञ्चित्कालं, यान्यैषमोभवानि । तस्मादत्रैवमेवास्थातव्यम् । कालातिपातेन वा भर्जनेन वा क्षारादिप्रक्षेपेण वा लेशतोऽप्यव्यत्यस्तस्वरूपाण्येव बीजानि नष्टविजातीयशक्तिकानि भवन्ति इति ता एवैताः शक्तयस्तत्तज्जलादिसहकारिसमवधाने प्राक्तनाङ्कुरकाण्डप्रकाण्डशाखोपशाखकिसलयपुष्पफलबीजसजातीयाङ्कुरकांडप्रकाण्डशाखोपशाखाकिसलयपुष्पफलबीजाद्यात्मना

तत्तच्छक्त्याश्रयभूतानि तानि तानि बीजानि विपरिणमयन्तीति च। क्व हि वटाश्वत्थादिस्वरूपं? क्व वा तत्तद्बीजादिस्वरूपं? तस्मात् विचित्राः शक्तयः पदार्थेषु सन्तीति, विजातीयशक्तिमद्द्रव्योपादाना विचित्रक्रियासहकारिणी च वर्तुलवस्तुनिर्मितिः गानादिशक्त्याधायिनीति स्थितम्। एतेन तत्तद्यन्त्रविशेषाः अत्याश्चर्यक्रियाजनकाः व्याख्याताः इति चेत्॥

उक्तपदार्थक्रियाशक्तिदृष्टान्तेन मनस्यचिन्त्यशक्तिसमर्थनम्.

हन्त परमसि मित्रं भवान् नः, भिन्नभिन्नपदार्थविशिष्टाः क्रियाः शक्तीर्विचित्रा मनस्यादधति इति नो मतम्। तदेव भवतापि यत्नतस्साधितमिति। ननु नैवाहमेवमभ्यधाम्, येन मां मित्रमात्थ, अनुभवारूढमाख्यानं नस्सर्वं, नैव तु मनस्याधानं शक्तीनां क्रियाभिस्तत्ताभिरनुभवमारोहतीति चेत्—अद्धा नात्थ मनस्याधानं शक्तीनां, आत्थतरां पुनः विचित्रपदार्थविशिष्टाः क्रिया विचित्रा शक्तीर्विचित्रा आदधति इति, तावतैवासि नः परमं मित्रम्। कथम्? तदुच्यते 'शास्त्रदृष्ट्यातूपदेशः' इति। वैचित्र्यमिह लोके तत्तत्प्राणिसमवेतं सुखदुःखादिविषयकं अत्यन्तमुच्चावचं दृश्यते। तदिदं विचित्रकार्यं सत् तत्तदनुगुणं विचित्रं कारणं गमयतीति असकृदवोचाम। तन्न प्रस्मर्तव्यम्। विचित्राः क्रियाः शक्तिविशेषाधायिन्यः विचित्रशक्तिमत्पदार्थविशिष्टा इति त्वमेवात्थ। तदपि न प्रस्मर्तव्यम्। शास्त्रन्तु इयमियं क्रिया इदमिदं फलं जनयतीति बोधयत् पश्यामः, ते वयं परमं मित्रं त्वां व्यपदिशामः=उपदिशाम इति॥

युक्तं चैतत्। मनःप्रधानं हि लिङ्गशरीरं भोगसाधनं, अनाहिततत्तद्भोगविशेषजनकशक्तिकं सत् न विचित्रभोगाय पारयेदिति, अत्रैवामूः क्रियाः शक्तिमादधतीति॥

सदृष्टान्तं शक्तिविषयकविचारलब्धफलकीर्तनम्.

तदयमत्र निर्गलितोर्थः । ‘यथा लोके तत्तादृक्षाणि यन्त्राणि निर्माय उपयोगप्रकारविशेषबोधकं फलविशेषबोधकं विपरीतप्रवर्तनजन्यानिष्टबोधकं तादृशानिष्टनिर्हरणप्रकारविशेषबोधकञ्च पुस्तकमपि सहैव यन्त्रेण तेन तेन विक्रेता क्रेत्रे समर्पयति तद्वदेव ‘मनुष्यसामान्यनिष्ठानि तानि तानि भोगसाधनाख्यसूक्ष्मदेहरूपमनःप्रधानानि यन्त्राणि एवमेवं प्रयोगविशेषेण इदमिदं फलं जनयन्ति विपरीतप्रयोगादिमान्यनर्थादीन्युत्पादयन्ति तत्र तत्रैवमेवं परिहारः’ इत्येवञ्जातीयकार्थबोधका एव वेदाः चत्वारः विविधशाखाविभिन्नाः, स्मृतयश्चासङ्ख्याताः सोपपुराणानि पुराणान्यष्टादश, भारतरामायणशिवरहस्यादीतिहासाः विविधाश्चागमाः, गुरुपरम्परया समर्प्यन्ते,’ इति ॥

लब्धं फलमाश्रित्य मनुष्यैः क्रियमाणातिवर्तनोपेक्षयोः खण्डनं। तदेवं अभिलषितेभ्योत्यन्ताधिकमपि फलजातं समर्पयत् यन्त्रं सूक्ष्मदेहाख्यं मनःप्रधानं, तदुपयोगबोधक शास्त्रञ्च तदनुष्ठानयोग्यः पुरुषः लब्ध्वा अखिलफलेष्वत्यन्तरक्तोपि न प्रयोगमारचयतीति तदिदमुन्मत्तावस्थानान्नातिरिच्यते इति, कालान्तरे यथा महर्षयोन्यथान्यथा धर्ममुपादिशन्, तद्वत् वयमेवात्र काले महर्षयः कालानुगुणं धर्ममन्यथान्यथा उपदिशामः इत्येवं लोकं सर्वं धनलवमदेनाकुलयन्तः तत्तादृशान्येवानर्थजातान्यनुभवेयुः, ये लौकिकं यन्त्रं विपरीतक्रमेण प्रयोजयन्ति ये च इक्षुक्षीरादयो विषपदार्थाः अस्मिन् काले, वत्सनाभादयश्च न मारकाः अपि तु अमृतरूपाः पुष्टिशक्त्याद्याधायकाः इत्यभिसन्धायेक्ष्वादिपरिहारेण वत्सनाभादीनुपयुञ्जते, ते यादृशयादृशान्यनर्थशतान्यनुभवन्ति, इति च उक्तं भवति । न खलु पदार्थविशेषाः क्रियाविशेषा वा नियः-

तात्मशक्तिकाः शक्तिमात्मीयां व्यभिचरेयुरन्यविधिशक्तिका भवेयुर्वेति। तस्मात् सुष्ठूक्तं 'देही सर्वग ईश्वर' इति ॥

विविधशक्तिजमहिम्नां सङ्ग्रहः.

अवगतम्, विचित्राणां असङ्ख्यातफलानां जनिकाः शक्तयः विचित्रशक्तिमत्पदार्थैः एवंविधक्रियाभिश्च जायन्त इति, तादृशशक्त्याधारं च सूक्ष्मदेहाख्यं महायन्त्रं तत्तज्जीवनियतम्, यन्त्रे प्रयोगविशेषैः शक्तयोनेका एवमेवमुत्पादयितव्या इति प्रयोगविशेषबोधका ग्रन्थाः, विपरीतप्रयोगैः जायमानशक्तिजन्यानर्थव्रातनिवर्तनाय तादृशशक्तिनाशजनकप्रयोगविशेषबोधकग्रन्थाश्च। कः पुनरसौ तत्तत्फलवत्वरूपमहिमा आत्मनः स्यात्? स सङ्गृह्यते ग्रन्थगौरवभयात् ॥

अयमर्थोत्रानुसन्धेयः 'प्रयोगो द्विधा कर्मरूप उपासनारूपश्चेति। आद्यो यागदानहोमादिरूपेणानेकधा भिन्न.। तत्र यागो होमश्च अग्नित्रयसाध्यः बहुशः ऋग्यजुस्सामवेदेषु विस्तृतः। दानं च प्रोक्तम्। आथर्वणे होमाः प्रयोगविशेषाश्च बहुशो राज्ञाभादर्तव्याः विचित्रफलजनका एकाग्निसाध्याः कथिताः। दानं च दिविधम्। एवं पुराणादिष्वपि स्वारसिकप्रवृत्तिजननाय बह्वाख्यानपूर्वकं दानादीनि व्रतानि च। उपासनाश्च वेदेषु पुराणादिषु च कर्माङ्गभूताः स्वतन्त्रफलाश्च प्रतिपादिताः तानि तानि विचित्रफलानि उभयप्रयोगजन्यानि तत एवावगत्यानुष्ठाय फलिनो भूयासुः। लेशतोत्र सङ्ग्रह' इति ॥

निष्कामं शिवविष्ण्वादिभजनात् कैलासादिषु बहुकालमुषित्वान्ते ज्ञानेन मोक्षः। सकाम भजनात् बहुकालं तत्रोषित्वा अतिसमृद्धकुले जन्म भुवि। पूर्वसंस्कारात् पुनरपि तथानुष्ठानं अन्ततोनेकजन्मानन्तरं द्वित्रजन्मानन्तरं वा निष्कामानुष्ठानप्राप्तिः ततो मोक्षश्चोक्तपूर्वरीत्या तीर्थविशेषे तपस्यन्तः ब्रह्मलोकं गच्छन्ति। कामनया पुनरा-

गतिः अकामनया ज्ञानात् मोक्षो नात्रागतिः । तदिदं स्वकर्मपूर्वकमेवानुष्ठितं तत्तत्फलं जनयति । तदाह भगवान् व्यासः 'स्वधर्मनिरता एव वर्णाः चत्वार एव च । भवन्त्येव शुभस्यैव कर्मणः फलभोगिनः । स्वकर्मरहिता ये च नरकं यान्ति ते ध्रुवम्' इति ॥

कन्यादाता चतुर्दशेन्द्रकालपर्यन्तं चन्द्रलोके वसेत् । गव्यवस्त्रस्वर्णसर्पिःफलजलादिदातारः मन्वन्तरकालं चन्द्रलोके वसेयुः । सोपस्करगृहदाता विष्णुलोकम् । एवं वापीकूपतटाकादिदाता च । सस्याढ्यभूमिदाने बहुकालवैकुण्ठवासानन्तरं सम्राट् भुवि जायेत । पुत्रपौत्रादिसकलसमृद्धिमांश्च । एवं तत्तद्देयद्रव्यभूम्ना फलभूमापि अवगन्तव्यः । एवं विद्यादाने, अन्नदाने, रोगनिर्हरणे, जीवनकल्पने, बहुजनानुकूलतटाकादिनिर्माणे, च बहुकालं स्वर्गवासः, पुनरपि समृद्धकुले जन्म, पुनरपि तत्तादृशानुष्ठाने प्रवृत्तिः, पुनरपि पुण्यलोकप्राप्तिः, इति अनन्तफलानीमानीति विशेषतो द्रष्टव्यम् । एवमिमानि सर्वजनसाधारणानि प्रदर्शितानि । एवं च नैवंविधदुर्विनीतानां प्रत्यवस्थानावसरः । ये किल 'शास्त्रोक्तं फलजनकमिति वचनं कर्मविषयकं नादर्तव्यं, तदभावे नरकप्राप्तिरिति च । यतः, तेषु तेषु शास्त्रीयकर्मसु किमपि नानुतिष्ठन्ति आङ्ग्लजर्मनीप्रभृतिषु विदेशेषु, बहुसुखिनस्ते भवन्ति, अनुतिष्ठन्तश्च भारते दुःखिनः, विशिष्य वैदिकाः' इति ॥

पूर्वोक्तानामनन्तफलजनकानां इदानीमपि तैरनुष्ठानात् । क्रियमाणकर्मणां च सद्य. फलस्य वैदिकैरनङ्गीकाराच्च, अनुष्ठातृषु फलव्यभिचारवचनस्याश्रद्धेयत्वात् । एवमादीनि असङ्ख्यातानि फलानि तत्तेभ्यः आकारेभ्योवगन्तव्यानीत्युपरम्यते । तस्माच्छास्त्रोक्तरीत्या मनोनिग्रहेण कर्मप्रयोगैः ऐहिकामुष्मिकमहिमेति सिद्धम् ॥

अथ वर्जनार्थं अनर्थजनककर्मप्रयोगसङ्ग्रहः.

ये पुनर्न शास्त्रार्थं अनुसन्दधते, नतराञ्चोदासते, न तमाञ्च वर्जनीयानि वर्जयन्ति, तेऽस्मिन् सूक्ष्मदेहाख्ये महायन्त्रे अत्यन्तानर्थजनिकाः शक्तीरादधते कथमिदमवगम्यताम्? शास्त्रदृष्ट्योपदेशादिति ब्रूमः। पश्यन्ति शास्त्राणि द्वैपायनादयः महर्षिप्रवराः। उपदिशन्ति चैवञ्जातीयकानर्थान् इति ॥

तथाहि—'द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः' इति सङ्ग्रहः। 'अनेकस्थावररूपेण यथा जायन्ते तथा जङ्गमप्राणिरूपेणापि विविधाकारेण निषिद्धकर्मभिर्जायन्त' इति तदर्थः। विशिष्य चोपदिशन्ति—ब्रह्महा कुष्ठी, तैजसापहारी मण्डली, देवब्राह्मणाक्रोशकः खलतिः, गरदाग्निदावुन्मत्तौ, गुरुताडकोऽपस्मारी, गोघ्नोऽन्धाः, धर्मदारत्यागी शब्दवेद्याख्यप्राणी, देवस्वब्रह्मस्वहर्ता कुण्डाशी भगभक्षश्च, न्यासहारी पाण्डुः काणश्च, स्त्रीपण्योपजीवी षण्डः, मृष्टैकाशी वातगुल्मी निषिद्धभक्षको गण्डमाली, ब्राह्मणीगामी निर्बीजी, क्रूरकर्मा वामनः, वस्त्रहारी, पतगः, दीपहारी कौशिकः, मित्रध्रुक् क्षयी, अनृतवाग् मुहुःसंलग्नवाक्, मातृहान्धाः, स्नुषागो वातवृषणः, महापथे मलमूत्रकृत् मूत्रकृच्छ्री, ईर्ष्यालुर्मशकः, तत्तद्रत्नापहारिणः विविधदरिद्राः, वेदविक्रयी द्वीपी, अयाज्ययाजको वराहः; अतिचापल्यात् यतः कुतोप्यश्नन् मार्जारः, कक्षवनादिदाही खद्योतः, पर्युषितभोजी क्रिमिः अदत्तादायी बलीवर्दः, मत्सरी भ्रमरः, गोहर्ता सर्पः, अन्नापहारी अजीर्णी, ज्ञानापहारी मूकः, चण्डालीपुल्कसीगः अजगरः, पतिव्रतादूषकः मरुपिशाचः, शूद्रीगमने दीर्घकीटः, राजाक्रोशी गर्दभः, गोगामी मण्डूकः, जलहारी मत्स्यः, इत्यादि। विस्तरभयात् विरम्यते ॥

सर्वानर्थाः कर्मभिरिति इतस्स्पष्टम् । परिहारास्त्वमीषां आद्यावेवोपक्षिप्ताः आकरेभ्योऽवगन्तव्याः विस्तरभयान्नेह प्रतन्यन्ते । सङ्क्षेपतस्तु यमकिङ्करवर्णनप्रस्तावे—'स्वकर्मनिरतैः सर्वैः शाक्तैः सौरैश्च गाणपैः । अदृश्यैः (दूतैः ताडिताः तांस्तान्नरकान् प्राप्यान्ते स्थावरजङ्गमप्राणिनो जायन्ते इति प्राकरणिकः तत्र सम्पिण्डितोर्थ') पुण्यकृद्भिश्च सिद्धैः योगिभिरेव च । स्वधर्मनिरतैर्वापि विततैर्वा स्वतन्त्रकैः' ॥ इत्यवगम्यन्ते ॥

अथोपासनाख्यप्रयोगान्तरजशक्तितज्जफलकीर्तने.

अवगतः कर्माख्यः यन्त्रप्रयोगः सपरिकरः । अथोपासनाख्ययन्त्रप्रयोगजिज्ञासा । योगिभिरदृश्याः यमकिङ्करा इत्यनुपदमुपादर्शि । योगः पापं अपाकरोति । अपापानां यमकिङ्करैः कृत्यं नास्ति । नातस्ते योगिदृष्टिपथमवतरन्तीति तदभिसन्धिः । न च पापमेव नास्ति । 'द्विजातिकर्मभ्यो हानिः पतनं' इति चैवमादिप्रमाणैः कर्मानुष्ठानयोग्यता अपगच्छति, इत्येवावगमात् इति शङ्क्यम् । दर्शनात् । पश्यामो हि याज्ञवल्क्यादिमहर्षिवचनं 'वेदाभ्यासपरं क्षान्तं पञ्चयज्ञक्रियापरं । न स्पृशन्तीह पापानि महापातकजान्यपि ।' इत्येवञ्जातीयकम् । ते वयं तत्तादृशपापप्रयुक्तैवैषा योग्यता अपगच्छतीत्यवगच्छामः । स्पष्टञ्च पश्यामः योगः पापं निर्हरतीति, आपस्तम्ब आचार्य आचष्ट इति । तथाहि सूत्रम् 'दोषाणान्तु निर्घातो योगमूलइह जीविते । निर्हृत्य भूतदाहीयान् क्षेमं गच्छति पण्डित' इति । दोषाश्चैवमाचार्यैः परिगणिताः 'क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यं अत्याशपरिवादौ असूया काममन्यू अनात्म्यं अयोगः तेषां योगमूलो निर्घात' इति अत्रानात्म्यं अजितेन्द्रियता । अन्ये गुणा निगदव्याख्याताः । योगश्च यमनियमाद्यष्टाङ्गको योगकुण्डल्याद्युपनिषद्भ्यो योग-

सूत्रेभ्यः योगवासिष्ठादिभ्यश्चावगन्तव्यो विस्तरभयात् नेह प्रतन्यते। सर्वाण्यपि पापानि निवर्तयतीति महामहिमायं योगः। यदाह भगवान् याज्ञवल्क्यः—'प्राणायामशतं कार्यं सर्वपापापनुत्तये। उपपातकजातानामनादिष्टस्य चैव हि' साङ्गञ्च योगं सफलं गायति भगवान् वासुदेवोऽष्टश्लोक्या॥

'योगी युञ्जीत सततमात्मानं रहसि स्थितः। एकाकी यतचित्तात्मा निराशीरपरिग्रहः॥ शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः। नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्॥ ११॥ तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः। उपविश्यासने युञ्ज्यात् योगमात्मविशुद्धये॥ १२॥ समं कायशिरोग्रीवं धारयन्नचलं स्थिरः। सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्॥ १३॥ प्रशान्तात्मा विगतभीः ब्रह्मचारिव्रते स्थितः। मनः संयम्य मच्चित्तो युक्त आसीत मत्परः॥ १४ युञ्जन्नेवं सदात्मानं योगी नियतमानसः। शान्ति निर्वाणपरमां मत्संस्थामधिगच्छति॥ १५॥ नात्यश्नतस्तु योगोस्ति न चैकान्तमनश्नतः। न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन॥ १६॥ युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु। युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥ १७॥' इति। योगशास्त्रसम्मतसकलार्थसूत्रमिदं विस्तरभयात् न विव्रियते। अत्र च निर्वाणपरमां मत्संस्थां शान्तिमधिगच्छतीत्याचष्टे। फलविशेषोऽनेन प्रकाशितः। इदञ्च फलमत्र भगवानभिसन्धत्ते, मोक्षरूपत्वेन उत्कृष्टां मद्रूपेण अवस्थानात् मयि अवसानरूपां सर्वदुःखोपशमनीं अवस्थां प्राप्नोतीति। तथाच यद्यद्रूपध्यानं तत्तद्भावः फलं इति स्फुटितम्। ईदृशं च फलं प्रदर्शयन् अन्तर्धानाकाशगमनादिविविधसिद्धीः अणिमा, महिमा, लघिमा, गरिमा, ईशित्वं, वशित्वं यत्र कायावसायितेत्याद्यैश्वर्यादीनि च योगशास्त्रोक्तानि फलानि, एतदपेक्षया निकृष्टानि

मन्यते । स्पष्टश्चायमर्थः अरिष्टनेमिप्रह्लादेन्द्वोद्दालकाद्युपाख्यानेभ्यः अवगम्यते ॥

ते हि समाधावागच्छन्तीः सर्वविधा अपि सिद्धीः प्रतिसञ्चक्षते स्मेति । तस्मात् सर्वपापनिर्हारिण्यः शक्तयः, सर्वफलजनयित्र्यः शक्तयश्च तत्ताद्दक्षोपासनाप्रयोगैः निरुक्ते यन्त्रे आधीयन्ते इति सिद्धम् ॥

यः पुनरतिविरक्तः तस्य सर्वपापनिवृत्त्या परमात्मस्वरूपावस्थाने एता एव शक्तयो निमित्तीभवन्तीत्यपि सिद्धम् । किञ्चान्यत् । यथेह पदार्थाः सर्वे पञ्चभूतजन्यास्सन्तोपि विविधशक्तिभिरेवान्यथान्यथानुभूयन्ते, क्रियाश्च तथेति नैकविधयन्त्रनिदर्शनैः प्रतिपत्तव्यम् । तथेदमप्यवश्यं प्रतिपत्तव्यम् । तथा वेदोदितमन्त्राणां विचित्राः सन्ति शक्तयः ये कर्मसूपयोज्यन्ते, उपासनासु च ये यांश्च स्वातन्त्र्येणैवावर्तनीयान् तत्तन्महिमप्राप्तये विचित्रतररोगादिनिवृत्तये च विदधाति महर्षिः । अतिपीडया क्रन्दति देवदत्तः पिशाचगृहीतः, निकटे निरुन्ध एनं मन्त्रेण मन्त्री विष्णुमित्र , आवर्तयंश्च मन्त्रं समूलघातमुपहन्ति पिशाचम् । तदिदं पश्याम इतस्ततोऽटन्तः । ननु नास्ति पिशाचोऽदर्शनात् । शिरा व्यत्यस्यति कदाचित् कदाचित् देवदत्तशरीरे, तत्तन्त्रावेवेमौ पीडाक्रन्दौ भवन्तः, अद्धा, नेयतास्मन्मनोरथो दह्येत, यत् कारणं शिराव्यत्यासापघातिनी शक्तिरायतते मन्त्रावर्तन इत्यङ्गीकार्यमवश्यमिति यदन्वामरणं नैवंविधं पीड्यते देवदत्तः ॥

स्पष्टश्चायं वृश्चिकदष्टे सर्पादिदष्टे तत्तद्विषजन्तुकृतनैकरोगपीडितेषु च आवर्त्यमानमन्त्रशक्तिविशेषः । नैकेऽनेकत्रैवंविधाः आयुर्वेदमर्मविद्भिः, अनेकतो लब्धावैचित्र्ययोग्यतापत्राविगामितमहार्हन्तीकाङ्क्लेयभिषग्भिर्वा विविधमौषधमुपयोज्य रोगान्तरोत्पत्तिमात्रे निदानीभूयान्ततो हस्तपादादिच्छेदमन्तरेणाशक्यनिर्हरणव्याधय इमे इत्युपेक्षिता, आवर्त्य-

मानमन्त्रविशेषेणैव निरुपद्रवाः कृताः यतो दृश्यन्ते । इदञ्चेह वैचित्र्यं, यदन्यदेहसम्भन्धिना जीवेन सम्पाद्यमाना शक्तिः देहान्तरसम्बन्धिनीमपि शक्तिमपहन्तीति । एतेनानुग्राहिण्यः शक्तयो व्याख्याताः ॥

आहुश्चापस्तम्बादयो महर्षयः 'अथो यत्किञ्च मनसा वाचा चक्षुषा वा सङ्कल्पयन् ध्यायत्याहाभिविपश्यति वा तथैव तद्भवतीत्युपदिशन्ति इति तत्तन्नियमैर्ये मन्त्रशक्तिं सम्पादयन्ति, ते यमुद्दिश्य तदभीष्टसिद्धये सङ्कल्पयन्तो ध्यायन्ति मनसा, वाचावाहुः 'जात सकलश्रेयोनिदानं भूयाः' इति, चक्षुषा वाभिविपश्यन्ति, तदिदं सिध्यत्यस्येति तदर्थः । उपपद्यते च क्वचित् यन्त्रं स्थापयित्वा प्रयोजयति, बहुदूरेऽस्य फलं पश्यामः । यथा वैद्युतो दीपः, वैद्युतं पेषणं, वैद्युतं व्यजनं, वैद्युतं तिलनिष्पीडनं, वैद्युतानि अन्यानि कर्माणीति ॥

न तु तन्त्रीद्वारान्यत्र शक्तिः गच्छतीति युज्यन्त एवञ्जातीयकानि कर्माणि । अतन्त्रीकमेव मन्त्री सिद्धो वा व्यधिकरणं कार्यं जनयतीति कथमिदं विश्वसनीयम्? मधुकरवाणिरत्र पर्यनुयोज्यः । एवञ्जातीयकानाक्षेपानपनुदन्नेवेश्वरः ईदृशे महति कर्मण्येनं प्रावर्तयत समुचितां प्रतिभां प्रायच्छन्नस्मै । अथात्राकाशो वायुर्वा एक एवेति समान एवाश्रयः, तन्न वैयधिकरण्यमापादयितुं साम्प्रतं, तदिदं सर्वमिहापि तुल्यम् । एतेन विचित्रशक्तिभिः भूतवर्तमानभविष्यत्सर्वविधवृत्तान्तज्ञानादिकं अनेकशरीरैरेकेनैव जीवेन बहुविधभोगसम्पादनं अतिदुष्टविषये शापदानानुपदमेव तत्तद्दोषप्राप्तिश्च व्याख्यातम् । शक्त्यभावकृतासिद्धिश्च । अत एवाहुः—'परान्नेन मुखं दग्धं हस्तौ दग्धौ प्रतिग्रहात् । परस्त्रीभिर्मनो दग्धं ब्रह्मशापः कुतः कला"विति । यः पुनरेवंविधमहाशक्तिः तस्य हानिः दाहकमहायन्त्रैर्वा विविधविषैर्वापि न, अन्ततो विद्युतापि । तदाहाम्नायः 'नैनं वैद्युतो हिनस्ति' इति ।

ईदृशशक्त्या अनसूया स्त्र्यपि ब्रह्मविष्णुरुद्रान् महाप्रभावानपि अदम-यत् पुत्रीकरणेनेति" संम्पाद्यैवैवंविधा शक्तिरिति सिद्धम् ॥

इदं पुनः पाठकमहाशयेषु विद्यार्थिषु निवेद्यते । लोकेपि ये ये यत्र नियुक्ताः स्वतः प्रवृत्ता वा तत् तत् यथा यथा अनुष्ठेयं विहितं तदखण्डितमेव यद्यनुतिष्ठेयुः तर्हि अवश्यं तत्तत्फलेन युज्येरन् । इह चाखण्डितयत्ना. तत्ताद्दक्षमहोद्योगवन्तो निदानम् । अयं पुनर्वि-शेषः । जन्मान्तरीयकर्मनिबन्धिनी केषां चित् प्रतिभा विशिष्टा विशि-ष्टतरा विशिष्टतमा च सम्भाव्येत । नैतावतोद्वेगे मनः पातयित्वा क्लैब्यमाश्रयितव्यं, किन्तु शतशः प्रतिबन्धेऽपि आरब्धस्य कर्मणः फल-मासाद्यैव विरम्येत इति दृढव्रता भवेयुरिति । ईदृशमेव दृढं व्रतमा-स्थाय श्रीमच्छंकररामानुजमध्वादिमुख्याः आचार्यमुख्याः परपूज्यतां तत्तत्कृत्यैरत्याश्चर्यभूतैरविन्दन्तेति आवश्यं वर्णनीयमपि तेषां चरित्रं विस्तरभयान्न लिख्यते । असावत्राभिप्रायसङ्ग्राहिणी द्वादशश्लोकी ॥

अत्र च प्रदर्शितसर्वार्थसंग्रहरूपेण वसिष्ठोपदेशेन प्रबन्ध उप-संह्रियते—

प्राप्य व्याधिविनिर्मुक्तं देहमल्पाधिवेदनम् ।
तथात्मनि समादध्यात् यथा भूयो न जायते ॥ १ ॥
दैवं पुरुषकारेण यो निवर्तितुमिच्छति ।
इह वामुत्र जगति स सम्पूर्णाभिवाञ्छितः ॥ २ ॥
ये समुद्योगमुत्सृज्य स्थिता दैवपरायणा. ।
ते धर्ममर्थं कामञ्च नाशयन्त्यात्मविद्विषः ॥ ३ ॥
संवित्स्पन्दो मनस्स्पन्द ऐन्द्रियस्पन्द एव च ।
एतानि पुरुषार्थस्य रूपाणि एभ्यः फलोदयः ॥ ४ ॥

यथासंवेदनं चेतस्तथा तत्स्पन्दमृच्छति ।
तथैव कायश्चलति तथैव फलभोक्तृता ॥ ५ ॥

आबालमेतत् संसिद्धं यत्र यत्र यथा यथा ।
दैवं तु न क्वचिद्दृष्टं अतो जगति पौरुषम् ॥ ६ ॥

पुरुषार्थेन देवानां गुरुरेव बृहस्पतिः ।
शुक्रो दैत्येन्द्रगुरुतां पुरुषार्थेन चास्थितः ॥ ७ ॥

दैन्यदारिद्र्यदुःखार्ताः अपि हीना नरोत्तमाः ।
पौरुषेणैव यत्नेन याता देवेन्द्रतुल्यताम् ॥ ८ ॥

महान्तो विभवास्वादैः नानाश्चर्यसमाश्रयाः ।
पौरुषेणैव दोषेण नरकातिथितां गताः ॥ ९ ॥

भावाभावसहस्रेषु दशासु विविधासु च ।
स्वपौरुषवशादेव निर्वृत्ता भूतजातयः ॥ १० ॥

शास्त्रतो गुरुतश्चेति स्वतश्चेति त्रिसिद्धयः ।
सर्वत्र पुरुषार्थस्य न दैवस्य कदाचन ॥ ११ ॥

अशुभेषु समाविष्टं शुभेष्वेवावतारयेत् ।
प्रयत्नाच्चित्तमित्येष सर्वशास्त्रार्थसङ्ग्रहः ॥ ११ ॥

इति । तस्मात् युक्तमिदमुपव्याख्यानं यदियता प्रबन्धेन प्रपञ्चितम् युक्ततराश्च अभ्युक्ता आर्याः—

न विना मनसो व्यापृतिमिन्द्रियदशकं प्रभवति निजकृत्ये ।
नतरां जीवः तस्मात् मनोवशं सर्वमाख्याति ॥ १ ॥

इहपरलोकजमहिमा विविधो नियतेन मनसैव ।
अखिलोऽनर्थोऽनियतेनैतौ द्वावाद्यभागार्थौ ॥ २ ॥

नायतमानस्यैत् वशीकृतं स्यात् सदैव शास्त्रेण ।
तस्मात् शासितयत्नात् वशगं कुर्यादितीह चरमार्थः ॥ ३ ॥

इति । तत्सिद्धम्—

"**मनसो वशे सर्वमिदं बभूव । नान्यस्य मनो वशमन्वियाय ।**" इति ॥ (का. द्वि. प्र.)

इति शिवसुब्रह्मण्यो मैसूर्संस्थानशालायाम् ।
धर्मे प्रथमाध्यापक आस्तिकसर्वेष्टसिद्ध्यर्थम् ॥ १ ॥
जीवात्ममहिमशक्ती श्रुतिमुखसर्वप्रमाणमाश्रित्य ॥
निरणयन् इयता श्रीश. प्रीणात्वित्यस्ति मे वाञ्छा ॥ २ ॥

इति पण्डितप्रवर (शृंगगिरिजगद्गुरुसंस्थान) वेदान्तविशारद (मद्रपुरी) महीशूरश्रीमन्महाराजास्थानविद्वच्छिवसुब्रह्मण्यशास्त्रिण. कृतिषु आत्ममीमांसाख्य· प्रबन्धः समाप्तः.

---

# त्रिपाद्विद्या.

त्र्यक्षरप्रतिपाद्याय सूर्यमण्डलवर्तिने ।
त्रिविक्रमाय हरये त्रिपाद्रम्याय ते नमः ॥ १

त्रिपादिका त्रिपाच्चैव त्रिपदा त्रिपदी तथा ।
प्रणवस्य तथा विष्णोस्सूर्यस्यापि च वाचकाः ॥ २

बह्वीष्वपि च सङ्ख्यासु सतीषु महतां पुनः ।
आर्याणां * त्रित्वसङ्ख्यायामादरस्सुमहानभूत् ॥ ३

---

* 1. त्रिपदा सावित्री, 2. त्रिविष्टपं, 3. त्रिपुरं, 4. त्रिदोषः, 5 त्रिपुण्ड्रं, 6 त्रिभुवनं, 7. त्रिमूर्तिः, 8. त्रियामा, 9. त्रियुगः (विष्णुः), 10. त्रिशिखः, 11 त्रिरेखः (शंखः), 12. त्रिलोचनः, 13 त्रिवर्गः, 14. त्रिविक्रमः, 15 त्रिवृत्, 16. त्रिवेणी, 17. त्रिशंकुः, 18. त्रिशरणः (जिनः), 19. त्रिस्स्रोताः, 20. त्रिमूर्ति (बुद्धः), 21. त्रिमुखः (बुद्धविशेषः), 22 त्रिमुखा (मायादेवी), 23. त्रिपुरा (देवीविशेषः), 24. त्रिशूलं, 25. त्रिशिराः, 26. त्रिकूटं, 27. त्रिष्टुप् (छन्दः), 28 त्रिसन्ध्यं, 29. त्रिषवणं, 30. त्रिकालः, 31. त्रिसुपर्णः, 32. त्रिदण्डी (मनोवाक्कायदण्डः), 33. त्र्यक्षः, 34. त्रिकायः (बुद्धः), 35. त्रिधामा (विष्णुः), 36. त्रैविद्यः, 37. त्रयी, 38. त्रेता, 39 त्रितन्तु (यज्ञोपवीतं), 40. त्रिगुणः, 41. त्रिपात् (विष्णुः), 42. तापत्रयं, 43. करणत्रयं, 44. तत्त्वत्रयं, 45. त्रिसत्यं, 46. त्रिजटा, 47. त्रिशिखी, 48. शक्तित्रयं (इच्छाक्रियासाक्षाच्छक्तयः), 49. त्रिलोकी, 50. त्र्यक्षरः (प्रणवः).

'त्रयो लोकास्त्रयो वेदास्तिस्रस्सन्ध्यास्त्रयस्स्वराः ।
त्रयोऽग्नयश्च त्रिगुणाः स्थितास्सर्वे त्रयोऽक्षरे ॥'

(योगतत्त्वे)

यदित्थं संस्तुतस्सर्वैः प्रणवस्त्र्यक्षरात्मकः ।
कारणं त्विदमेव स्यादिति मन्यामहे वयम् ॥ ४

त्रिपाच्छब्दस्तु देवेज्यापात्रादिस्थापनाय वै ।
लोहादिनिर्मिते पीठे तन्त्र*कारैः प्रयुज्यते ॥ ५

शिलादार्वादिरचिते विग्रहे भगवान्यथा ।
सान्निध्यं कुरुते नित्यं भक्तैरावाहितः प्रभुः ॥ ६

तथैव ध्यानमात्रेण गम्यस्सर्वत्रगो हरिः ।
त्रिपात्पीठेऽपि सान्निध्यं कुरुते भक्तवत्सलः ॥ ७

नास्ति किञ्चिदसम्भाव्यं सर्वगे सर्वशोषिणि ।
स्तम्भपुत्रे महाभक्तप्रह्लादपरिपालके ॥ ८

तस्मात्त्रिपाद्यां लक्ष्मीशमावाह्यास्मात्त्रयीविदः ।
त्रिकालप्रभवां वार्तां विदुः प्रागिति गम्यते ॥ ९

---

* त्रयः पादा अस्येति त्रिपात्,

"अर्घ्यार्थं लोहादिनिर्मितस्त्रिपादयुक्तः शङ्खाधारः," (इति तन्त्रसारः).

"तत्र त्रिपादिकामारोप्य तदुपरि शङ्खं स्थापयेत्" (इति पूजापद्धतिः).

शब्दकल्पद्रुमे—त्रिपादिकाशब्दः दृश्यताम्.

त्रिपाच्छब्दस्तु ऋग्वेदे तथैवोपनिषत्सु च ।
बहुस्थलेषु भगवद्वाचकत्वेन वर्ण्यते ॥ १०

त्रिपादूर्ध्व इति ब्रूते सत्या वाणी चिरन्तनी ।
अस्यार्थः प्रस्फुरत्येवं पुरुषस्सर्वगो हरिः ॥ ११

आवाहितस्त्रिपात्पीठे भक्तानुग्रहकारणात् ।
तत्रागत्य स्वयं पादमूर्ध्वमुत्थापयत्यपि ॥ १२

पादमुद्धृत्य देवेशः पृष्टान् प्रश्नानशेषतः ।
मनोगतानपि ज्ञात्वा प्रत्युत्तरति सुन्दरम् ॥ १३

जनान् लोकान्तरगतान्प्रष्टुमिच्छा भवेद्यदि ।
तानप्यावेशयत्यत्र सर्वभूतहिते रतः ॥ १४

तदाज्ञावशगास्तेऽपि तत्क्षणादग्रतः स्थिताः ।
स्वं लोकं नाम चारित्रं ब्रुवते भक्तिभाविताः ॥ १५

लोकान्तरगताश्चापि प्रार्थिताः पितरस्तथा ।
पृष्टाः स्ववंशजैर्भक्त्या तेभ्यो ददति चोत्तरम् ॥ १६

ईदृक्त्रिपाद्रहस्यस्य वेत्ता तु विरलोऽधुना ।
तथापि त्रिपदीविद्या गूढमस्ति क्वचित्क्वचित् ॥ १७

अस्तीत्येवोपलब्धस्य ह्यस्तिभावः प्रसीदति ।
नास्तीति ब्रुवतस्सत्यं न किञ्चिदपि वर्तते ॥ १८

त्रिधा बद्धो वृषभो रोरुवीतीति च श्रुतिः ।
वृषभो भगवान्नूनं त्रिपाद्यां भक्तिभावितः ॥ १९

वक्ति भक्तजनाभीष्टमित्यर्थः कल्प्यते बुधैः ।
त्रिपाद्विदामनुभवस्तथैव परिदृश्यते ॥ २०

*श्रुतिः कामदुघा मानं सतां कामगवी यथा ।
प्रमाणमत्र भाष्याणि ह्याचार्याणां पृथक् पृथक् ॥ २१

स्थालीपुलाकन्यायेन मन्त्राः केचन दर्शिताः ।
†दिदृक्षा यदि भूयोऽपि वेदे सर्वत्र दृश्यताम् ॥ २२

---

* तस्य यथा—कप्यासं पुण्डरीकमेवमक्षिणी, (छान्दो. प्रपा. १ मन्त्र ७)—

(1) कप्यासं=कपिपृष्ठान्तः, तद्वदतिरक्तं पुण्डरीकं, तत्सदृशी भगवतः अक्षिणी.

(इति शङ्कराचार्याः)

(2) कं=जलं पिबतीति कपिः-सूर्यः, तेन अस्यते=विकास्यत इति कप्यासं-रविकरविकासितं पुण्डरीकं, तत्सदृशी अक्षिणी;

(3) कं पिबतीति-कपि-पद्मनाळं, तत्रास्यत इति कप्यासं-नाळाग्रवर्ति पुण्डरीकं, तत्सदृशी अक्षिणी;

(4) कं=जले अप्यास्ते=वर्तत इति कप्यासं-गम्भीराम्भस्समुद्भूतं पुण्डरीकं, तत्सदृशी अक्षिणी.

(इति रामानुजाचार्याः)

(5) कप्यासरक्तपद्माक्षः सूर्यगश्चाक्षिगश्च सः.

(इति मध्वाचार्याः)

† (1) त्रिपादूर्ध्वउदैत्पुरुषः.
(2) त्रिपाद्ब्रह्मा पुरुरूपं व्यचष्ट.
(3) त्रिपादस्यामृतं दिवि.
(4) त्रयो अस्य पादाः.
(5) त्रीणि पदा निहिता गुहासु.

आर्याणां भारतीयानां वेदशास्त्रविदामियम् ।
त्रिपाद्विद्या तु महिता बहोः कालाद्दशं गता ॥ २३

कदाचिद्भारतात्खण्डात्साभूद्द्वीपान्तरं गता ।
द्वित्रसाहस्रवर्षेभ्यः पूर्वं क्रिस्तस्य जन्मतः ॥ २४

तामेतामद्भुतां विद्यां ग्रीस्देश्यास्समवाप्नुवन् ।
इति चारित्रवेत्तॄणां मानसे प्रतिभाति नः ॥ २५

*ग्रीस्देश्याः पण्डिताः पूर्वं भारतात् खण्डतल्लजात् ।
प्राप्याद्भुतरहस्यानि स्वकं द्वीपं गताः पुनः ॥ २६

---

(6) त्रिधा बद्धो वृषभो रोरवीति.
(7) त्रेधा निदधे पदम्.
(8) त्रीणि पदा विचक्रमे.

इत्यादि.

*"That the Hindus derived any of their Philosophical ideas from the Greeks seems very improbable; and if there is any borrowing in the case, the latter were most probably indebted to the former" (H. H. Wilson.)

"The Indians were in this instance teachers rather than learners." (H. T. Colebrooke)

(1) H. H. Wilson's Preface to the Sankhya-karika, 1837 (p ix)

(2) H. T Colebrooke's article in the Transactions of the Royal Asiatic Society, 1827. Vol I, p 579.

(3) H. M. Elphinstone's History of India, 1866, pp. 137-138.

(4) M. William's Indian Wisdom, pp. 68-72.

* ग्रीस्देश्या भारते वर्षे चन्द्रगुप्तस्य संसदि ।
मेगस्थनीस्प्रभृतयो बभूवुरिति गम्यते ॥ २७

† पञ्जाब्देशादुपक्रम्य गुजराद्विषयावधि ।
(B.C 250-75.)
ग्रीस्देश्यानां राज्यभारो बभूवेति पुराविदः ॥ २८

‡ ते प्रापुर्बीजगणितं भारते बुधलोकतः ।
ज्योतिर्ग्रन्थस्थविषयानन्यांश्चेति विमर्शकाः ॥ २९

प्रमाणत्वेन बहुशो यवनेभ्यश्च पण्डितैः ।
ज्योतिर्ग्रन्थस्थविषया भारतीयैस्समादृताः ॥ ३०

यवनाचार्यनाम्नैव प्रथिताद्ग्रीसपण्डितात् ।
§ राशिचक्रं तथा होरां वराहमिहिरोऽग्रहीत् ॥ ३१

विमर्शकास्तु भाषन्ते पण्डिता भारतोद्भवाः ।
यवनाश्च तथान्योन्यं विज्ञानं प्राप्नुवन्निति ॥ ३२

---

* मेगस्थनीस्, एन्तियोकस्, डियिमाकस्, टलमिडियोनिसिरस् एते B.C. 300 शतकेभ्यः पूर्वमासन्.

तिसिलस् चन्द्रगुप्तसुतस्यामित्रघातस्य सभायामासीत्.

† Weber's H. I. Literature, p. 254 and Transactions of M. L. Society, p. 72.

‡ The Khalsi Inscription in Cunningham's Archæological Survey, I, 207.

§ Kern's Preface to Brihat Samhita of Varahamihira, pp. 28, 29, 48, 52, 54.

त्रिपाद्विद्याप्यनेनैव क्रमेण ग्रीसवासिभिः ।
आर्याणां वेदतो हृत्वा स्वं द्वीपं प्रापिता ध्रुवम् ॥ ३३

तैस्त्रिपादित्ययं शब्दस्त्रैपोडासिति कथ्यते ।
तत्र सूर्यः समाविश्य दृष्टादृष्टे वदत्यपि ॥ ३४

ईदृशः प्रत्ययस्तेषां यवनानामभूत्पुरा ।
संवदत्यमुमेवांशं ऋग्वेदोऽपि पुरातनः ॥ ३५

* विचक्रमे पदा त्रीणि विष्णुर्गोपेतिमन्त्रतः ।
† विष्णुस्सूर्यः पदा त्रीणि वक्त्युदन्तान् त्रिकालगान् ॥ ३६

इत्यर्थः कल्पितस्साद्भिस्त्रिपाद्विद्याविशारदैः ।
विष्णुः सूर्य इति प्राह निरुक्ते भाष्यकृत्स्वयम् ॥ ३७

ईदृशार्थस्य करणे मार्गदर्शी महामुनिः ।
निरुक्तभाष्यकर्ताऽभूदस्माकं शब्दतत्त्ववित् ॥ ३८

* विष्णुः=त्रिपात्प्रविष्टः सूर्यः, पदा=पादोत्थानेन, त्रीणि=त्रिकालप्रभवानि कार्याणि, विचक्रम=आक्रमते आवेदयति—इति श्रुत्यर्थः.

† इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्—(ऋक्-१-२२-१७).
त्रीणि पदा विचक्रमे विष्णुः—(ऋक्-१-२२-१८).

विष्णुः=सूर्यः, त्रेधा निदधे पदम्—पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः. पार्थिवोऽग्निर्भूत्वा पृथिव्याम्, अन्तरिक्षे वैद्युदात्मना, दिवि सूर्यात्मना.

विष्णुः=सूर्यः, उदयगिरावुद्यन्नेकपदं निधत्ते. मध्यन्दिने अन्तरिक्षे, गयशिरसि अस्तगिरावित्यौर्णनाभिः.

(निरुक्ते ११-११-१९—दुर्गाचार्यः)

त्रिपाद्यां महती श्रद्धा ग्रीस्देश्यानां पुरा भवेत् ।
कदाचिद्यावने देशे सर्वत्रेयं ततोऽभवत् ॥ ३९

*पुरी डेल्फीति महिता स्थानमासीत्रिपाद्विदाम् ।
अथेन्सपि तथा ख्याता तत्र नार्यः प्रवर्तिकाः ॥ ४०

पिथियेति बभूवासां संज्ञा सर्वजनादृता ।
तास्तु त्रिकरणैश्शुद्धा ब्रह्मचारिव्रते स्तिथाः ॥ ४१

तादृश्य एव ता नार्यस्त्रिपाद्विद्याप्रवर्तिकाः ।
ग्रीस्चारित्रविदामेतदद्यापि न तिरोहितम् ॥ ४२

प्रक्षाळ्य पादौ हस्तौ च पीत्वा शुद्धोदकं ततः ।
अलङ्कृत्य स्वमात्मानं शुद्धवस्त्रेण मण्डिताः ॥ ४३

त्रिपात्पीठं तु ता नार्यश्शुद्धे संस्थाप्य मन्दिरे ।
तस्य पूजादिकं कृत्वा धूपं चाधूप्य सर्वतः ॥ ४४

पश्चात्तस्योपरि स्थित्वा वदेयुश्च शुभाशुभे ।
द्रष्टॄणां तु तदा तासु देवताबुद्धिरुद्भवेत् ॥ ४५

प्राश्निकास्तु तदागत्य पृच्छेयुः स्वं मनोगतम् ।
उत्तरं पद्यरूपेण प्राप्नुयुस्तन्मुखोद्गतम् ॥ ४६

---

* क्लासिक् मिथ् अंड् लेजंड् पुस्तके, २२ पुटे, तथा एन्सैक्लोपिडिया ब्रिटानिकाख्यकोशग्रन्थे ट्रैपाड् शब्दे च दृश्यताम्.

See also "Greek Life at Home," p 342, and History of Greece and Delphi.

अस्माभिर्दैववाणीति यावनैरारेकल्लिति ।
आवेदके परोक्षस्य विषयस्य प्रयुज्यते ॥ ४७

त्रिपदीं पुरतः कृत्वा दृष्टादृष्टे शुभाशुभे ।
परोक्षविषयांश्चापि वदेयुस्ताश्शुभाङ्गनाः ॥ ४८

आसां तु महती संस्था ग्रीस्देशे समवर्तत ।
इत्यद्यापि वदन्त्येव ग्रीस्चारित्रविदो जनाः ॥ ४९

अवर्धत यदाम्नाया प्रष्टॄणां क्रमशः पुरा ।
पुरुषाश्चापि तां विद्यां प्रवर्तयितुमुद्यताः ॥ ५०

*"म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम् ।
ऋषिवत्तेऽपि पूज्यन्ते किं पुनर्दैवविद्द्विजः ॥"

मुक्तकण्ठं वदत्येवं गर्गाचार्यो महामनाः ।
विशालहृदया नूनं भारतीया विपश्चितः ॥ ५१

पुरा यवनशब्दोयं ग्रीस्देशप्रभवान् प्रति ।
प्रयुज्यमानो बहुशः पुराणादिषु दृश्यते ॥ ५२

त्रिपाद्विद्या बहोः कालाद्यावनं द्वीपमास्थिता ।
अद्यापि भारते वर्षे जीवतीत्येतदद्भुतम् ॥ ५३

ग्रीस्देशभूपतिः कश्चित्पुरा जित्वा परान्नृपाः ।
तदीयानि महार्घाणि रत्नानि विविधानि च ॥ ५४

* गर्गसंहितायां दृश्यतामयं श्लोकः.

सौवर्णं राजतं चापि वस्त्राण्याभरणानि च ।
अपहृत्य स्वकं द्वीपं प्रायाद्भूपालसत्कृतः ॥ ५५

तेष्वाहृतेषु दशमं भागं द्रव्यं महीपतिः ।
प्रदाय स्वर्णरत्नाद्यैस्त्रिपदी निर्ममे पुरा ॥ ५६

देवागारे पवित्रां तां प्रतिष्ठापितवानिति ।
*ग्रीस्चरित्रस्य वेत्तारः कथयन्ति सहेतुकम् ॥ ५७

पण्डितानां कवीनां च सन्मानसमये नृपः ।
दद्यात्त्रिपदिकामेकां किरीटं चेति कथ्यते ॥ ५८

†यथास्मद्भारते वर्षे देवतानां गृहोपरि ।
गरुत्मान् हनुमान् शङ्खश्चक्रं सिंहस्तथा वृषः ॥ ५९

स्थाप्यन्ते देवचिह्नानि तथैव ग्रीस्निवासिभिः ।
देवागाराग्रभागेषु त्रिपद्यस्स्थापिताः पुरा ॥ ६०

अथेन्स् पुरे तथान्यत्र डेल्फीतिप्रथिते पुरे ।
त्रिपदीमन्दिराण्यासन् त्रिपदीवीथिकापि च ॥ ६१

ग्रीस्देश्यास्तु जनाः पूर्वं त्रिपदीं परदेवताम् ।
मत्वाभ्यर्च्य वरानिष्टान् प्राप्नुवन्निति हि प्रथा ६२

* एन्सैक्लोपिडियाब्रिटानिकाख्यकोशग्रन्थे ट्रैपाड् शब्दः परिदृश्यताम्.

† लैफ् इन्षेण्ट् अथेन्स् p. 32 बै टि. जि. टिक्कर्, (T. G. Ticker) ह्याण्ड्बुक्स् आफ् आर्क्युयालजि अण्ड् आण्टिक्विटिस्.

स्वं स्वमिष्टं समुद्दिश्य पण्डिताः पामरास्तथा ।
भूपालाश्च दरिद्राश्च प्रार्थयेयुस्त्रिपादिकाम् ॥ ६३

*एवं रूपा बहुविधा ग्रीसदेशप्रभवाः कथाः ।
बुधाश्चारित्रवेत्तारो वर्णयन्ति सहेतुकम् ॥ ६४

अज्ञो वास्तु तथा प्राज्ञः मूढो वास्तु तथान्यथा ।
चित्ते यदि भवेच्छ्रद्धा तत्र सर्वं प्रतिष्ठितम् ॥ ६५

श्रद्धावतां गुरुमतां भगवानन्तरास्थितः ।
सद्भक्त्या पूजितस्सम्यक्किं किं न कुरुते प्रभुः ॥ ६६

तस्माद्गुरूक्तमार्गेण परिशुद्धे मनोरमे ।
धूपसन्धूपिते स्थाने प्रतिष्ठाप्य त्रिपादिकाम् ॥ ६७

प्रक्षाळ्य पादौ हस्तौ च द्विराचम्य ततः परम् ।
त्रिपात्पीठस्य पुरतश्शुद्धस्समुपविश्य च ॥ ६८

पुष्पैरभ्यर्च्य विधिवद्ध्यात्वास्वाभीष्टदेवताम् ।
प्रार्थयेत्तत्र सान्निध्यं शुद्धेनैकाग्रचेतसा ॥ ६९

---

*डेल्फि, पिथिया, आरकल्, ट्रैपाड् इत्येते शब्दाः—

1 हिस्टरि आफ् ग्रीस्—D B Bury.

2. क्लासिक् मिथ् अण्ड् लेजण्ड्. by A R. Hope Moncrifft

3. दि हाम् लैफ् आफ् दि एन्षन्षण्ट् ग्रीक्स्, H. Blumner.

4. ए षार्ट् हिस्टरि आफ् ग्रीस्, by W. S. राबिन्सन् ग्रन्थेषु दृश्यन्ताम्.

निधाय हस्तयुगळं त्रिपादुपरि साधकः ।
ध्यानगम्यं जगन्नाथं ध्यायन्नासीत भक्तितः ॥ ७०

श्रीमानभीष्टवरदस्त्रिपात्पीठमुपागतः ।
वर्णमालाक्रमेणेष्टं पदमुद्धृत्य भाषते ॥ ७१

प्रत्यक्षं त्विदमस्माकं नात्र कार्या विचारणा ।
सत्यं सत्यं पुनस्सत्यं संशयात्मा विनश्यति ॥ ७२

आलोड्य वेदवाक्यानि चरित्राणि विचार्य च ।
मयाऽधुना त्रिपाद्विद्या स्थापिता सप्रमाणकम् ॥ ७३

खला निन्दन्तु वा कामं सन्तस्तुष्यन्तु वा भृशम् ।
न मे व्यथा न मे तुष्टिः प्रेरकस्त्वत्र माधवः ॥ ७४

महीशूरमहाराजतुर्यकृष्णमहीपतिः ।
अनन्तशयनाधीशस्तथा मैथिलभूपतिः ॥ ७५

तथा रीवामहारजस्तथा काशीधरापतिः ।
वङ्गीया विबुधाश्चैते यं हीरकटकादिभिः ॥ ७६

राङ्कवैश्च तथा वस्त्रैर्बिरुदैः पर्यतोषयन् ।
सोऽयं वात्स्यबुधश्रेष्ठगीताचार्यतनूभवः ॥ ७७

चक्रवर्तीति विख्यातो राजगोपालकोविदः ।
त्रिपाद्विद्यामिमां गुप्तां प्रकाशं नीतवान्मुदा ॥ ७८

*यत्करोषीति यः प्राह गीताचार्यो रथे स्थितः ।
अनेन प्रीयतां सोऽयं सत्यभामासमन्वितः ॥ ७९

नागपाशेन सम्बद्धं मूर्छितं जानकीपतिम् ।
यस्समुज्जीवयामास सोऽव्यान्नः कुलदैवतम् ॥ ८०

(पाठान्तरम्)

यो नागपाशसम्बद्धं मूर्छितं जानकीपतिम् ।
जीवयामास गरुडः स मां रक्षतु सर्वदा ॥ ८१

इति श्रीवत्सकुलतिलक–विद्वच्चक्रवर्ति–चक्रवर्तिगीताचार्यस्य तनूजन्मना साहित्यरत्न–सरळकविसूरि–विद्याविभूषण–विद्यावाचस्पति–काव्यविशारदज्ञानगुणाकरेत्यादिबिरुदाङ्कितेन महाविदुषा राजगोपालसूरिणा कृतासु कृतिष्वियं त्रिपाद्विद्या सम्पूर्णा.

---

*यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

## यज्ञियपशुहिंसाविचारः.

---

अथ पशुहिंसायज्ञाः कार्या न वेति विचार आरभ्यते—

अथ पशुहिंसा यज्ञेषु कार्या । न च 'न हिंस्यात्सर्वा भूतानि' इति निषेधात्कथं हिंसा स्यादिति वाच्यं ।' रागतः प्राप्ताया एव हिंसायाः तेन निषेधात् । क्रत्वर्थकसंज्ञपने तु न रागतः प्रवृत्तिरस्ति । किं तु विधिबलादिति प्राभाकरोक्तेर्नात्र तन्निषेध इत्यस्यैव न्याय्यत्वात् । न च 'सर्वत्र विना रागं प्रवृत्त्यसंभवान्नेयं व्यवस्था युक्ता । किं तु 'अग्नीषोमियं पशुमालभेत इति 'सप्तदश प्राजापत्यान्पशूनालभते' इति च विध्यादिबोधिताया हिंसाया निषेधायोगात् । 'पदे जुहोति' इत्यनेन विधिविहिताहवनीयहोमादेः सङ्कोचवत्क्रत्वर्थकविधिविहितसंज्ञपनातिरिक्तहिंसानिषेधकत्वमेव तस्येति कौमारिलतार्किकोक्तं युक्तमिति वाच्यं । तत्र हिंसाया आप्तप्रेरणाविषयत्वेन पुरुषेष्टविषय इव क्रतुप्रकरणेन क्रत्वर्थविषयत्वेप्युक्तरीत्या निषेधविषयतया पापभवनेनाऽनिष्टहेतुत्वबाधे मानाभावेन निषेधस्य हिंसायां पुरुषानिष्टबोधकत्वेन विरोधाभावात् । परकीयसुन्दरीगमनादौ समावेशदर्शनात् । एवं च क्रतुप्रकरणे विहितत्वादग्नीषोमीयपश्वालम्भनस्य क्रतूपकारकत्वमेव 'न हिंस्यात्' इत्यनेन चाधर्मजनकत्वमेवेति बोधनेन विरोधाभावात्समावेश एव । न च क्रत्वर्थे मारणं हिंसिधातुवाच्यं न भवति । यथा हि रोषादिकृते शरीरच्छेदादौ निग्रहो भवति न रागादिकृते तद्वत् । किञ्च 'न वा उ एतन्म्रियसे न रिष्यसि न देवां इदिदेषि यथा सत् । यत्र यन्ति सुकृतो ना

पि दुष्कृतस्तत्र 'देवस्त्वा सविता दधातु' इति श्रुत्या पशुस्वर्गार्थतयानुग्राहकमिति वाच्यं । मरणफलोपहितक्रियाकरणत्वं हिंसिधातोः प्रवृत्तिनिमित्तम्। मरणकारणत्वमात्रस्य योग्यतारूपस्य ग्रहणे लक्ष्योद्देश्यकखड्गादिप्रक्षेपादन्यस्य मरणेति (वधेति) व्याप्तिः । मरणफलकत्वमात्रस्य निवेशे गवादिमरणकतडागादिनिर्माणेतिव्याप्तिः । न च क्रत्वर्थकहिंसाया अपि हिंसात्वे पश्वनुग्राहकत्वानापत्तिः । व्रणशान्त्यर्थकच्छेदादेश्छिदिधातुवाच्यत्वेप्यनुग्राहकत्ववत्पशुहिंसायाः हिंसात्वेप्यनुग्राहकत्वसम्भवादिति वाच्यं । तस्या अपि हिंसात्व स्वीकर्तव्यमेवेति 'न हिंस्याद्' इति निषेधस्य दुर्वारत्वात् ॥

नन्वालम्भनमत्र स्पर्शः । अन्यत्र 'वत्समालभेत' इति वाक्ये तदर्थकत्वनिर्णयात्। 'विशये प्रायदर्शनात्' इत्यधिकरणे मीमांसकैरालम्भ शब्दे स्पर्शार्थकत्वोक्तेश्च । अत एव ब्रह्मचारिणां निषेध्येषु 'स्त्रीप्रेक्षणालम्भे' नि गौतुमेन सूत्रितम्। आलम्भनं=स्पर्श इति हरदत्तः। अत एव त्रिवृदर्थाधिकरणे 'त्रिवृदग्निष्टुदग्निष्टोमः' इत्यत्र त्रैगुण्यवाची उत स्तोत्रीयानवकार्थवाचीत्युपक्रम्य 'त्रिवृद्बहिष्पमानम्' इत्युक्ते स्तोत्रीयाणां नवकवाचीति स्तोत्रीयानवके तत्र प्रयोगदर्शनात् 'त्रिवृदग्निष्टुदग्निष्टोमः' इत्यत्रापि तदेव ग्राह्यमिति सिद्धान्तितम्। एवं च हिंसालाभः कथमिति चेद्—इत्थं 'प्राक्छिरसं प्रत्यक्छिरसं वा बर्हिषि उत्तरपादं निधाय प्राङ्नाभेस्तृणवानमन्तर्धाय 'वेदिवपामुद्धरेद्' इत्यादिविधानात् । विशसनं=वधं विना देवतोद्देश्यकद्रव्यत्यागरूपयागासम्भवात् । अङ्गयागविशसनप्रकारोपदेशाभ्यां पशुत्वसाधकैः प्राचीनपशुसंस्कारैश्चाक्षेपलभ्या सा । एवंचाक्षेपलभ्यार्थेन विरोधेपि वेदस्याऽप्राप्रसक्त्यभावेन तत्संङ्कोचे न मानम्। अन्यतराप्रामाण्यभ्रान्त्या हि सङ्कोच । बाह्यहिंसाजन्यपापतुल्यपापसत्त्वेपि तद्दोषसहिष्णोरेव राग-

वशीकृतस्य श्येनादाविव ज्योतिष्टोमादावपि प्रवृत्तिरुपपद्यते । हिंसाविधेरभावात्तक्रकौण्डिन्यन्यायेनाऽविरोधेपि निषेधस्य विहितेतरहिंसापरत्वाद् विशेषविधिना बाध्यतइत्युक्तिस्त्वयुक्तैव ॥

किञ्च 'न हिंस्यात्' इति निषेधः शीघ्रोपस्थितिकत्वात्पुरुषार्थकहिंसाया एव भवेत् न क्रत्वर्थाया हिंसायाः । विलम्बोपस्थितिकत्वात् 'न स्त्रियमुपेयात्' इत्यत्रेव आख्यातस्य (स्यैव) कर्तृवाचकतया पुरुषार्थकत्वैस्यैव न्याय्यत्वात् । भावनार्थकत्वेपि तया कर्तुराक्षेपः । न च क्रत्वाक्षेपकं किंचिदस्ति । येन 'अथातोग्निष्टोमेन यजति' इत्यत्राऽग्नेर्यजिधातुवाच्ययागविशेषत्ववदिह स्यात् । तत्राऽपि पर्णताया जुह्वाक्षिप्तक्रतुशेषत्ववत् । नाऽपि 'नानृतं वदेत्' इत्यत्र प्रकरणाज्ज्योतिष्टोमाङ्गत्ववदिह स्यात् । एव च यदर्थोनिषेधस्तदर्थमेव निषेध्यमिति नियमेन अनारभ्याधीतत्वात् पुरुषार्थहिंसाया एव निषेधो न क्रत्वर्थहिंसायाः युक्त: । पुरुषार्थस्नुचपगतमांसभक्षणादिनिषेधस्य क्रत्वर्थकत्वदर्शनेन् त्वदुक्तनियमस्य व्यभिचरितत्वात् । श्रुतौ तत्प्रकरणपाठेन क्रत्वर्थकहिंसाया अपि परम्परया पुरुषोपकारकत्वेन पुरुषार्थकत्वं च । फलसाधनेपि रागत एव प्रवृत्तेर्न विधेः प्रवर्तकत्व साक्षात् । किं तु मदिष्टसाधनताज्ञानलिङ्गकमत्कृतिसाध्यत्वज्ञानद्वारा । तेन श्येनस्य रागजन्यप्रवृत्तिविषयत्वेन विधेरौदासीन्यान्न तस्यानर्थहेतुत्वं विधिनाऽपाक्रियते । अग्नीषोमीयहिंसायां त्वङ्गभूतायां फलसाधनत्वाऽभावेन विधिरेव प्रवर्तकः । न च स्वविषयस्याऽनर्थहेतुतामुक्तरीत्या प्रतिक्षिपतीति प्रधानभूता हिंसा दोषाय न क्रत्वर्थेति ॥

न च 'यज्ञार्थं पशवस्सृष्टाः स्वयमेव स्वयंभुवा । यज्ञोस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः । या वेदविहिता हिंसा नियतास्मिंश्चराऽचरे । अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ' इति मन्वादिस्मृतिवाक्या-

दिभिः पापाभावप्रतिपादकैर्निन्दाप्रायश्चित्तोपदेशाद्यसमभिव्याहृतविधिवाक्यबोध्यप्रवर्तनायाः स्वविषयप्रवृत्तिविषये धात्वर्थे सामान्यतोऽनर्थप्रतिक्षेपकत्वकल्पनेन सामान्यनिषेधस्य तदतिरिक्तपरत्वम् । जुह्वा क्रतोराक्षेपेण पर्णतयाः क्रत्वर्थकत्ववदाक्षेपलभ्याया अपि विधितात्पर्यविषयत्वेन तत्राऽप्यनर्थहेतुत्वप्रतिक्षेपात् । (निराकरणादित्यर्थः) । एतेन नाऽत्र हिंसा शाब्दी किन्त्वार्थीति शाब्द्यां विधितात्पर्यविषयभूतायां तत्कल्पनेप्याथ्यामत्र तदतात्पर्यविषयभूतायां कथं तत्कल्पनमिति परास्तम् । अत एव 'हिंसा चैवाऽविधानतः' इत्यविधानेन कृता हिंसैव पापजनिकोक्ता । श्रुतिरपि 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः' इत्याह । तीर्थं=यज्ञः । तीर्थं शास्त्राऽध्वरेति कोशात् । अत एव मरणान्तप्रायश्चित्तस्याहवे अभिमुखस्य लक्ष्यभूततया विज्ञाप्य स्थितस्य च हनने उचितदण्डरूपशूरचोरहननादीनां न पापजनकत्वम् । अन्यथा करणे तु दोष एव । तथा च स्मृतिः—

'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् ब्रह्मनिष्ठश्च रणे चाभिमुखो हतः ॥
राजभिर्धृतदण्डश्च कृत्वा पापानि मानवाः ।
निर्मलास्स्वर्गमायान्ति सन्तस्सुकृतिनो यथा ॥' इति ॥
'स्तेनः प्रकीर्णकेशो मुसली राजानमियात्कर्म चाचक्षाणः ।
फलतो वधमोक्षाभ्यामघ्नन्ननघो राजा ॥' इति च ॥

हिंसकस्य न विधिरिति तस्य दोष एवेति । न । 'न दोषो हिंसायामाहवे' इति गौतमोक्तिविरोधात् । शुद्ध्यर्थं विहितमरणे दोषापादनस्याऽयुक्तत्वात् । चोराद्यवधे राज्ञो दोषश्रवणाच्च । तस्मादनिन्दितहिंसातिरिक्तविषयोयं 'न हिंस्याद्' इति निषेधः (अनिन्दिता=अगर्हिता । साचानुपदिष्टप्रायश्चित्तिका हिंसा) इति वाच्यम् ॥

मनुवचने ' अवधः ' इत्यत्र ' अनुदरा कन्या ' इत्यादाविवाऽल्पार्थे नञित्यङ्गीकारेणाऽल्पपापजनकता स्वीक्रियते । अन्यथा ' घटोऽघटः ' इतिवदस्याऽबोधकत्वेनावधपदस्य पापाजनकत्वे लक्षणापत्ति । न चेष्टापत्तिः । यज्ञानुपक्रम्य ' अहिंसा परमो धर्मो गीतो वै मनुना पुरा ' इति ब्रह्मवैवर्ते प्रथमखण्डे उक्ततया मदुक्तस्यैवौचित्यात् । एतेन तदन्यहिंसाया अधर्मत्वपरमिदमित्यपास्तम् । उपक्रमविरोधापत्तेः । मनुवचने अस्येत्यस्य अहिंसारूपधर्मस्येत्यर्थः । अत एव याज्ञवल्क्येन ' अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहाः ' इति धर्मसाधनत्वं तस्या उक्तम् । ' गृहेपि निवसन्विप्रो मुनिर्मांसविवर्जनात् ' इतिवत्तत्राविहितस्य पृथगेव निषेधाद्विहितस्यापि त्यागार्थमिदम् । पूर्वं बाह्यसमपापत्वे द्वेषोत्पत्त्या रागस्योत्तेजकत्वेन प्रवृत्तिः । अत्र पक्षे द्वेषं विनैवाऽल्पीयःप्रायश्चित्तेन परिहर्तुं शक्येयं प्रवृत्तिरिति बोध्यम् । इदमेवाऽत्र परमत्वं पापाऽजनकत्व नामास्याल्पीयःप्रायश्चित्तापनोद्यत्वरूपमित्युक्तम् । बहुतरसुखानुविद्धतया दुःखनान्तरीयकश्रमे इव तदभावे इत्यपि बोध्यम् । पशुहिंसायाअहिंसात्वमिति तु शबरस्वामिभाष्यकारा अप्याहुः ॥

किं च महतः फलस्य कामनया क्षुद्रे न द्वेषः । पशुहिंसाजन्यपापस्याऽल्पप्रायश्चित्तोपदेशेन बहुव्ययायाससाध्ययागजन्यस्वर्गात्प्रथममेवास्य मनुना यागविषयेल्पत्वबाधनात् । एवं च न तद्बलेन विधेः स्वविषयेऽनर्थहेतुताप्रतिक्षेपकत्वम् ॥

किं च यागीयपशुहिंसायां पापमुत्पद्यत एवेत्याशयेन भगवद्गीतायां 'यज्ञानां जपयज्ञोस्मी' त्यादिना जपयज्ञस्याऽहिंसारूपत्वेन प्राशस्त्यमुक्तम् ॥

किंच ' वेपथुश्च शरीरे मे रोमहर्षश्च जायते ' इत्यन्तमर्जुनवाक्यं समाकर्ण्य उत्तरत्वेन दत्तेन ' स्वधर्ममपि चावेक्ष्य न विकंपितुमर्हसि ' इत्यनेन स्वधर्ममात्मनो नाशाभावं च पर्यालोच्येति समा-

धाय, 'न च श्रेयोनुपश्यामि' इत्याक्षिप्य 'धर्म्याद्धि युद्धाच्छ्रेयोन्यत् क्षत्रियस्य न विद्यते' इत्युपक्रम्य समाधाय, 'सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ। ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि' इत्यनेन विहितेपि युद्धे 'न च श्रेयः' इति निषेधान्यथानुपपत्त्या पापं वदता तत्रासमदृष्टेर्यज्ञेपि तदुक्तप्रायमेव ॥

न चापशब्दज्ञानजाऽधर्मस्य 'यथा कूपखननकाले मृदालिप्त स्ततो जलं लब्ध्वा तं लेपं दूरीकरोति फलान्तरं च लभते' इत्येवंरूपपस्पशामहाभाष्योक्तकूपखानकन्यायेन पशुहिंसायुक्ताग्निष्टोमादियज्ञानुष्ठानेन तत्पापनाशः स्वर्गादिफलान्तरं चेति नोक्तदोषावकाश इति वाच्यम्। 'यावद्वचनं वाचनिकम्' इति न्यायादपशब्दप्रयोगस्यैवाधर्मत्वेप्यपशब्दज्ञानादधर्मस्यावाचनिकत्वेन केवलं वैपरीत्यमात्रेण कल्प्यस्यातिस्वल्पत्वादुत्कृष्टेन साधुशब्दज्ञानधर्मेण नाशेपि 'न हिंस्याद्' इति वचनबोधितपापस्य तेन यज्ञानुष्ठानजधर्मेण वचनं विना नाशायोगात्। 'स्वधर्ममपि चावेक्ष्य' इत्याद्युक्तिविरोधापत्तेश्च। यज्ञानुष्ठाने पशुहिंसाजन्यदुःखस्याल्पत्वेपि तत्प्रयोज्यविहितप्रायश्चित्तेऽकृते तद्दुःखंपरिपच्यत एवेति साङ्ख्योक्तरीत्या देवेन्द्रादेः शताश्वमेधानुष्ठानजफलस्वर्गादिभोगसमयेऽनेकशो रावणमहिषासुरादिभ्यो दुःखपरम्परा श्रुतिपुराणादिषूपवर्णिता। यज्ञान्तर्गतहिंसाजन्यपापफलस्य यज्ञफलभोगान्त रुत्पत्तेरुपपत्तिसिद्धत्वात्। एतेन ततः पूर्वं तदनन्तरं वा तत्फलोपभोग उचितः न तु तत्फलानुभवसमये पापफलोपभोगवर्णनमुचितमित्यपास्तम्। न च 'अध्वर इति यज्ञनाम, ध्वरतिर्हिंसाकर्मा। तत्प्रतिषेधोऽध्वरः' इति निरुक्तम्, 'अहिंस्र' इति तद्भाष्यमपि कथं प्रवृत्तमिति वाच्यम्। अनुदराकन्येत्यादिवन्नञोल्पार्थकत्वात्। अत एव 'तस्मादभ्युदययोगादहिंस्र इत्युपपद्यते' इत्युक्तं तद्भाष्ये।

उक्तं च—'स्वर्गेऽपि पापभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः' इति। 'अहिंसन्' इति श्रुतिविरोधपरिहारस्तु 'अहिंसन्' इति श्रुतिरवैध-हिंसात्यागस्येष्टसाधनत्वं वैध्याश्च हिंसाया तज्जन्याभ्युदयापेक्षयाल्पदोषा-वहत्वं न त्वनिष्टसाधनत्वाभावमप्याहेतिज्ञेयः। हिंसाविधयोपि हिंसायाः स्वर्गसाधनत्वमाहुर्न त्वनर्थहेतुताप्रतिक्षेपमपि। अल्पायुष्ट्वाद्यनिष्टबोधक-स्मृतिविरोधात्। तदुक्तं पातंजलभाष्ये 'यदि कथंचित्पुण्यपापगता हिंसा भवेत् तत्र तत्र सुखप्राप्तावप्यल्पायुर्भवेद्' इति। अत एव 'क्षत्रियाणामपि युधिष्ठिरादीनां स्वधर्मयुद्धेन जातायां ज्ञातिहिंसायां तन्नि-रासाय प्रायश्चित्ताचरणश्रवणम्॥

तथा च भागवतेमुचुकुन्दं प्रति कृष्णवाक्यम्—

क्षत्रधर्मस्थितो जन्तून् न्यवधीर्मृगयादिभिः।
समाहितस्तत्तपसा जह्यघं मदुपाश्रितः'॥

इति। अत्रादिपदेन युद्धादि॥

मार्कण्डेयपुराणेपि—

'तस्माद्यास्याम्यहं तात दृष्ट्वेमं दुःखसन्निधिम्।
त्रयीधर्ममधर्माढ्यं किंपाकफलसन्निभम्'॥

इति। किंपाक=निंबः, इन्द्रवारुणीत्यपरे॥

मोक्षधर्मे भारते, पितापुत्रसंवादे—

'ततैद्बहुशोभ्यस्तं जन्मजन्मान्तरेष्वपि।
त्रयीधर्ममधर्माढ्यं न सम्यक्प्रतिभाति मे'॥

इति। तथा केन चिदुञ्छवृत्तिना मृगरूपिणो धर्मस्य प्रलोभनावाक्यैर्वधे कृते उक्तम्—

'तस्य तेनानुभावेन मृगहिंसात्मनस्तदा।
तपो महत्समुत्सन्नं तस्माद्धिंसा न यज्ञिया'॥

इति । समुत्सन्नं=अत्यन्तं नष्टम् । एवं च सर्वत्र यज्ञियापि हिंसा न केवलं धर्माय । पापायापि भवतीत्यर्थः ॥

तदुक्तं भागवते —

'त्रय्यां जडीकृतमतिर्मधुपुष्पितायां वैतानिके महति कर्मणि वर्तमानः' इति । हिंसाविषये वैतानिके कर्मणि प्रवृत्तत्वेन जडीकृतमतित्वमिति भावः ॥

एवं चौषधीयज्ञे एव ब्राह्मणस्याधिकारः । पशुहिंसाख्ययज्ञे क्षत्रियाणाम् । तदुक्तं महाभारते वनपर्वणि जाबालिसंवादे —

'नमो ब्राह्मणयज्ञाय ये च यज्ञविदो जनाः ।
स्वं यज्ञं ब्राह्मणा हित्वा क्षत्रयज्ञमिहास्थिताः ॥
यदेव सुकृतं हव्यं तेन तुष्यन्ति देवताः ।
नमस्कारेण हविषा स्वाध्यायैरौषधैस्तथा' ॥

इति । सुकृतं हव्यं=अधर्मजनकत्वानाक्रान्तम् । महाभारते मोक्षधर्मे विचख्नुना हिंसानिन्दा —

'अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैः परैः ।
संशयात्मभिरव्यक्तैर्हिंसा समनुवर्णिता ॥
सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत् ।
कामकाराद्धि हिंसन्ति बहिर्वेद्यां पशून्यथा' ॥

इत्युक्त्वा —

'विष्णुमेवाभिजानन्ति सर्वयागेषु ब्राह्मणाः ।
पायसैस्सुमनोभिश्च तस्यापि यजनं स्मृतम्' ॥

इत्युक्तम् । बहिर्वेद्यां=भक्षणार्थं गृहादौ कृता हिंसा महते पापायान्तर्वेद्यां कृता हिंसा स्वल्पाय पापाय भवतीत्यर्थः । नास्तिकैरिति करणे तृतीया। तैः करणभूतैः । तानुद्दिश्येति यावत् । तथा च तत्तुल्या रागान्धा

आस्तिका एव तादृशा विवक्षिताः न तु सत्य नास्तिकाः । तेषामहिंसाया एव परमधर्मत्वात् । करणत्वमपि तेषां न वास्तवं किं तूद्देश्यस्य तत्त्वविवक्षयेति भावः । विष्णुमेवेति । विष्णुत्वेनैव यागेषूद्दिष्टाः सर्वदेवता जानन्तीत्यर्थः । अत एव यागेषु ब्राह्मणानां पायसपुष्पैरेव तत्तद्भागकल्पनेत्यर्थ । एवं च सर्वैकवाक्यताकल्पनेनेदं स्वातन्त्र्येणापूर्व-विष्णुयागविधायकमित्ययुक्तमिति सिद्धम् ॥

किं च—

'त्रैवार्षिकाधिकान्नो यः स हि सोम पिबेद्द्विजः' ।

इति धनवत एव यज्ञे अधिकारः ॥

'जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः' इति,

'शिलोञ्छमप्याददीत विप्रोऽजीवन्यतस्ततः' ॥

प्रतिग्रहाच्छिलःश्रेयांस्ततोप्युञ्छः प्रशस्यते' । इति च,

उक्तेर्ब्राह्मणस्योञ्छवृत्तिरतीव मुख्येति तत्र स्थितस्य कथं हिंसा-त्मकयागेधिकारस्स्यात् । तैत्तिरीयश्रुतावपि ---

'परागावर्ततेऽध्वर्युः पशोस्संज्ञप्यमानात्' इत्युक्तम् । तत्र पापसत्त्व एव हि ततः परागावर्तन युक्तं न त्वन्यथा ॥

किञ्च—

'रिच्यत एव वा एष प्रेव वा रिच्यते, यो याजयति प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वानश्नन् त्रिः स्वाध्यायमधीयीत' इति पापसत्त्वमभिप्रेत्यैव ऋत्विजां प्रायश्चित्तोपदेशः । उक्तश्रुतिद्वयविरोधेनोक्तभागवतादिपुराणवाक्यान्यपशुसपशुचातुर्मास्ययोः मध्ये पशुरहितचातुर्मास्यस्तावकान्येवेत्युक्तिरयुक्ता ॥

'सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत्' इति प्रागुक्तवि-चख्युवाक्ये सर्वकर्मस्वित्युक्तेरसाङ्गत्यापत्तेः ॥

न च 'यज्ञार्थं पशवस्सृष्टाः स्वयमेव स्वयंभुवा ।
यज्ञोस्य भूत्यै सर्वत्र तस्माद्यज्ञे वधोऽवधः ॥
या वेदविहिता हिंसा नियतास्मिंश्चराचरे ।
अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ॥'

इति मनुना,

'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः' इति श्रुत्या, 'हिंसा नैवाऽविधानतः' इति वचनेन न च, 'न हिंस्यात्सर्वा भूतानि' इत्यस्य रागतः प्राप्ताया एव हिंसाया निषेधकत्वं, क्रत्वर्थसंज्ञपने तु न रागतः प्रवृत्तिरस्ति किं तु विधिबलादिति न तन्निषेधकत्वं युक्तम् । राजाज्ञादिना कर्तव्याकृत्यादिभिर्विनान्यस्मिन् सर्वत्र कार्ये रागं विना प्रवृत्त्यसंभवादुक्तव्यवस्थाया अयुक्तत्वात् ॥

एवंच 'पदे जुहोति' इत्यनेन 'यद्यज्जुहोति तत्सर्वमाहवनीये जुहोति' इत्यस्य=(आहवनीयहोमादेः) संकोचवत् क्रत्वर्थसंज्ञपनाति-रिक्तविषयकोयं' 'न हिंस्याद्' इति निषेधइति युक्तमिति वाच्यम् । हिंसामयानां विधिरपि तामस मांसभक्षणादिरागान्धं वेदमार्गे प्रवर्तयितुं न तु वस्तुतत्त्वदृष्ट्येत्येव वक्तव्यत्वात् । अत एव भागवते उक्तं—

'मुन्यन्नैस्तु परा प्रीतिस्तथा न पशुहिंसया' ।

इत्युपक्रम्य—

'द्रव्ययज्ञैर्यक्ष्यमाणान् दृष्ट्वा भूतानि बिभ्यति ।
एषमाऽकरुणो हन्यादतज्ज्ञोऽसुतृपो भृशम् ॥
तस्माद्यथोपपन्नेन मुन्यन्नेनैव धर्मवित् ।
संतुष्टोऽहरहः कुर्यान्नित्यनैमित्तिकीः क्रियाः' ॥ इति ॥

(अनुवर्तते)

# चेतःप्रसादो नाम जगद्गुरुचारितम्.

चेतस्स्मर स्मरणमात्रविधूतकोटि-
जन्मान्तराघमभिवाञ्छितदानदक्षं ।
श्रीमच्छिवाभिनवपूर्वनृसिंहमन्त्रं
क्षेमायनं सपदि निर्वृतिमेषि येन ॥

अधीती यायजूकाग्र्यः प्रशान्तः पङ्क्तिपावनः ।
आसीद्रामाभिधो विद्वान् पदवाक्यप्रमाणवित् ॥ १

कर्णाटवसुधापालकृष्णराजेन्द्रमानितः ।
महीशूरपुरेऽवात्सीत् शिष्यानध्यापयन्मुदा ॥ २

दिक्चक्रवाळजयिना स्वाधीनशतकोटिना ।
सत्प्रतीपक्षवादेषु येन शक्रायितं भुवि ॥ ३

काणादन्यायवाक्यार्थपारंपर्योपदेशिनः ।
यच्छिष्या एव मान्यन्ते दक्षिणेषूत्तरेषु च ॥ ४

अनेनानन्यसुलभसौभाग्यं तस्य सूचितम् ।
चकमे यदपत्यत्वं चराचरगुरुः शिवः ॥ ५

अधिकर्धिरमुष्यासील्लक्ष्मीरिति कुटुम्बिनी ।
तया स गृहमेधीयान् धर्मानातिष्ठदञ्जसा ॥ ६

उदभूद्भूरिगुणवान् तनयोऽस्यां नयोज्ज्वलः ।
लक्ष्मीनृसिंहाभिधानो वादिद्विरदकेसरी ॥ ७

प्रसादाद्दक्षिणामूर्तेः पूतात्मा सत्क्रियारतः ।
द्वितीयो यज्ञशर्माऽभूदद्वितीयो मनीषिणाम् ॥ ८

पञ्चाक्षरमहामन्त्रजपनिर्धूतकल्मषा ।
बभार जठराम्भोधौ परमं ज्योतिरैश्वरं ॥ ९

जगद्गुरौ गर्भगते गुर्विण्यन्वर्थिकाऽभवत् ।
पिता प्रसन्नहृदयो मेने वंशं च पावनं ॥ १०

चक्रे स धर्मसारज्ञः क्रियाः पुंसवनादिकाः ।
प्रतीतो गर्भगं नाम्ना शिवस्वामीति तं जगौ ॥ ११

जातकर्माणि तं दृष्ट्वा दिव्यलक्ष्मभिराङ्कितं ।
दीप्ततेजःसमाक्रान्तं दध्यौ देवांशसम्भवं ॥ १२

रेजे स्फटिकसच्छायकायदीधितिमञ्जुळः ।
रेखाशशिकलः सर्वमङ्गळालङ्कृतः शिशुः ॥ १३

तत्तत्समयनिर्वृत्तैः संस्कारैर्विधिचोदितैः ।
स्वाभाविकं वटोरस्य ब्रह्मतेजो विदिद्युते ॥ १४

महेश्वरे दृढा भक्तिर्ववृधे वपुषा सह ।
दुस्सहद्वन्द्वनिर्मुक्तो दध्यौ बाल्येऽपि शङ्करः ॥ १५

प्रानृत्यदग्निशरणे चलालकमनोहरः ।
भस्मरूषितसर्वाङ्गः शङ्करेति शिवेति च ॥ १६

अधीयानो ब्रह्मसूत्रं सेवमानो गुरुं सदा ।
कुर्वाणो विहितं तस्थौ यावदर्थपरिग्रहः ॥ १७

बाल्येऽपि ववृधे भावियमिसाम्राज्यशंसिनी ।
विरक्तिरस्य भोगेषु गतिरन्या हि योगिनाम् ॥ १८

मित्रेभ्यस्संविभक्तेन सन्तुतोष फलादिना ।
चकमे नात्मकामाय यद्यत्प्रेष्ठ नृणां भवेत् ॥ १९

अथास्य सुकृतोदारपरीपाकफलेप्रहिः ।
महीशूरपुरीं प्राप शृङ्गशैलाज्जगद्गुरुः ॥ २०

तीर्थापदेशाच्चरतः शिष्यसंग्रहमिच्छतः ।
नृसिंहभारतीन्द्रस्य जातोऽयं नयनातिथिः ॥ २१

राज्ञा श्रीकृष्णराजेन समानीय समर्पिते ।
प्रसादमधुरा दृष्टिर्निदधे गुरुणा वटौ ॥ २२

अपृच्छत्तं यतीन्द्रोऽपि किमधीते भवानिति ।
प्रह्वः प्रत्यवदत्सोऽपि सुकृतेनैव चोदितः ॥ २३

अधीतवान् गुरो शैवभुजङ्गस्तोत्रमुत्तमम् ।
पद्यमेकं वदेत्युक्तो मधुरं व्याजहार सः ॥ २४

दानकालोह्ययं दानपात्रमहं भवान् ।
दाता त्वदन्यं न वृणे भक्तिं देहि स्थिरां त्वयि ॥ २५

सुधामधुरया वाचा जलदध्वनिधीरया ।
इति व्याहृतमाकर्ण्य यतीन्द्रः प्राह ससदि ॥ २६

कोटिजन्मार्जितैः पुण्यैर्मिलितः शिष्यपुङ्गवः ।
धर्मकोशस्य गोप्तासौ भविता नात्र संशयः ॥ २७

इत्युपामन्त्र्य राजानं पारिव्राज्यमथादिशत् ।
उपादिशन्महावाक्यं यतिधर्मान् स्वयं गुरुः ॥ २८

आदिष्टसन्न्यासविधिः सुप्तः स्वप्ने ददर्श सः ।
आत्मानं भद्रपीठस्थं परीतं ब्रह्मवादिभिः ॥ २९

गुप्तं कयाचिद्योगिन्या शरदभ्रसवर्णया ।
एहि वत्सेत्युपामन्त्र्य पाठयन्त जगद्गुरुम् ॥ ३०

अनूच्चचार तद्वाचं सर्वोऽहमिति सोऽञ्जसा ।
गुरुर्विनिद्रः पार्श्वस्थस्तदुत्स्वप्नं निशम्य सः ॥ ३१

ननन्द पूर्वसुकृतैस्सिद्धोऽयमिति सङ्गिरन् ।
उत्थाय स्वप्नवृत्तान्तं जगाद गुरुसन्निधौ ॥ ३२

त्वमौरसः सुतो देव्या योगीन्द्रो भवितासि च ।
इत्याशिषमदात्तस्मै न मृषोद्या गिरोऽस्य हि ॥ ३३

अधीयानश्शास्त्रजालं शिष्यानध्यापयत्सदा ।
प्रमाणपदवीं भेजे शास्त्रतत्त्वविनिर्णये । ३४

नैवाग्रहस्स्वपक्षेऽपि न द्वेषो विमतेष्वपि ।
जगद्गुरुत्वमन्वर्थमतो लोकेषु पप्रथे ॥ ३५

सर्वदा स्मेरवदनं सर्वभूतहिते रतं ।
दृष्ट्वैव नितरां सद्भिर्नवेन्दुमिव पिप्रिये ॥ ३६

हृदयाम्भोजमध्यस्थशशिमौलिजटातटात् ।
निर्गळत्स्वर्धुनीवास्य वक्त्राद्वाणी विनिर्ययौ ॥ ३७

मैत्री प्रमुदिता शान्तिर्दया नैसर्गिका गुणाः ।
तेषामयुतसिद्धानां संसर्गो मूर्तिमानसौ ॥ ३८

तस्य सर्वे समारम्भाः परार्थपरिणामिनः ।
निःस्पृहस्याभवन् लोके महाभूतगुणा इव ॥ ३९

धनदस्पृहणीयेषु सिद्धेषु विभवेष्वपि ।
चीवरं दारुपात्रं च बभूवास्य परिग्रहः ॥ ४०

मूर्ध्नीन्दुकलया बाह्वोः शूलेन स्फाटिकत्विषा ।
जगन्मङ्गळया मूर्त्या प्राज्ञास्तं मेनिरे शिवम् ॥ ४१

लोकसंवननं वक्त्रं लोचनासेचनाकृतिः ।
वाणीप्रसादमधुरा न देवांशमृते भवेत् ॥ ४२

न कोपजिह्मं वदनं कृतं तेन मनागपि ।
न मृषोद्या गिरः प्रोक्ताः परिहासकथास्वपि ॥ ४३

दयारसपरीवाहः प्रसादः किमु मूर्तिमान् ।
शरीरिणी वा किं शान्तिः धर्मः किं कायवानयम् ॥ ४४

योगसम्पत्परीपाकः फलितः सत्त्वपादपः ।
किमु मूर्तो गुणग्रामः जङ्गमः सुरभूरुहः ॥ ४५

तुङ्गाशैवलिनीरम्यपुलिने विजने वसन् ।
ध्यानयोगेन निर्धूतनिजक्लेशो ननन्द सः ॥ ४६

कामसङ्कल्परहितः कर्मयोगी बभूव सः ।
नैष्कर्म्यसिद्धाः कुर्वन्ति लोकसङ्ग्रहणव्रतम् । ४७

भक्त्या महेशमभ्यर्च्य योगक्षेमाय देहिनाम् ।
ययाचे संप्रसन्नस्य पुरतः कथयन्निव ॥ ४८

कोशः शास्त्राभिसन्धीनां प्रतिभायाः परायणम् ।
सौजन्यजन्मसदनं वात्सल्यस्य निवासभूः ॥ ४९

दयालुरनघः शान्तः क्षमी दाता प्रभुर्गुरुः ।
किमयं न शिवः साक्षाच्चरिष्णुर्धरणीतले ॥ ५०

स्वप्ने यस्य निसृष्टार्थदूतीव जगदम्बिका ।
भाविकार्याणि सन्दिश्य व्यतानीज्जगतां हितम् ॥ ५१

कलिशासनसंक्षुब्धदुराचारमहार्णवे ।
निमज्जतस्समुद्धर्तुं स्वप्नादेशमनुस्मरन् ॥ ५२

चकार कालटीक्षेत्रे शङ्करस्थापनादिकम् ।
प्रावर्तयच्छास्त्रपाठशालां विबुधसेविताम् ॥ ५३

अन्यानप्रलयोद्वेलवृजिनार्णवतारकान् ।
धर्मान् संस्थापयामास लोकद्वयशुभोदयान् ॥ ५४

तुलितामृतधाराभिर्वाग्भिर्भक्तिसुधामयी ।
तरङ्गिणी प्रववृते यस्य वक्त्रारविन्दतः ॥ ५५

श्रीचक्रबैन्दवाश्लिष्टसुधाचैतन्यविग्रहा ।
यदध्यास्ते जगद्धात्री शारदा सर्वकामदा ॥ ५६

तत्सद्म शिथिलं वीक्ष्य श्रीशङ्करविनिर्मितम् ।
नवीकर्तुमना मूलशिलारोपं स्वयं व्यधात् ॥ ५७

सङ्कल्पमात्रसंसिद्धं तस्मिन् योगधुरन्धरः ।
ऋतंभरां समालम्ब्य किमप्यन्तर्विचिन्त्य सः ॥ ५८

अप्रतर्क्यं निजाकूतः शिष्यानन्वशिषत्तदा ।
कोटिलिङ्गसमभ्यर्चापरिपूतकुलोद्भवः ॥ ५९

वटुव्रतो नृसिंहाख्यः चन्द्रशेखरभारती ।
अस्मत्परम्परां प्राप्य जितात्मा ख्यातिमेष्यति ॥ ६०

अस्मत्सङ्कल्पमखिलं निर्वोढास्मदनुग्रहात् ।
सङ्कल्पः प्रत्ययापेक्षी बलीयान् कालविप्लवः ॥ ६१

एवमेवाखिलं भाव्यं यतध्वं कार्यसिद्धये ।
भविष्यत्यचिरात्सिद्धो मत्सङ्कल्पो भवन्मुखात् ॥ ६२

इत्यासंज्य च तद्भारमात्मनीनाश्रमेषु सः ।
प्रत्याहृतमना योगी योगमास्थाय तत्परः ॥ ६३

सूक्ष्माण्यावेश्य भूतेषु तानि चित्ते निवेश्य सः ।
विलाप्य प्रकृतौ चित्तं प्रकृतिं चञ्चदर्चिषि ॥ ६४

जुहावात्मानले शुद्धे मृत्योर्मूर्ध्नि पदं न्यधात् ।
केवलानन्दविस्फूर्तिस्तमःपारमुपाविशत् ॥ ६५

जागर्ति भुवि तत्कीर्तिरधुना भद्रदायिनी ।
सन्ति भूयांसि वृत्तानि पावनानि महात्मनः ॥ ६६

तदेकदेशचरितं कालव्युत्सवसंज्ञिकम् ।
तत्प्रसादादधिगतैर्व्याहारैर्विवृणोम्यहम् ॥ ६७

गुणवद्वस्तुसंसर्गात्कण्ठधार्यं भवेत्सताम् ।
तत्क्षेत्रे सा महादेवी तद्गुरोश्चरितं महत् ॥ ६८

सकृत्स्मरणतः पुंसामशेषाघहरं स्मृतम् ।
विवृतिर्भक्तियोगादेस्सामग्री काव्यसम्पदः ॥ ६९

पुरुषार्थः फलं पुंसां लाभश्रीर्गुर्वनुग्रहः ।
सम्पत्स्यन्ते नृणां तेन सम्पदो ह्युदितोदिताः ॥ ७०

यश्शैशवे सहजचापलदुर्विनीतं
निर्व्याजवत्सलहृदा बहुधा विनीय ।
जाड्यं धियः प्रबलरूढमपि व्यहार्षी-
त्तं सर्वभूतसुहृदं गुरुमर्चयामि ॥ ७१

निःस्वाय पुस्तकमदात् क्षुधिताय चान्नं
रुग्णाय भेषजमपीपलदादरेण ।
यो मामनन्यशरणं करुणार्द्रचेता-
स्तं देशिकेन्द्रमनिशं न हि विस्मरामि ॥ ७२

मन्दस्य शास्त्रसरणौ बहुलश्रमस्य
वक्त्रं निरीक्ष्य दयया गुरुराह यन्माम् ।
वाग्देवता दिशतु ते धियमित्यनल्प-
सौभाग्यमेतदधुना फलितं प्रकामम् ॥ ७३

पालनीया वयं दासा इति न प्रार्थयामहे ।
स्वामी स्वस्वत्वरक्षायां न भृत्यैरनुनाथ्यते ॥ ७४

अधीतिः साहिती यस्य विनेता श्रीजगद्गुरुः ।
सुब्रह्मण्यस्य कृतिषु जीयाच्चेतःप्रसादनम् ॥ ७५

---

उपहोमेभ्यः क्लृप्तोपकारकत्वेन पूर्वान्वितैः प्राकृताङ्गैः कथं भावाकांक्षायाः शान्तत्वेन उपहोमविनियोगबोधाव्यवहितपूर्वं निरुक्त प्रकरणाभावात्। अपि तु सन्निधिरूपस्थानवशात् विकृत्याकांक्षामुत्थाप्य ततएवाङ्गत्वं। नचैव मुत्थाप्याकांक्षायां प्रकरणलक्षणातिव्याप्तिः। तस्या अपि स्थानकल्प्यप्रकरणत्वेन लक्ष्यत्वात्। उपहोमेषु प्राकरणिकाङ्गत्वव्यवहारापत्तिस्तु लिङ्गविनियोज्यमन्त्रेषु श्रौताङ्गत्वापत्तिवत् क्लृप्त निरुक्त कथं भावाकांक्षाया एव तद्व्यवहारनियामकत्वेन निराकार्येति बोध्यम्। नव्यास्तु अवगतफलसंबन्ध सन्निहिवाक्यप्रमित पदार्थवृत्ति यत् पूर्वप्रमाणानवगताङ्गताकविषये इति कर्तव्यतात्वप्रकारकापेक्षणं तत् प्रकरणं। अस्ति च दर्शपूर्णसमादौ प्रयाजादिविषये तत्। समिद्यागस्य प्रकरणात्तनूनपाद्याङ्गागत्ववारणाय अवगतफलसंबन्धेति पदार्थविशेषणम्। प्रयाजादीनां प्रकरणादसन्निहित ज्योतिष्टोमाङ्गत्ववारणाय सन्निहितवाक्यप्रमितेति तद्विशेषणम्। अङ्गस्य पूर्वप्रमाणेनाऽनवगताङ्गताकेतिविशेषणाच्च न प्रोक्षणादीनां श्रुतिलिङ्गवाक्यैरवगतव्रीह्याद्यङ्गभावानां प्रकरणाद्दर्शाङ्गत्वापत्तिः। वामदेव्यङ्गायतीत्यादौ प्रमाणान्तरेणानवगताङ्गताकसामविषये अवगतफलसंबन्धस्य स्तोत्रस्य सन्निहितस्य स्वसाधनीभूतऋगक्षराभिव्यत्त्यर्थमपेक्षणात्प्रकरणेनाङ्गत्वप्रसक्तौ तद्व्यावृत्त्यर्थं इति कर्तव्यतात्वेनेतिविशेषणम्। तस्य ऋगक्षराभिवृत्त्यर्थसामापेक्षायामपि सिद्धसामापेक्षायां इतिकर्तव्यतात्वप्रकारकत्वाभावादित्याहुः। अत्र समिद्यागादौ तनूनपाद्याङ्गागत्वस्य प्रोक्षणादीनां प्रकरणाद्दर्शपूर्णमासाङ्गत्वस्य च उक्तरीत्या वारणसम्भवात् अवगफलसंबन्धेति, पूर्वप्रमाणनवगतेति, च विशेषणं सूत्रस्थासयुक्तत्वरूपविशेषणवत् विनियोजकप्रकरणशरीरे प्रकरणविनियोज्यविषयविशेषबोधनार्थमेव। अस्तु वा तनूतपादादौ समिद्यागप्रकरण-

त्वव्यवहाराभावात् व्यवयारप्रयोजकप्रकरणशरीरे अवगतफलसम्बन्धेति विशेषणम्। दर्शपूर्णमासादौ प्रोक्षणादिप्रकरणित्वव्वहारस्य तु सर्वानुभवसिद्धत्वात्तद्वारकविशेषणोपादानं त्वनुचितमेव। अस्तु वा गोदोहनादौ प्रयाजादिप्रकरणित्वव्यवहाराभावात् पूर्वप्रमाणानवगताङ्गताकेति स्वपूर्वप्रवृत्तप्रमाणानवगतांकताकेत्यर्थकं न तु प्रकरणपूर्वोद्दिष्टश्रुतिलिङ्गवाक्यानवगताङ्गताकेत्यर्थकं। दर्शपूर्णमासादौ प्रोक्षणादिप्रकरणित्वव्यवहारानापत्तेः। गोदोहनभावनाकथंभावाकांक्षातः पूर्वप्रवृत्तदर्शपूर्णमासभावनाकथंभावाकांक्षारूपप्रकरणेन प्रयाजादीनामङ्गत्वावगमात्तु न गोदोहनादिषु तत्प्रकरणित्वव्यवहारः। अतः इदं व्यवयारप्रयोजकप्रकरणलक्षणम्। विनियोजकप्रकरणलक्षणन्तु अस्मदुक्तमेव। तनूनपादादिषु समिदादिविनियोजकप्रकरणसत्त्वेपि समिदादीनामुक्तरीत्या तदङ्गत्वस्य वारयितुं शक्यत्वादिति तत्वम्। केचित्तु उभयाकांक्षा प्रकरणम्। सा च फलाकांक्षाविशिष्टकथंभावाकांक्षा। वैशिष्ट्यं च स्वाश्रयभावनासन्निहितभावनाश्रितत्वसम्बन्धेन। न त्वेकपुरुषगतत्वादिना तेन विश्वजिदादेः न प्रकरणेन दर्शाङ्गत्व। उक्तसम्बन्धेन यदीयफलाकांक्षाविशिष्टा निर्णीततदनङ्गत्वकगता या कथंभावाकांक्षा सा तद्विनियोजकप्रकरणमिति निष्कर्षः। 'उक्तं हि—असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात्' इति। अत्र पञ्चम्याः सामानाधिकरण्यात् कथंभावाकांक्षैव प्रकरणमित्यवसीयते। असंयुक्तपदं च फलाकांक्षोपस्थापकं न तु सन्निपातिनिवारणमित्याहुः। तदतीव मन्दं तथाहि—विनियोगफलोपधायकस्य वा इदं लक्षणं तत्स्वरूपयोग्यस्य वा। नाद्यः। स्वाश्रयभावनान्वितत्वसम्बन्धेन प्रयाजादिभावनीयफलाकांक्षाविशिष्टायां श्रुतभाव्यकत्वेन निर्णीतप्रयाजाद्यनङ्गकप्रोक्षणादिभावनाकथंभावाकांक्षायां प्रयाजविनियोगरूपफलानुपधायिकायामतिव्याप्तेः। प्रधानकथंभावा-

कांक्षारूपप्रकरणेन फलवत्वे अवगते तनूनपाद्यागीयकथंभावाकांक्षोदयात् निर्णीतानङ्गकत्वकतनूनपाद्यागगतायां तस्यामुक्तसम्बन्धेन समिद्यागीय-फलाकांक्षाविशिष्टत्वेनातिव्याप्तेश्च । न च प्रधानकथंभावेन तनून-पाद्यागीयफलवत्तावगमसमकालमेव समिद्यागस्यापि फलवत्त्वावगमेन फलाकांक्षोपरमात् तदुत्तरकालीनतनूनपाद्यागीयकथंभावाकांक्षायां न तद्वैशिष्ट्यमिति वाच्यम् । आलोकपरामर्शजन्यानुमितौ सामानाधि-करण्यसम्बन्धेन अतीतधूमपरामर्शवैशिष्ट्यस्यैव उक्तसम्बन्धेनातीतसमि-द्यागीयफलाकांक्षावैशिष्ट्यस्य तनूनपाद्यागीयकथंभावाकांक्षायां सत्व बाधकाभावात् । यदि तु धूमपरामर्शजन्यतावच्छेदककोटौ उक्तदोष-वारणाय स्वाव्यवहितोत्तरत्वसम्बन्धस्यापि निवेशवत् अत्र समान-कालीनत्वसम्बन्धस्यापि निवेश इत्युच्यते ततः निर्णीततदनङ्गत्वेति व्यर्थम् । अङ्गकथंभावाकांक्षायाः उक्तसम्बन्धेन अतीतप्रधानफला-कांक्षावैशिष्ट्यविरहेण अतिव्याप्त्यभावात् । तस्य तद्वारकत्वेन तदभि-प्रेतत्वात् । अङ्गकथंभावाकांक्षायाः प्रधानविनियोगस्वरूपयोग्यप्रकरण-त्वेपि प्रधानफलाकांक्षारूपसहकारिविरहात् तनूनपाद्यागकथंभावाकां-क्षायाः समिद्यागविनियोजकप्रकरणत्वेपि समिद्यागफलाकांक्षारूपसह-कारिविरहादेवाङ्गत्वप्रसङ्गवारणोपपत्तौ फलाकांक्षावैशिष्ट्यनिवेशस्य नि-र्णीततदनङ्गत्वनिवेशस्य च व्यर्थत्वात् तदुभयनिवेशेपि प्रयाजादीनां प्रोक्षणाद्यङ्गत्ववारणाय फलाकांक्षायास्सहकारित्वकल्पनस्याऽऽवश्यक-त्वादिति दिक् ॥

एतस्य च प्रकरणस्य अकांक्षारूपत्वेन स्वतोऽप्रमाणत्वेन वाक्यकल्पनाद्वारैव प्रामाण्यं । तथाहि । प्रधानगतेतिकर्तव्यताताकांक्षया प्रयाजादिगतप्रयोजनाकांक्षासहकृतया प्रयाजवाक्यस्य प्रधानवाक्यस्य च स्वस्वावान्तरवाक्यार्थसमासस्यापि महावाक्यैकदेशत्वरूपपदत्वाका-

न्तस्य सन्निधिरूपं वाक्यं कल्प्यते । उक्तपारिभाषिकपदानामपि स्वार्थोपस्थितिद्वारा तन्निष्ठाश्रुतपदान्तरकल्पनानुकूलयोग्यतारूपलिङ्गानुमानद्वारा इति कर्तव्यतावाचीत्थमित्यादिगौणश्रुतिकल्पकत्वमितिपरंपरया प्रकरणस्य अङ्गत्वे प्रामाण्यं । वाक्यैकवाक्यताकल्पनाप्रकारश्च समिधोयजति इत्थं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । अतएव दर्शपूर्णमासप्रकरणाम्नातेन संस्थाप्य पौर्णमासीं नैम्यथमनुनिर्वपेदित्यनेन विहितवैमृधस्य प्रकरणाद्दर्शपूर्णमासोभयाङ्गत्वप्रसक्तौ वाक्यात्पौर्णमास्यङ्गत्वमित्युक्तं बलाबलाधिकरणे ॥

इति प्रकरणनिरूपणम्.

---

## अथ स्थाननिरूपणम्.

सादेश्यं स्थानं । तच्च द्विविधं । अनुष्ठानसादेश्यं पाठसादेश्यंचेति । पाठसादेश्यं द्विविधं । यथाक्रमपाठः सन्निधिपाठश्चेति । पशुधर्माणां अग्नीषोमीयपश्वर्थत्वं अनुष्ठानसादेश्यात् । तथाहि । योदीक्षितो यदग्नीषोमीयं आलभेतेति क्रयसन्निधौ आम्नातस्य अग्नीषोमीयपशोः 'स एषद्विदैवत्यः पशुरौपवसथ्येऽहन्यालभ्धव्य' इति वचनादौपवसथ्येऽहन्यनुष्ठानं । तद्दिन एव च पशुधर्माः श्रूयन्ते । अतस्ते अनुष्ठानसादेश्यात्पश्वङ्गं । ज्योतिष्टोममहाप्रकरणसत्त्वेपि पशुधर्माणां, सोमद्रव्यकज्योतिष्टोमाङ्गत्वायोग्यत्वात् तदनङ्गत्वं । अत एव आनर्थक्यतदङ्गन्यायेनज्योतिष्टोमाङ्गसर्वपश्वङ्गत्वप्रसक्तावपि स्थानेनोपसंहारन्यायेन अग्नीषोमीयमात्राङ्गत्वं । पश्वन्तरे तु अतिदेशादेव तेषां प्राप्तिरिति सिद्धान्तः । 'इन्द्राग्नीरोचनादिव' इत्यादीनां क्रमाम्नातानां याज्यानु-

(अनुवर्तते)

# योगवादः.

## १. प्रस्तावनम्.

प्रबन्धश्चायमाचार्यपतञ्जल्युपज्ञयोगवादं नाधिकरोति । येनानर्थक्यशङ्का समुदियात् । नापि सौगतयोगाचारविचारं गोचरयति । येनानुपादेयताशङ्का प्रसरेत् । परन्तु प्राङ्नैय्यायिकवैशेषिका अपि योगाचार्यपदवी समधिरूढा इति निरूप्य वाचकवरेण्यानां चेतस्तोषयितुमेवायमणुः प्रन्बधः प्रववृते । तदर्थमयं योगशब्दः प्रतनप्रबन्धेषु कियत्सु प्रयुक्तस्समुपलभ्यते, तदर्थस्तत्र कीदृशोऽनुगुणः, नैय्यायिकादौ कथं सोऽर्थम्समन्वेतुमर्हति, नैय्यायिकादयो वा किमर्थं तं वादमङ्गयकार्षुः, कियतीं वेलामारभ्य योगशब्द एतेषु प्रायोजि प्राक्तनैः पण्डितैरित्यादिविचिकित्साविधूननं विधीयते ॥

यद्यपि पण्डितमण्डलीमण्डनायमानैः प्राचीनैरर्वाचीनैश्च लक्ष्मीपुरं श्रीनिवासाचार्य फणिभूषण तर्कवागीशप्रमुखैस्स्वीयनिबन्धसन्दोहेष्वयं कृतव्युत्पादन इति व्यर्थोऽयमुद्यमः । तथापि, तैर्महोदयैस्तत्र तत्र प्रासङ्गिकतया क्वचित्सूचनया कुहचिदभिधानेन सोऽर्थस्समुपन्यस्तः स मन्दमेधसामसुबोध इति तेषामपि सहजावबोधाय तदुक्तयुक्तीरेव सविभागविमर्शं विभावयितुमयं प्रयतत इति न व्यर्थः ॥

## २. योगशब्दान्वेषणम्.

तत्र योगशब्दः केषु केषु निबन्धेषु समुदाहारीति मृगयमाणानां प्रप्रथमं वात्स्यायनाय न्यायभाष्यमेव नयनसरणिमधिरोहति ॥

## वात्स्यायनीयं न्यायभाष्यम्.

तत्र हि भगवान्वात्स्यायनः प्रतितन्त्रसिद्धान्तसूत्रव्याख्यानवेलायां योगशब्दं *प्रायुङ्क्त। तदर्थस्तु पातञ्जलो योगाचारो वा न भवितुमर्हति इति विस्पष्टमवगम्यते । तत्र ह्यादिमस्सत्कार्यवादी, चरमस्तु क्षणिकविज्ञानवादी । अन्यश्च कोऽपि योगी असत्कार्यवादाद्युपगन्ता नास्माभिर्दृष्टश्रुतचरः । वार्षगण्याभिधानः कश्चन चिरन्तनयोगाचार्यः क्वचिच्छ्रूयते । सोऽपि हि मायावादमास्थित इति भामत्यां† वाचस्पतिभारती निगदति । अतोऽनन्यगत्या नैय्यायिकवैशेषिकपर एव योगशब्द इत्युररीकरणीयम् ॥

## कौटलीयमर्थशास्त्रम्.

एवं कौटलीयार्थशास्त्रे‡ योगशब्दस्सन्दृश्यते । सोऽपि हि न्यायादिशास्त्रपर इत्यास्थेयम्, इतरथा मुख्यान्वीक्षिकीभूतानामेव न्यायादीनामान्वीक्षिक्यनन्तर्भावापत्तेः । पातञ्जलस्य तु साङ्ख्यशब्दात्परिग्रहोऽवसेयः । तस्यापि साङ्ख्यप्रवचनशब्देन तत्र तत्र गृहीतेः । केचिदत्र लोकायतशब्देनैव न्यायादिनयं परिगृह्णन्ति, तन्मन्दम्, अनर्थकुशलोऽज्ञो नास्तिक इत्यादिरूपेण रामायणादौ लोकायतस्य बहुधोपालम्भनात् ततोऽत्र योगशब्देन तद्ग्रहणमेव रमणीयम् । अत्र च केषुचित्पुस्तकेषु 'योग.' इति पुल्लिङ्गपाठो दृश्यते, स च नातीव हृदय

---

* 'यथा नासत आत्मलाभः, न सत आत्महानं, निरतिशयाश्चेतनाः, देहेन्द्रियमनस्सु तत्तत्कारणे च विशेष इति सांख्यानाम् । पुरुषकर्मादिनिमित्तो भूतसर्गः, कर्महेतवो दोषा. प्रवृत्तिश्च, स्वगुणविशिष्टाश्चेतनाः, असदुत्पद्यते, उत्पन्नं न निरुध्यते इति योगानाम्.' (न्या. भा. १–१–२९.)

† 'एतेन योग. प्रत्युक्त' (२–१–३ इति ब्रह्मसूत्रभाष्यभामती).

‡ 'सांख्यं योगं लोकायतञ्चेत्यान्वीक्षिकी.'

ङ्गमः, परन्तु 'योग' मिति क्लीबलिङ्गपाठ एव साधीयानित्युत्तरत्र स्फुटीभविष्यति ॥

### पत्रपरीक्षायाम्.

एवं वैशेषिकेऽप्यस्य जैननिबन्धसन्दोहेषु प्रचुरं प्रयोगो वरीवर्ति। तत्र विद्यानन्दविरचित पत्रपरीक्षा*ख्यग्रन्थेऽयं शब्द अवलोक्यते। तत्र योगवचनतया समुदाहृतं 'सदकारणवन्नित्य' मिति वचनं वैशेषिकनये चतुर्थाध्याये प्रथमाह्निके आदिसूत्रतया दृश्यते। तस्मात्तत्र तच्छब्दो वैशेषिकपर इत्यत्र नास्ति विशयलेशः ॥

एवं तस्मिन्प्रबन्ध † एवान्यत्र तं शब्दमवलोकयामः। सोऽपि हि वैशेषिकं गोचरयतीति विचारकेभ्यो रोचते ॥

### परीक्षामुखप्रबन्धः.

किञ्च परीक्षामुख‡नामकनिबन्धेऽपि तं शब्दं पश्यामः। तत्र हि प्रत्यक्षादिषु एकैकाधिकपरिग्रहे योगस्थानीयस्य चत्वारि प्रमाणानि भवन्ति। सत्येवं योगो नैय्यायिक एव भवेत्। तदतिरिक्तैः कैरपि प्रमाणचतुष्टयानङ्गीकारात् ॥

### षड्दर्शनसमुच्चयाख्यग्रन्थे.

अपि च हरिभद्रसूरिविरचित 'षड्दर्शनसमुच्चया' भिधानस्य प्रबन्धस्य टीकाकारो गुणरत्नस्सुविशदमेवागादीत्, यन्नैय्यायिका एव योगाभिधाना § इति ॥

---

* 'सदकारणवन्नित्यमिति योगवचो यथा' पत्रपरीक्षा.

† सौगतसांख्ययोगाना तथा भूतपारिणामासिद्धेः.

‡ 'सौगतसांख्ययोगप्रभाकरजैमिनीयानां प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावैरेकैकाधिकैर्व्याप्तिवत्' (पत्रपरीक्षामुखं, षष्ठसमुद्देशः, ५७ तमं सूत्रम्.)

§ अथादौ नैय्यायिकाना योगापराभिधानानामिति अत्र सर्वत्र 'यौग' इत्यप्यस्ति पाठः.

### वाचस्पत्यनिबन्धे.

एवमेव हेमचन्द्रसूरिरपि वाचस्पत्यनिबन्धे योगशब्दार्थकथन-प्रसङ्गे योगशब्दो नैय्यायिकपर इति विस्पष्टमाचष्टे ॥

एवमेव जैनादिनिबन्धेषु प्रमेयकमलमार्ताण्डाष्टसाहस्रीप्रभृतिषु योगशब्दो नैय्यायिकादिप्रसङ्गे नैकधा प्रायोजीति प्रबन्धाधिक्यभिया नाधिकमुदाह्रियते ॥

एतेन प्राक्तनेषु प्रबन्धेषु नैय्यायिकादौ योगशब्दो भूरिशः प्रयुक्त इति ज्ञायते । इतः परं केन निमित्तेनासौ तेषूपयुक्त इति चिन्तनीयम् । तदर्थमादौ तदर्थश्चिन्त्यते ॥

## ३. योगशब्दार्थनिरूपणम्.

### मानमेयोदयरहस्यश्लोकवार्त्तिककाराणाम्मतम्.

अत्राहुर्मानमेयोदयरहस्यश्लोकवार्त्तिककाराः—'न्यायभाष्यादिस्थो योगशब्दो वैशेषिकमतं ब्रूते । तत्रैकं कारणम्—तच्छास्त्रस्य प्रणेता हि कणादः योगाचारविभूत्या फणिभूषणं तोषयित्वा वैशेषिकनयं प्रणिनायेति प्रशस्तचरणोक्तिः । द्वितीयन्तु—प्रसिद्धसौगतयोगाचारसाम्यं प्रमाणादि-विषये प्रतिभासते वैशेषिकाणामिति * ॥

* 'वैशेषिकमतञ्चापि योगमित्येव कीर्त्यते ।
योगाचारविभूत्या तोषयित्वा महेश्वरम् ॥
चक्रे वैशेषिकं शास्त्रमिति प्राशस्तभाषितम् ।
तथा योगचाराख्याः केचिद्वैशेषिका अपि ॥
प्रथिता इति गम्यन्ते युक्तिमानादिसाम्यतः ।'

(मा. र. श्लो. वा. ३२६–३२७.)

### तद्विवेचनम्.

अत्र च प्रथमे योगिना प्रोक्तं योगं तद्विदन्ति ये ते योगाः इति क्लीबलिङ्गयोगशब्दस्य वैशेषिकशास्त्रपरत्वं पुल्लिङ्गतच्छब्दस्य तु वैशेषिकशास्त्रानुयायिबोधकत्वमवसेयामिति तद्वार्त्तिककारमहोदयानामभिसन्धिरिति प्रतिभाति ॥

व्याख्यानमेतन्न्यायभाष्यादिप्रकरणानुगुणं सप्रमाणञ्चेति तन्निबन्धकाराणां नैकाकरवेत्तृतामादर्शयति । यद्यप्यास्माकीनोऽभिप्रायोऽप्यनेनाभिसन्धिना न विसंवदति तथापीतोऽप्यतिरिक्तं किञ्चित्कारणमस्तीत्याकलयितुमुत्सहते मदीयश्चेतोविचारः ॥

### स्वाभिप्रायः.

तथाहि, युजिर्धातुनिष्पन्नो योगशब्दस्संयोग इत्यर्थमभिधत्त इत्येतन्नातिरोहितम् । महामतिर्माधवोऽपि सर्वदर्शनसङ्ग्रहे एतच्छब्दस्य संयोगार्थकतां विस्पष्टमगादीत् । तथाच परमाण्वादिसंयोगस्तच्छब्दाभिधेय' इत्यत्र न कापि विप्रतिपत्तिः । सत्येवं, परमाण्वादियोगाद्यो जगदुत्पात्तिं गदति स योगी, तेन प्रोक्तं योगं तद्वेद यः सोऽपि योग इति प्रोक्तदिशैव नैय्यायिकवैशेषिका अपि सम्प्रति तच्छब्दगोचरा भवन्ति । आरम्भवादिन इति फलितोऽर्थः । उभयेऽपि हि आरम्भवादिनौ । अतस्तेषां तच्छब्दगोचरतायां न काप्यनुपपत्तिः प्रसरति ॥

### पक्षान्तराश्रयणे गुणाः.

परन्तु पक्षे चास्मिन् असत्कार्यवादमूलभूतारम्भरूपयोगार्थस्यास्ति प्रकृतोपयोग इति हेतुगर्भता । आवश्यकी ह्यप्रसिद्धपदप्रयोगे हेतुगर्भता । एवं वैशेषिकमात्रपरिग्रहणेन नैय्यायिकानुक्तिप्रयुक्तन्यूनताशङ्काया अपि नावतारः । एवं सर्वत्र वैशेषिकमात्रबोधने वैशेषिक-

पदमेव प्रयुञ्जानानां न्यायवार्त्तिकतट्टीकाकारादीनामत्र 'योगानामेवे' ति प्रयोगे निमित्तलाभः । एकेनैव योगिकयोगशब्दप्रयोगेनोभयोरपि बोधसम्भवात् । एतेन वार्त्तिकतात्पर्यटीकाकारादीनां समये योगशब्दो नैय्यायिकादौ प्रसिद्ध इति गम्यते । तैस्तच्छब्दस्य किमपि व्याख्यानमकृत्वा 'योगाना' मेवेति भाष्यस्थशब्दस्यैव पुनः पुनरनुवादात् । तथा च 'योगाना' मित्यादीनामारम्भवादिनामित्यर्थः ॥

## ४. समन्वयरीतिः.

अथैषोऽर्थः नैय्यायिकादौ कथं समन्वेतुमर्हतीत्येतद्विवेच्यम् । तत्र समन्वेतव्यार्थानधिगतौ समन्वयो नाधिगम्यत इति प्राग्योगवादस्वरूपं निरूप्यते ॥

### योगवादस्वरूपम्.

भारतदार्शनिकेषु हि सृष्टितत्त्वविषये त्रीणि मतानि समुल्लसन्ति—आरम्भवादः, परिणामवादः, विवर्तवादश्चेति । तेष्वादिमो नैय्यायिकवैशेषिकाणाम् । मध्यमोऽपि द्वेधा विभज्यते—ब्रह्मपरिणामः प्रधानपरिणामश्चेति । तत्रादिमो भास्कर-वल्लभ-निम्बार्क-चैतन्यप्रभृतीनाम् । द्वितीयस्तु साङ्ख्यप्रवचनकारद्वैतवेदान्तिप्रमुखानाम् । चरमस्तु अद्वैतवेदान्तिनाम् । तत्रारम्भवादिनः परमाणुसंयोगाज्जगतो जनिमाहुः । प्रागविद्यमान एव घटादिः कारकचक्रादारभ्यते । अभिव्यक्तिरत्रारम्भपदव्यावर्त्या । अभिव्यक्तिवादिनो हि साङ्ख्यादयः । त एव सत्कार्यवादिन इत्युच्यन्ते । नैय्यायिकास्तु असत्कार्यवादिन इति गण्यन्ते । प्रकृते आरम्भवादो योगवादश्चेत्यनेकार्थः । अस्य च स्वरूपमित्थं भणन्ति नैय्यायिकादयः—पार्थिवमाप्यं तैजसं

वायवीयं चेति चतुर्विधाः परमाणवः। ते हि चेतनेच्छाप्रेरणमन्तरेण विशिष्टक्रमकमितरेतरसङ्घटनमलभमाना न कार्यसिद्धये पर्याप्नुयुः। यतः खल्वचेतनास्ते। तस्मात्सकलभुवननिर्माणमतिश्चराचरपतिरेव तदधिष्ठाताङ्गीक्रियते। सोऽपि हि नानेकात्मवृत्तिविपाकोन्मुखधर्माधर्मसंस्कार-वैचित्र्यमननुरुध्यमानो विचित्रस्य जगतो जन्म निर्मातुमर्हति। तथाच तदधिष्ठितं परमाणुद्वयमन्योन्यं संयुज्यते। तादृशसंयोग एव योगशब्देनोच्यते। तदनु ततो द्व्यणुकनामावयवी आरभ्यते। अथ च तत्त्रययोगाच्च त्र्यणुकमित्यादिक्रमेण महान्घटो जायते। एवमेव पटादिरप्यवसेयः॥

### युगपत्कार्यजनकत्वशङ्कानिरासः.

अत्र काचन शङ्का चेतसि उदेति—सकृदेव कार्यपरिमाणानुगुणसङ्ख्याः परमाणव एव एकत्र संयोज्य कार्यमारभन्ताम्, किमर्थं द्व्यणुकादिक्रमेणेति। नैतद्युक्तम्, सकृदारम्भे हि कुम्भे भज्यमाने कपालशर्कराकणचूर्णादिक्रममपहाय प्रथममेव परमाण्वन्तता भवेत्, सर्वसंयोगस्य सर्वविभागेन सहसैव विनाशात। तथासति भङ्गसमनन्तरमतीन्द्रियत्वमेव कुम्भादीनां भवेत्। तस्माद्द्व्यणुकादिक्रमेणेत्येव सम्यक्॥

### परमाणुद्वयसंयोगक्रमेणैव उत्पत्तिः.

भवतु तावदेवम्, प्रथमं द्वावेव परमाणू मिथस्संघटत इत्यत्र का युक्तिः? त्रयः परमाणवोऽपि मिलन्ताम्। नैषापि शङ्का चार्वी, प्रथममेव त्रिषु परमाणुषु मिलत्सु तत्कार्यं प्रत्यक्षं प्रसज्येत। तत्रापि बहुत्वसङ्ख्यया महत्त्वारम्भात्। कारणगतपरिमाणस्येव तद्गतबहुत्वस्यापि महत्त्वं प्रति कारणत्वस्याङ्गीकार्यत्वात्। न च तत्प्रत्यक्षमतिसूक्ष्मत्वादतो द्वाभ्यामेवपरमाणुभ्यां द्व्यणुकमादावुत्पद्यते। तदपि पर-

माणुवदप्रत्यक्षं, महत्त्वानुत्पादात्। तदनु च त्रिभिर्द्व्यणुकैस्त्र्यणुकमारभ्यते, न पुनर्द्व्यणुकद्वयेन। तथासति द्व्यणुक इव तत्रापि महत्त्वोत्पत्तौ कारणाभावेन तस्यातीन्द्रियत्वमेव स्यात्। न च तद्युक्तम्। जालसूर्यकिरणे तस्य प्रत्यक्षात्॥

### बहुपरमाणूपादानत्वशङ्कानिरासः.

ननु मास्त्वन्तरा द्व्यणुकनामावयवी, परमाणुत्रययोगात्त्र्यणुकमित्यादिक्रमेणैव स्थूलद्रव्यस्योत्पत्तिर्भवत्विति चेदत्रोक्तं भामत्यां वाचस्पतिमिश्रचरणैः—बहवः परमाणवः एकद्रव्यं प्रति नोपादानतामश्नुवन्ति। तथासति घटनाशे युगपदेव तद्गतानां समेषामपि परमाणूनां विभागाच्चूर्णशर्करादीनां नयनगोचरता न स्यात्। अतो घटादिकं प्रति बहवः परमाणवः न कारणमित्यास्थेयम्। सत्येवं परमाणुत्रययोगादपि न द्रव्यं जायते इत्यङ्गीकरणीयम्। यतः परमाणुत्रयमपि बहु। अतः परमाणुद्वययोगाद्द्व्यणुकं तत्त्रययोगात्त्र्यणुकमित्यादिकमेव रमणीयम्। एवं द्व्यणुकद्वययोगादपि जातं द्रव्यान्तरं नोररीकरणीयम्। तस्य निरर्थकत्वात्। तद्धि अण्वात्मकमेव भवेत्। यतस्तत्र जनके महत्वोत्पादकं बहुत्वं महत्परिमाणं वा नास्ति। ततश्चेदृशं निरर्थकं द्रव्यं किमर्थं स्वीकर्तव्यम्?* अत्र परमाणुद्वययोगात्प्रथमतो द्व्यणुकमेवोत्पद्यते इति प्रशस्तचरणगिराप्यवसीयते (प्र. भा. ४८तमं पत्रं)। न्यायकन्दलीकारश्श्रीधरभट्टोऽप्येतं द्रढयामास (न्या. कं. ३२ पत्रं)। न्याय-

* 'महद्दीर्घवद्वे'त्यादिसूत्रभाष्यभामत्यामेतत्सर्वं द्रष्टव्यम्। तत्र शाङ्करभाष्ये 'कारणबहुत्वात्कारणमहत्त्वात्प्रचयविशेषाच्च महदि'ति वचनं कणादसूत्रतयोदहृतम्। किन्तु प्रचलितकणाददर्शने तन्नोपलभ्यते। तत्स्थाने 'कारणबहुत्वाच्च' (७-१-९) इत्याकारसूत्रं दृश्यते। तदेव शङ्करमिश्र उपस्कारे व्याचख्यौ। ततो बहुपूर्वमेव श्रीशङ्कराचार्योद्धृतं वचनं विलुप्तमिति तत्सूत्रोपस्कारवचनात्प्रतीयते.

ज्ञर्यामपि संक्षेपतः प्रागुक्तस्सर्वोऽपि वर्तते (न्या. मं. ५०३तमे पत्रे)। तस्मात्परमाणुद्वययोगाद्व्यणुकं, तत्त्रययोगात्त्र्यणुकमिति सिध्यति । तदेव त्रुटिः त्रसरेणुरिति च वदन्ति दार्शनिकाः ॥

## त्रसरेणुविचारः.

केचित्तु द्व्यणुकमेव त्रुटिं वदन्ति । तत्र प्रमाणन्तु मृग्यम् । वाचस्पतिमिश्रास्तु त्रुटिं त्रसरेणुरित्येवावादिषुः । तमेव प्रथमं दृश्यमित्यप्यवोचन् मन्वादयः * । याज्ञवल्क्यसंहितायां† मपि मनूक्तमनूक्तम्। तदीयटीकयामपरार्काख्यायामप्येवमेव व्याख्यातम् ‡ । एवं वीरमित्रोदये§ ऽप्युक्तम् । वाचस्पतिमिश्रास्तु तात्पर्यटीकायां त्रसरेणुस्वरूपव्यक्तौ याज्ञवल्क्यवचनस्य पूर्वार्धमुदाजह्रुः । चिकित्साशास्त्रेऽपि द्रव्यस्य परिमाणं गुरुत्वविशेषो वा त्रसरेणुरित्युक्तम् ‖ ॥

---

* जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥ १३२ ॥

*८माध्याये, पुरतः त्रसरेण्वष्टकमेका लिक्षा, तिस्रः लिक्षाः एको राजसर्षपः राजसर्षपत्रयं गौरसर्षपपदवाच्यं इत्यादिरूपेण विभिन्नास्संज्ञा निरूपितास्सन्ति .

† जालसूर्यमरीचिस्थं त्रसरेणुरजस्स्मृतम् ।
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ॥
(या. सं. आचाराध्याये, राजधर्मप्र. ३६०तमं पद्यम्.)

‡ 'गवाक्षप्रविष्टादित्यकिरणेषु यत्सुसूक्ष्मं वैशेषिकोक्तनीत्या द्व्यणुकत्रयारब्धं दृश्यते रजः तत्त्रसरेणुरिति मन्वादिभिः स्मृतम्' अपरार्कटीका.

§ गवाक्षप्रविष्टादित्यकिरणेषु यत्सूक्ष्मं वैशेषिकोक्तरीत्या द्व्यणुकत्रयारब्धं रजो दृश्यते । तत्त्रसरेणुरिति मन्वादिभिः स्मृतम् ॥ (वीर. २४९ प.)

‖ जालान्तरगतैस्सूर्यकरैर्वंशी विलोक्यते ।
त्रसरेणुस्तु विज्ञेयो त्रिंशता परमाणुभिः ॥
(त्रसरेणोस्तु पर्यायानाम्ना वंशी निगद्यते । परिभाषाप्रदीपे १मखण्डे.)

## श्रीमद्भागवतसम्मतिः.

भागवतेऽपि * विभिन्नकालविशेषस्वरूपं ग्राहयितुं परमाण्वणुत्रसरेणुप्रभृतिसंज्ञा निरूपिताः। तत्र च यद्यपि टीकाकारराघवार्यप्रभृतयः प्रतिवदन्ति तथापि श्रीधरविजयध्वजवल्लभविश्वनाथादयः परमाणुपदेन कालभिन्नपार्थिवादिपरमाणूनेव परिजगृहुः। विश्वनाथचक्रवर्ती तु प्रचलितन्यायवैशेषिकमतमनुसृत्य गवाक्षरन्ध्रे दृश्यमानत्रसरेणोष्षष्ठांश एव परमाणुरित्यभाणीत्। परन्तु श्रीधरः प्रोक्तपद्यगतं 'नृणामैक्यभ्रमो यत' इति वाक्यं 'परमाणुसमूहे एक अवयवीति भ्रमो भवति, वस्तुतः परमाणुसमष्टिभिन्नः कश्चन पृथगवयवी नास्तीत्येव भागवताचार्यसम्मत, इति व्याचकार। एवं पञ्चमस्कन्धगतात् 'येषां समूहेन कृतोविशेष' इति वाक्यादपि प्रोक्तसिद्धान्त एव दृढीकृत इति गदित्वा निरूपितव्याख्यामेव समर्थयामास। तट्टीकायां दीपिन्याख्यायां राधारमणगोस्वाम्यपि उक्तं तात्पर्यमेव व्यक्तीचकार। परन्तु वल्लभविश्वनाथमुखास्तत्पादमन्यथैव व्याचक्षत इत्यलं प्रसक्तानुप्रसक्त्या। प्रकृतन्तु त्रसरेणुः त्र्यणुकं त्रुटिरित्येत एकार्थकाः। अतः त्रुटिशब्दस्य द्व्यणुक इत्यर्थे प्रमाणं नास्ति ॥

## महादेवमतम्.

मुक्तावलीव्याख्यानवेलायां महादेवभट्टः गवाक्षरन्ध्रगतमार्ताण्डकिरणमध्ये दृश्यमानं रजः द्व्यणुकमेवेत्यभाणीत्। तत्र महत्वाभावात्कथं प्रत्यक्षत्वमिति चिन्त्यम्। त्रसरेणुरिति व्यवहारविरोधः निरूपितानेकप्रमाणविरोधश्चैतन्मते। एवं त्रिभिरणुभिस्साहितस्त्र्यणुक इत्यादिकमप्ययुक्तम्। निरवयवत्वेन त्रयाणां संयोगासम्भवात् ॥

---

* चरमस्सद्विशेषाणामनेकोऽसंयुतस्सदा।
परमाणुस्सविज्ञेयो नृणामैक्यभ्रमो यतः ॥ ११ ॥
(भा. तृ. स्कन्धे ११ अध्याये.)

## निरवयवपरमाणुसाधनम्.

नन्वेतत्सर्वं तदोपपद्यते यदा निरवयवपरमाणवः प्रमाणपदवीञ्ञ्च्छेयुरिति चेन्नैवं, निरवयवपरमाणुसद्भावे प्रमाणसद्भावात्तथाहि, मुद्गरादिना घातितो घट अनेकधा विभज्यते। तदीयभागा अपि पुन.पुनर्घातिताः प्रथमभागापेक्षया क्षुद्राः भवन्ति। एवमेव तदीयभागस्यापि उत्तरोत्तरविभागे सति तदीयावयवा क्षुद्रतरक्षुद्रतमा भवन्तीत्येतत्सार्वजनीनम्। परन्त्वेतत्क्षुद्रत्वप्रसञ्जनस्य किञ्चिन्निवृत्तिस्थानमास्थेयम्। तच्च न पुनर्विभागमर्हतीत्येतदपि स्वीकर्तव्यम्। तथा सति स एव परमाणुशब्दबोध्यो भवति। परमत्वमप्येतदेव विभागानर्हत्वरूपं तदपेक्षयाणुशून्यत्वं वा। अत एव तेऽतीन्द्रियाः॥

## तत्रानुपपत्तिपरिहारौ.

अत्र काचनानुपपत्तिः प्रादुर्भवति। यथा िह घटादीनामवयवास्सन्दृश्यन्ते. तथा परमाणूनामपि सन्ति भूयांसोऽवयवाः। तत्तदवयवानामप्यवमिति न कुत्रापि तदीयधाराया अन्तोऽस्ति। ततश्च निरवयवपरमाणुर्न सिध्यतीति। अत्रैवं समाधिरभिधीयते। अत्र निखिलनयनगोचरं त्रसरेणुमाश्रित्य विचारयामः। स च गवाक्षरन्ध्रगरविमरीचिषु गोचरीभूतस्सूक्ष्मांशः। तस्य तावदवयवोऽस्तीति न कोऽपि संशेते तस्य तस्याप्यवयवः तस्याप्येवमिति स्वीकारे अनन्तावयवयुतो भवति त्रसरेणुः। तथा सति सुमेरुसर्षपयोरपि साम्यप्रसङ्गः। अयं महानयमणुरिति व्यवहारः खलु लोके तदीयावयवतारतम्यनिबन्धनो प्रदृष्टः। यत्रावयवसङ्ख्याया आधिक्यं तस्य महत्त्वं, यस्य पुनरल्पता तस्याणुत्वं भवति। प्रकृते पूर्वपक्षिदिशा मेरोरप्यवया अनन्ता सर्षपस्यापि तथैव भवन्ति। एवञ्च तयोरवयवतारतम्यवैधुर्यात्साम्यशङ्का

कुतो न प्रसरेत? तस्मादवयवधाराया यत्र कुत्रचिद्विश्रान्तिरास्थेयैव। सत्येवं, यत्र सर्षपावयवधाराया विश्रामः तत्राल्पीयांस एवावयवाः, यत्र मेरुगिर्यवयवधाराया अवसानं, तन्मध्यपतिता अवयवाः पुनस्सर्षपावयवापेक्षया सङ्ख्यातो भूयांस इति तारतम्यान्मेरुसर्षपयोस्तारतम्यं सूपपादं भवति। भामतिनिबन्धे वाचस्पतिमिश्राः परमाणुवादं ग्राहयितुमिमामेव युक्तिमूचुः (२-२-११)। वस्तुत इयमेव चरमा युक्तिर्नैयायिकानाम्॥

त्रुटौ न विश्रान्तिः.

अत्र त्रुटावेव विश्रामो नाङ्गीकर्तुमुचितः, यतस्सा चाक्षुषद्रव्यं अतस्सावयवा। यद्धि चाक्षुषं द्रव्यं तत्सर्वं सावयवं दृष्टम्। यथा घटादि। एवं तदवयवस्यापि द्व्यणुकस्यावयवोऽस्ति। चाक्षुषद्रव्यारम्भकत्वात्। कपालादिरेवात्र निदर्शनम्। एवमेवावयवपारम्परीसिद्धिरस्त्विति न वाच्यम्। मेरुसर्षपयोस्साम्यप्रसङ्गस्य जागरूकत्वात्। तस्मात्कपालमारभ्य त्रुटिपर्यन्त दृश्या एवावयवाः. तदनु चादृश्यं द्व्यणुकं परमाणुश्चेति द्वयमेवावयवपदवाच्यं कल्पनीयमिति सिध्यति। तदुपरि चावयवपारम्परीकल्पनं प्रोक्तबाधकस्य जागरूकत्वान्न सम्भवति। एषा च प्रणाली प्राक्तनानां नैय्यायिकानामिति ज्ञातव्यम्॥

रघुनाथशिरोमणिमतम्.

नवीनानां मध्ये रघुनाथशिरोमणिनामा प्रसिद्धविपश्चिन्नैनां प्रणालीमनुमोदते। स च निजनिर्मित "पदार्थनिरूपणा" भिधानप्रबन्धे बहुविचारपुरस्सरं त्रसरेणोरेव विश्रामस्थानतामास्थाय द्व्यणुकपरमाणून्नोररीचकार। तत्रैवं युक्तिः प्रादर्शि *। चाक्षुषद्रव्यत्वमहदारम्भकत्वा-

* परमाणुद्व्यणुकयोश्च मानाभावः, त्रुटावेव विश्रमात्। त्रुटिस्समवेता चाक्षुषद्रव्यत्वाद्घटवत्। ते च समवायिनस्समवेताश्चाक्षुषद्रव्यसमवायित्वादिति चाप्र-

दियुक्तिभिर्यदि त्र्यणुकद्व्यणुकानामवयवास्तर्हि तथैवावयवपारम्परीप्रसङ्गेनानवस्थादोषः प्रादुष्ष्यादेव । तस्माद्यदा यत्र कुत्रचिद्विश्रान्तिरावश्यकी तदा सर्वाध्यक्षसिद्धत्रसरेणावेव साङ्गीकर्तुमुचिता । त्रसरेणुरेव नित्यं निरवय द्रव्यम् । तत्रैव नित्यं महत्वमास्ते । इतरद्रव्यापेक्षयापकृष्टपरिमाणवत्वादमुमणुरिति व्यवहरन्ति । महत्पदार्थोऽपि महत्तमवस्त्वपेक्षया क्षुद्र इति तत्राणुव्यवहारो लोके प्रचुरं दृष्टः । गोतमेनापि "महदणुग्रहणा" दिति सूत्रे (३-१-३३) चाक्षुषद्रव्येऽप्यणुशब्दः प्रायोजि ॥

### तद्विमर्शः.

अत्रेदमालोचनीयम् । अतिरिक्ताणोरस्वीकारे तत्प्रत्यक्षापत्त्यभावेन प्रत्यक्षं महत्त्वस्य कारणत्वं विलीयते । अणुरिति व्यवहारस्यापकृष्टपरिमाणनिबन्धनत्वे महानणुरिति व्यवहारः कुतो न भवेत्? महत्वातिरिक्ताणुत्वमेव नास्तीति पक्षे परमाणुरिति व्यवहारानुपपत्तेश्च । तस्याणुत्वावधिकोत्कर्षाश्रयाणुत्वनिबन्धनत्वात् ॥

### गौतमस्य तत्रासम्मतिः.

मतमेतद्गोतमसम्मतमिति तु न भवति । गोतमो हि अतीन्द्रियपरमाणुमेव स्व्यकरोत् । अत एव 'नातीन्द्रियत्वादणूना' मिति निजराद्धान्तं विस्पष्टमूचिवान् । न कुत्रापि त्रसरेणुमेव परमाणुस्थानीयमङ्गीचकार । 'पर वा त्रुटे' रित्यत्रापि (४-२-१०) अतीन्द्रियं परमाणुमेवाभिप्रैति । प्रोक्तनिरकाशसूत्रबलात् । यद्ययं गोतममुनिस्त्रुटिमेव विश्रान्तिस्थानीयमभ्युपेयात्तर्हि परमाणुपुञ्जवादिमते घटादीनामनध्यक्ष-

---

योजकं, अन्यथा तादृशसमवायसमवायित्वादिभिरवस्थिततत्समवायिपरम्परासिद्धिप्रसङ्गात् । अणुव्यवहारश्चापकृष्टपरिमाणनिबन्धनो महत्यपि महत्तमादणुव्यवहारात् । 'पदार्थतत्त्वनिरूपणम्.

तामापादयितुं न पारयेत् । त्रसरेणुरूपपरमाणुपुञ्जस्य स्वमते ऐन्द्रियकत्वात् । गवाक्षरन्ध्रगतरणिकिरणवर्तिनस्सूक्ष्मरेणोस्तस्य महर्षयोऽपि दृश्यतामगादिषुः । यद्येवं, प्रत्येकमध्यक्षसिद्धत्रसरेणुघटितपुञ्जस्य प्रत्यक्षता स्यादेव। तथासति महर्षिः कां युक्तिमाश्रित्य अतिरिक्तमवयविनं साधयेत्? तस्मात्रसरेण्वतिरिक्तपरमाणुरेव महर्षिमतिगोचर इति शिरोमणिमतं तन्मतविरुद्धम् । 'परं वा त्रुटे' रित्यत्राप्ययमेवार्थस्तदभिलषित इति आकरतो ज्ञायते ॥

### विश्वनाथराधामोहनगोस्वामिनोर्मतम्.

अत्र वृत्तिकारो विश्वनाथपञ्चाननः 'वा' शब्दस्य विकल्पार्थतामूरीकृत्य त्रुटेः परं सूक्ष्मे परमाणौ अथवा त्रुटावेव विश्राम इति व्यातेने । न्यायसूत्रविवरणकारो राधामोहनगोस्वाम्यपि वृत्तिकारीयां वृत्तिमनूद्य, समनन्तरं 'नव्यास्त्वि' त्यारभ्य सूत्रघटकपरशब्दद्वारा प्रलयादनन्तरं पुनस्सृष्टेरादौ यद्द्रव्यं जायते, तदेवात्र विवक्षितमिति नूत्नां व्याख्यामकरोत् । व्याख्याद्वयमप्येतच्छिरोमणिसरणिमनुसरति । अत्राप्यतः प्रागुक्तसूत्रविरोधो जागर्तीत्येतदनुस्मर्तव्यम् । परन्तु विश्वनाथपञ्चाननः मुक्तावल्यां शिरोमणिमतमाक्रम्य निराचकार । न्यायसूत्रवृत्तौ पुनस्स एव शिरोमणिमतमेव शरणीकृत्य भूषयामासेति विमर्शकधौरेयाः विश्वनाथपञ्चाननव्याख्यानप्रणालीं परिभावयन्तु ॥

### चरकाचार्यसम्मतिः.

चरकसंहितायामपि * चरकमहर्षिः परमाणोरतीन्द्रियता सुविशदं प्रतिपादयामास ॥

---

* शरीरावयवास्तु परमाणुभेदेनापरिसंख्येया भवन्ति । अतिबहुत्वादतिसौक्ष्म्यादतीन्द्रियत्वाच्चेति शरीरस्थानं ७म अ. २४ श.

### प्राचीनमतमेतन्न नवीनम्.

शिरोमणिनिरूपितमेतन्मतं न तेनैव नूतनमुदभावि। परन्तु वात्सीपुत्रवैभाषिकसम्प्रदायविशेषात्समापतितम्। तादृशसम्प्रदायः गवाक्षरन्ध्रे दृश्यमानं त्रसरणुमेव परमसूक्ष्ममित्यङ्गयकरोत्। अयमर्थ उद्योतकरेणैव न्यायवार्त्तिके* न्यरूपि ॥

### उद्योतकरमतखण्डनम्.

सोऽयं वाद उद्द्योतकरेणैवं† निराकारि। त्रसरेणुर्नपरमाणुस्थानापन्नः। यस्म त्साविभागमर्हति। परमाणुः पुनर्न विभाज्यः। त्रसरेणोर्विभागे किम्प्रमाणम्? अस्मदादिबहिरिन्द्रियग्राह्यद्रव्यत्वमेव। दृश्यते हि बाह्येन्द्रियेण चक्षुरादिना गृह्यमाणं घटादि द्रव्यं विभागार्हम्। तद्वत्त्रसरेणुरपि गवाक्षगततरणिकिरणस्थश्चक्षुरिन्द्रियेणाध्यक्षीक्रियते, अतएव विभाज्यो भवति। न खल्वस्या व्याप्तेः कुत्रचिद्व्यभिचारो दृष्टः। तस्मान्नत्र सरेणुः परमाणुरिति ॥

उद्द्योतकरनिरूपितसरणिमनुसृत्यवै समनन्तरवर्तिनो गोतममतव्याख्यातारः "त्रसरेणुस्सावयवः, चाक्षुषद्रव्यत्वाद्धटवदि" त्यनुमानेन त्रसरेणोस्सावयवतां साधयामासुः। एवं त्रसरेणोरवयवसत्वे तस्याप्यवयव ऊरीकरणीयः। कुतः? चाक्षुषद्रव्यावयवभूतत्वात्। यद्धि चाक्षुषद्रव्यस्यावयवभूतं तत्सावयवं भवति। यथा घटाद्यवयवः कपालादिस्सावयवो दृष्ट। प्रकृते त्रसरेण्ववयवः द्व्यणुकं। तस्यावयवः परमाणुर्भवति। परन्त्वेवमेव तस्यापि परमाणोरवयवस्तस्याप्येवमिति क्रमेणावयवपारम्परी

---

* 'एकं तु वातायनछिद्रदृश्यं त्रुटिंपरमाणु वदन्ति' न्या. वा. २अ. १आ.

† 'तन्न युक्तम्। तस्य भेद्यत्वात्। अभेद्य· परमाणुर्भिद्यते त्रुटिरिति। कथमवगम्यते भिद्यते त्रुटिरिति? द्रव्यत्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वाद्धटवदिति। २याध्याये, १माह्निके, 'साध्यत्वादवयविनि सन्देह' इति सूत्रवार्त्तिकं २३२ तमं प.

न सेद्धुमर्हति । यतो मेरुसर्षपयोस्साम्यप्रसङ्गो जागर्ति । अतस्त्रसरेण्ववयवयावयव एव विश्रान्तिमभ्युपयन्ति चरणाक्षपक्षीयाः कणभक्षपक्षीयाश्च ॥

तद्विमर्शः.

वस्तुतस्त्वयं पक्षो न्याय्य इति प्रतिभाति विमर्शकधौरेयाणाम् । द्रव्यावयवविभागस्य हि कुहचिद्विश्रान्तिरास्थेयैव । नो चेदनवस्थादिदोषप्रसङ्गाः प्रादुष्युः । सत्येवं, त्रसरेण्ववयवावयव एव विश्रमाभ्युपगमे किमस्ति बाधकम्? घटादिद्रव्यं खलु बृहत् । तस्मात्तदवयवावयवोऽप्यध्यक्षगोचरीक्रीयते । ततश्च तस्याप्यवयव आश्रीयते । प्रत्यक्षसिद्धोऽपि सः । परन्त्वेवं त्रससरेणोरवयवस्य योऽवयवस्तस्याप्यवयवस्वीकारे किमपि कारणं न पश्यामः । यद्यनुमानेन तस्याप्यवयवस्साध्यते, तदापि न निरवयवपरमाणोर्निराकरणं भवति । कुतः? निरूपितयुक्त्या यत्किञ्चित्स्थानं विभागनिवृत्त्यधिकरणमुररीकरणीयम् तदेव हि ना निरवयपरमाणुपदवाच्यं भवति । तस्मात्सुदूरधावनमपेक्ष्य त्रसरेण्ववयवस्यावयवं परिकल्प्य स एव परमाणुरित्युक्तिस्साधीयसी । त्रसरेण्ववयवपदवाच्यं द्व्यणुकं, तस्यावयव एव परमाणुः । परमाणुद्वयसंयोगाद्व्यणुकं, तत्त्रयसंयोगात्त्र्यणुकमित्येवं क्रमेण घटादिरूपमहद्द्रव्यजननम् । अत्र च द्व्यणुकपदे विद्यमान 'मणु' पदं परमाणुं बोधयति । त्र्यणुकमित्यत्र विद्यमानं पुनर्द्व्यणुकं गमयति । परमाणुरिव द्व्यणुकमपि महत्त्वाभावादणुव्यवहारगोचरो भवति । अतएव वाचस्पत्युदयन-श्रीधर-जयन्तप्रमुखाः प्राचीनाचार्या बहुत्र 'त्रसरेणुं' त्र्यणुकमित्यप्यभ्यधुः । परन्त्वस्य त्रसरेणुरित्येव प्रसिद्धमभिधानम् ॥

केचित्त्रिभिस्सहितो रेणुरित्यर्थे त्रसरेणुशब्दो निपातितः, परमाणुशब्दो निपातितः परमाणुत्रययुतरेणुः यस्मिन् रेणौ अवयवरूपेण

त्रयः परमाणवस्सन्ति, स एव त्रसरेणुरिति व्युत्पत्तिलभ्यार्थ इति वदन्ति । अस्यां च व्युत्पत्तौ न किमपि प्रमाणमुपलभ्यते । परन्त्वत्र-त्याणुपदस्य परमाणुवाचकत्वं न सम्भवतीति प्रागवोचाम । एवम्प्रति-भाति । यद्गवाक्षरन्ध्रगततरणिकिरणमध्ये यो रेणुः क्रियासमभिहारेण चरणशीलः सः 'त्रसः, चरिष्णुः, जङ्गमो' वा तादृशो यो रेणुस्स त्रसरेणुपदगोचर इति नामलिङ्गानुशासनेऽपि * 'त्रस' शब्दस्यायमर्थ उक्तः महाभारतादौ † चास्मिन्नर्थे त्रसशब्दस्य प्रचुरं प्रयोगो वरीवर्ति तस्माच्चरणशीलरेणुरेव त्रसरेणुः । यागरूढोऽयं शब्दः ॥

एवञ्च निरवयव. परमाणुस्सिद्धः । तस्मादेव च परमाणूनां नित्यतापि । 'पर वा त्रुटे' रित्यत्र परशब्दात्रसरेण्वयवस्य योऽवयवस्स एव महर्षिमतिस्थ इत्येवावगन्तव्यम् । 'नाणुनित्यत्वात्' (२-२-२४) इत्यादिना गोतमः परमाणोर्नित्यतामपि स्वीचकार । कणाद इवायमपि आरम्भवादमेव निजसिद्धान्ततया परिजग्राह । 'व्यक्ताद्व्यक्तानां प्रत्यक्ष-प्रामाण्या' दिति सूत्र(४-१.११)पर्यालोचनेन तच्च स्फुटमवगन्तुं पार्यते। तस्माद्गोतममते ,परमाणोर्नित्यत्वं निरवयवत्वं त्र्यणुकावयवत्वं च द्व्यणु-कादिक्रमेणैव सृष्टिरित्यत्र न सन्देहः । शिरोमणिः परं त्रसरेणावेव विश्रान्तिमङ्गीकरोति । तथापि गोतममतव्याख्यातारः तथा नाभ्युप-यन्ति । त्रसरेणोष्षष्ठो भाग. परमाणुरित्येकवचनं प्रागारभ्य प्रचलित-मास्ते न्यायकोशेऽपि तद्वचनमुद्धृतम् । महादेवोऽपि मुक्तावलीप्रकाशे तद्वचनमुदाजहार । तत्र तद्व्यणुकमेवेति निजमतं प्राचकाशत् । तच्च पूर्वं निष्प्रमाणं प्रमाणविरुद्धमिति च दर्शितम् । मन्वादयस्तं रेणुं त्रसरे-णुरित्येव निरवोचन् । वाचस्पतिमिश्रा अपि सूत्रगतं त्रुटिशब्दं त्रसरेणु-

* 'चरिष्णुर्जङ्गमचरं त्रसमिङ्गं चराचरम् ।' (नामलि.)

† 'त्रसाणां स्थावराणाञ्च यच्चेङ्गं नेङ्गते ।' (म. भा. वनप. १८१-३०.)

रिति व्याचक्रुः । तत्र याज्ञवल्क्यवचनमप्यूचुः । त्रुटिशब्दस्य क्षुद्र-वस्तुनि प्रयोगे प्राक्प्रमाणमपि प्रादर्शि । तदनुसारेणापि दृश्यमध्ये सर्वापेक्षया क्षुद्रत्रसरेणुरेव तदर्थ इति गम्यते । शिरोमणिप्रभृतयोऽपि नवीनास्त्रसरेणुरूपार्थ एव 'त्रुटि' शब्दं प्रायुञ्जत । भागवते तु त्रसरेणोः परं त्रुटेरुल्लेखो दृश्यते । अथापि स त्रुटिशब्दः कालवाचकः । कालविशेष एव त्रसरेणुभिन्नः त्रुटिशब्दवाच्य इति न विरोध इति सर्वतन्त्रस्वतन्त्रफणिभूषणमहोदयमतम् ॥

एवञ्च परमाणुसंयोगादिभ्य जगदुत्पत्तिरिति वाद एव योगवादः । तं वादमाश्रिता ये तेऽपि योगा इत्युच्यन्ते, ते च नैय्यायिकवैशेषिका इति तेषु योगशब्दार्थसमन्वयम्सम्पन्न इति ॥

## ५. निरवयवत्वे बाधकानि.

अथेदानीम्प्रोक्तराद्धान्तं द्रढीकर्तुं वादिभिरुद्भावितानि बाधकानि निरसनीयानि भवन्ति । तदर्थमादौबाधकानि तानि निरूप्यन्ते ॥

### आनुपलम्भिकोक्तबाधकम्.

तत्र तावदानुपलम्भिकः * परमाणोर्निरवयवत्वे आकाशव्यतिभेद-रूपं बाधकमभ्यधात् । तद्रीतिश्चेत्थम् , आकाशं तावत्सर्वगतमास्थितमायुष्मता, तथासति न परमाणोर्निरवयवता यतस्तस्याप्यन्तर्बहिर्देशो वर्तते, तेन चाकाशस्य संयोग आस्थेयः, स एव देश अवयव इत्युदीर्यते सत्येवं परमाणुर्निरवयव इत्युक्तिः कथं सध्रीयसी? अत्र चाकाश-प्रतिभेदो नाम अन्तर्बहिस्संयोगविशेष एव ॥

---

* अय च वादः परमप्राचीनः । यतो वात्स्यायनो न्यायभाष्ये निरवयव-प्रकरणे आनुपलम्भिकमतं सनामग्राहमुपन्यास्थत्। यस्तु प्रत्यक्षादिकं किञ्चिदप्युपलम्भं

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

---



---

## सम्पादकीयसमितिः

---

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए., विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्. ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासन-विमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचल-शास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासा-चार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानो-पाध्यायाः

६. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशाला-साहित्यप्रधानोपाध्यायाः

७. महाविद्वांसः करूरु शेषाचार्याः, महापाठशाला ज्यौतिष-प्रधानोपाध्यायाः

८. श्रीमन्तः एच्. योगनरसिंहार्याः, एं.ए. महापाठशालाध्यक्षाः (सम्पादकाश्च)

## विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः–संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (*3s.*) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

**संपादकः,**

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

1. संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगर.
2. संस्कृत साहित्यपरिषत्पात्रिका, कल्कत्ता.
3 उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. श्रीपीयूषपत्रिका, नडियाद्.
7 संस्कृतरत्नाकर, जयपुर.
8. कल्याण, गोरख् पुर.
9. The Mythic Society Journal, Bangalore.
10. The School Folk, Tumkur.
11. Annals of the Bhandarkar Oriental Research Institute, Poona.
12. Review of Philosophy and Religion, Poona.
13. Journal of Oriental Research, Madras
14. The Law College Magazine, Madras.
15. The Literary and Educational Supplement to "The Hindu," Madras.
16. The Aryan Path, Bombay.
17. The Theosophical Movement, Bombay.
18. The Philosophical Quarterly, Calcutta.
19. Karnataka Historical Review, Dharwar.
20. Saqi, Secunderabad.
21. Ardra, Ceylon
22. Wiener Beitrage Zur Kulturgeschichte and Linguistik, Wien.

23. The Journal of Music Academy, Madras.
24. "Yoga," Bulsar.
25. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ.
26. ಭಾರತೀ, ಮದ್ರಾಸು.
27. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ.
28. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ.
29. ರಾಷ್ಟ್ರಬಂಧು, ಮಂಗಳೂರು.
30. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು
31. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
32. ಅಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಬೆಂಗಳೂರು.
33. ರಂಗಭೂಮಿ, ಬೆಂಗಳೂರು
34. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.
35. ಸುಬೋಧ, ಬೆಂಗಳೂರು
36. ಜ್ಯೋತಿಷವಿಚಾರಸಾಗರ, ಶಿವಮೊಗ್ಗ.
37. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ.
38. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು.
39. ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು.
40. ಸದ್ವೈದ್ಯ, ಮೈಸೂರು.

---

# ಕನ್ನಡದಲ್ಲಿ ಹೊಸದಾಗಿ ಪ್ರಕಟವಾಗುವ ಗ್ರಂಥಗಳ ವಿವರಗಳು

## ಎಲ್ಲ ಗ್ರಂಥಕರ್ತರಿಗೂ ಪ್ರಕಾಶಕರಿಗೂ ವಿಜ್ಞಾಪನೆ.

ಕನ್ನಡದಲ್ಲಿ ನಡೆಯುತ್ತಿರುವ ಬಗಬಗೆಯ ಗ್ರಂಥಾಭಿವೃದ್ಧಿಯ ವಿವರಗಳನ್ನು ಕ್ರಮವಾಗಿ ಸಂಗ್ರಹಮಾಡಿ ಲಿಖಿತರೂಪದಲ್ಲಿರಿಸುವುದು ಪರಿಷತ್ತಿನ ಒಂದು ಕರ್ತವ್ಯವಾಗಿದೆ. ಇದೇ ಉದ್ದೇಶದಿಂದ ಕಳೆದ ವರ್ಷ ಗ್ರಂಥಪ್ರದರ್ಶನವನ್ನು ನಡೆಸಿ ಆ ಸಂದರ್ಭದಲ್ಲಿ ಗ್ರಂಥಪ್ರಕಟನಕಾರ್ಯದ ಮುಖ್ಯಾಂಶಗಳ ವಿವರವನ್ನು ಸಾಧ್ಯವಿರುವ ಮಟ್ಟಿಗೂ ಸಂಗ್ರಹಿಸಿದ್ದಾಗಿದೆ. ಆ ಪ್ರದರ್ಶನವಾದಂದಿನಿಂದೀಚೆಗೆ ಎಂದರೆ ೧೯೩೪ನೆಯ ಇಸವಿ ಜನವರಿಯಿಂದೀಚೆಗೆ ನಡೆದಿರುವ ಗ್ರಂಥಾಭಿವೃದ್ಧಿಯ ವಿವರಗಳನ್ನು ಆದಷ್ಟು ನಿಷ್ಕರ್ಷೆಯಾಗಿ ಸಂಗ್ರಹಿಸಬೇಕಾದ ಕಾರ್ಯ ಉಳಿದಿದೆ. ಆದಕಾರಣ ಕನ್ನಡದಲ್ಲಿ ಗ್ರಂಥಬರೆಯುವ ಮತ್ತು ಪ್ರಕಾಶಪಡಿಸುವ ಎಲ್ಲ ವ್ಯಾಪಾರ ಸಂಸ್ಥೆಗಳೂ, ಸಾಹಿತ್ಯ ಸಂಘಗಳೂ, ವ್ಯಕ್ತಿಮಹಾಶಯರೂ ತಮ್ಮ ತಮ್ಮ ಪ್ರಕಟನೆಗಳನ್ನು ಕುರಿತ ಸುದ್ದಿಯನ್ನು ಬರೆದು ಪರಿಷತ್ಪತ್ರಿಕೆಯ ಕಾರ್ಯಾಲಯಕ್ಕೆ ಕಳುಹಿಸಬೇಕೆಂದು ಕೋರುತ್ತೇವೆ. ಪರಿಷತ್ಪತ್ರಿಕೆಯಲ್ಲಿ ವಿಮರ್ಶೆಗಾಗಿ ಅನೇಕ ಗ್ರಂಥಗಳು ಬರುತ್ತವೆಯಾದರೂ, ಎಲ್ಲ ಗ್ರಂಥಗಳೂ ನಮ್ಮ ಕೈಸೇರುತ್ತಿವೆಯೆಂದು ನಾವು ಭಾವಿಸುವಹಾಗಿಲ್ಲ ಎಷ್ಟೋ ಗ್ರಂಥಗಳು ಪ್ರಕಟವಾಗಿರುವ ಸಂಗತಿಯೇ ನಮಗೆ ಈಗ ತಿಳಿದುಬರುವ ಅವಕಾಶವಿಲ್ಲ. ಪರಿಷತ್ಪತ್ರಿಕೆಯು ಮುಂದಿನ ಸಂಚಿಕೆಯಿಂದ ಪ್ರತಿ ಸಂಚಿಕೆಯಲ್ಲಿಯೂ ಆಯಾ ಸಂಚಿಕೆಗೆ ಸಂಬಂಧಪಟ್ಟ ಮಾಸತ್ರಯದಲ್ಲಿಯೂ ಪ್ರಕಟವಾಗಿರುವ ಗ್ರಂಥಗಳ ಹೆಸರುಗಳನ್ನೂ, ಅವುಗಳ ಗ್ರಂಥಕರ್ತರು, ಪ್ರಕಾಶಕರು, ಗಾತ್ರ, ಆಕಾರ ಮೊದಲಾದ ವಿವರಗಳೊಡನೆ ಪಟ್ಟಿಮಾಡಿ ಪ್ರಕಟಗೊಳಿಸಬೇಕೆಂದು ಆಶೆಯಿದೆ. ಇದಕ್ಕೆ ಎಲ್ಲ ಗ್ರಂಥಕರ್ತರೂ ಮತ್ತು ಪ್ರಕಾಶಕರೂ ನೆರವಾದ ಹೊರತು ನಮ್ಮ ಉದ್ದೇಶವು ನೆರವೇರಲಾರದು. ಗ್ರಂಥಪ್ರಕಾಶನದಲ್ಲಿ ಉದ್ಯುಕ್ತವಾಗಿರುವ ಸಮಸ್ತರೂ ಗ್ರಂಥಪ್ರಕಟವಾಗುವ ಸಮಯದಲ್ಲಿಯೇ ಈ ಕೆಳಗಿನ ವಿವರಗಳನ್ನು ಒಂದು ಕಾರ್ಡಿನಲ್ಲಿ ಬರೆದು ಪರಿಷತ್ಕಾರ್ಯಾಲಯಕ್ಕೆ ಕಳುಹಬೇಕೆಂದು ಕೋರುತ್ತೇವೆ .—

೧. ಪುಸ್ತಕದ ಹೆಸರು, ೨. ಪುಸ್ತಕದ ಅಡ್ಡಹೆಸರೇನಾದರೂ ಇದ್ದರೆ ಅದು, ೩. ಪುಸ್ತಕದ ವಿಷಯ, ೪. ಪುಸ್ತಕದ ಜಾತಿ, ೫ ಪುಸ್ತಕದ ಲೇಖಕರ ಹೆಸರು, ವಿಳಾಸ, ೬ ಪುಸ್ತಕದ ಪ್ರಕಟನಕರ್ತರ ಹೆಸರು, ವಿಳಾಸ. ೭. ಪುಸ್ತಕದ ಮೊದಲನೆಯ ಪ್ರಕಟನೆಯ ತಾರೀಖು, ೮. ಪುಸ್ತಕದ ಈಗಿನ ಪ್ರಕಟನೆ ಎಷ್ಟನೆಯ ಆವೃತ್ತಿಯದು, ೯. ಪುಸ್ತಕದ ಬೆಲೆ ; ಉತ್ತಮಪ್ರತಿ, ಸಾಮಾನ್ಯಪ್ರತಿ, ೧೦. ಈ ಪುಸ್ತಕ ಇದುವರೆಗೆ ಒಟ್ಟು ಎಷ್ಟುಪ್ರತಿ ಮುದ್ರಿತವಾಗಿದೆ, ೧೧. ವಿಶೇಷಾಂಶಗಳು (ದೊರೆತಿರುವ ಬಹುಮಾನ ಇತ್ಯಾದಿ ವಿವರಗಳೇನಾದರೂ ಇದ್ದರೆ ಅವು)

# ಪರಿಷತ್ತಿನ ಕಾರ್ಯವಿವರಗಳ ವರದಿ

ರಾಯಚೂರಿನಲ್ಲಿ ನಡೆದ ವಾರ್ಷಿಕಾಧಿವೇಶನದಲ್ಲಿ ಸದಸ್ಯರಿಂದ ಅಂಗೀಕೃತವಾದ ವರಡಿಯ ಪ್ರತಿಗಳನ್ನು ಅಲ್ಲಿಯ ಅಧಿವೇಶನಕ್ಕೆ ಬಂದಿದ್ದ ಸುಮಾರು ೬೩ ಮಂದಿ ಸದಸ್ಯರಿಗೆ ಕೈಗೆ ಕೊಡಲಾಯಿತು. ಅಲ್ಲಿಗೆ ಬಾರದಿದ್ದ ಸುಮಾರು ೨೦೦ ಮಂದಿ ಸದಸ್ಯರಿಗೆ ವರದಿಗಳ ಪ್ರತಿಯನ್ನು ಅಂಚೆಯ ಮೂಲಕವೂ ಆಳಿನಮೂಲಕವೂ ಕಳುಹಿಸಲಾಗಿದೆ ಈಗ ವರದಿಯ ಪ್ರತಿಗಳು ಪರಿಷತ್ತಿನಲ್ಲಿ ಸ್ವಲ್ಪಮಾತ್ರ ಮಿಕ್ಕಿವೆ ಯಾರಾದರೂ ಬಯಸಿದಲ್ಲಿ ಕಾರ್ಯದರ್ಶಿಯವರು, ಪ್ರತಿಗಳು ಉಳಿದಿದ್ದರೆ, ಸಂತೋಷದಿಂದ ಕಳುಹಿಸುವರು

---

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा



"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः"

(ईशोपनिषत्)

सम्पुटम् १०] अक्टोबर् १९३४ [सञ्चिका ४

तरुणेन्दुकुसुमखचितजटं त्रिदिवनदीसलिलधौतमुखम् ।
नगसूनुप्रणयं वेदनिधिं परिणाहितुहिनशैलगृहम् ॥

अमृतभवं गुणरहितं तमवनिरविशशिज्वलनजलपवनगगनतनुं ।
शरणं व्रजामि शुभमतिकृतनिलयम् ॥

तरुणामलेन्दुमणिभूषितामलशिरोजं
भुजगाधिपैककुण्डलविलासकृतशोभम् ।
नगसूनुलक्ष्मीदेहार्धमिश्रितशरीरं
प्रणमामि भूतगीतोपहारपरितुष्टम् ॥

(गीतानि)

. यदि च परमाणोरन्तर्नास्त्याकाशमिति भण्यते, तर्हि आकाशस्य सर्वगतत्वसिद्धान्तो भज्येत । सर्वमूर्तद्रव्यावयवैस्सह संयोग एव हि सर्वगतत्वं, परमाणवोऽपि मूर्ता एवेत्यङ्गीकृतं निरवयवपरमाणुवादिभिः । तस्मान्न तस्य निरवयवतेति ॥

---

नानुमनुते स आनुपलम्भिकः। अयमपि एकविधश्शून्यतावादी सर्वाभाववादीतिचोच्यते। भाष्यकारोपि 'आनुपलम्भिक' शब्दोत्तरं 'सर्वं नास्तीति मन्यमानः' इति व्याख्याय प्रोक्तमेवार्थं द्रढयति । गोतमसूत्रे चतुर्थाध्याये प्रथमाह्निके सर्वशून्यताप्रकरणमित्येकं प्रकरणं (४-१-३७) वर्तते । तत्रापि सर्वाभाववादो निराकारि । उभयत्रापि तात्पर्य-टीकाकारा वाचस्पतिमिश्राः शून्यतावाद एव निराचिकीर्षित इति प्रत्यपीपदन् । व्याचक्रुश्च तन्मतं तत्रैव 'मते चास्मिन् शून्यत्वमेव वास्तविकं—सत्ता हि न वास्तविकी, कल्पनावगत एव सर्वेऽपि पदार्था सन्त इव भासन्ते' इति । अत्र यस्य तु मते निखिलस्याप्यसत्ता तस्य मते शून्यतायाः कथं सत्तामभ्युपयन्ति इति चिन्त्यम् । भाष्यकृतां मते तु सर्वस्याप्यलीकतैवेत्येतन्मतव्याख्यानम् । एत एव टीकाकारा भामत्यां (२-२-३७) वस्तु सदपि न, असदपि न, एतदुभयविधमपि न, एतदुभाभ्यामन्यविधमपि न भवति परन्तु विचारासहत्वमेव, वस्तुनस्तत्त्वमिति शून्यवादव्याख्यामरीरचन् । वस्तुतस्त्वत्र नैतन्मतस्य निराकरणीयता प्रतिभाति पूर्वप्रकरणे हि सर्वास्तिवादिबौद्धसम्प्रदायमतं पराकृतम्। अतोऽत्र सर्वनास्तित्ववाद एव निराचिकीर्षित इति गम्यते । अस्य चापरं नामधेयं 'असद्वाद' इति। अयं च वाच-स्पतिव्याख्यातमताद्भिद्यते । तद्व्याख्यातं च मतं नागार्जुनोपज्ञमिति माध्यमिककारि-कादितोऽवसीयते । वात्स्यायनभाष्ये च तन्मतस्य विशेषविचारो नोपलभ्यते। ततस्त-त्काले नागार्जुनव्याख्यातशून्यवादस्य स्थितिर्नासीदिति अनुमीयते । तादृशासद्वादा-पेक्षया एतस्य अनुपलम्भिकोक्तासद्वादस्य विशेषो विद्यते । सचैतन्मत उपलब्धिरपि वस्तुतो नास्तीति । अयमर्थः 'आनुपलम्भिक' पदादेव ज्ञायते । मिश्रमहोदयास्तु एतन्मते शून्यतैव सतीति व्याचक्रुः । शून्यतावादस्य प्राचीनकाले नैकविधानि व्याख्यानान्यासन् । तस्मात् शून्यतावादिनां मध्येपि सम्प्रदायभेदो मतभेदश्च संवृत्त इति ज्ञायते । परं बौद्धनागार्जुन (२०० क्रि. श.) स्तं वादमन्यथैव व्याचकार । एतेऽसद्वादिनश्शून्यवादिनो वा विज्ञानवादिभिरुक्ता युक्तीराश्रित्यैव परमाणूनामभावं साधयामासुः । अतएव वात्स्यायनः प्रथमं आनुपलम्भिकमेव

## तत्खण्डनम्.

यदत्रोक्तमाकाशव्यतिभेदरूपं बाधकं परमाणोर्निरवयवत्वे, तन्नोपपद्यते, विकल्पासहत्वात्तथाहि, न तावदाकाशव्यतिभेदो नामाकाशेन सम्बन्धमात्रं परमाणोः, तस्य सावयवत्वसाधकत्वाभावात्। निरवयवस्यात्मादेसंसर्गाभ्युगतेः। नापि संयोगमात्रं तदर्थः, तथासति आकाशपदस्य निरर्थकता स्यात्। निरवयवस्यापि संयोग अनुपदमेव निर्णेष्यते। नापि परमाण्वभ्यन्तरं संयोगस्तदर्थः, तदभ्यन्तरस्येदानीमप्यसिद्धेः, अत एव तदवयवसंयोग इत्यर्थोपि प्रत्युक्तः, तस्यैवेदानीं साध्यत्वात्। परमाण्ववयवानामन्योन्यं विभागमुत्पादयत्याकाशमित्यपि न, परमाणोर्नित्यद्रव्यत्वेनावयवाभावात्। जन्यद्रव्यस्य परमवयवानां विद्यमानतया विभागो भवितुमर्हः। किञ्च परमाणोरवयवाभ्युपगमेपि आकाशं न

---

पूर्वपक्षितया जग्राह। पूर्वं 'सर्वमभावः' (४-१-३७) इत्यादिसूत्रद्वारा यं वादं सकलवस्तुनोऽपि असत्ताप्रसाध्यनिराचकार, स वाद 'असद्वाद' नाम्नापि कथ्यते। तन्मते भाव पदार्थमात्रस्यैवासत्वमिति निश्चितम्। ये हि भावपदार्थतया प्रतीयन्ते ते सर्वेपि अभावा एव। अयमेकप्रकार एकान्तवाद इति तत्र भाष्यकृद्बभाषे। प्रोक्तमते चासन्त एव पदार्था वस्तुत उपलब्धिगोचरा भवन्ति इति ज्ञायन्ते। किन्त्वेतत्प्रकरणे भाष्यकार आदौ यं आनुपलम्भिक इत्यूचे, तस्य मते उपलब्धिपदार्थोपि वस्तुतो नास्तीति प्रतीयते। अयञ्चार्थ अनुपलम्भिक इति पदादपि ज्ञायते। तथासति पूर्वोक्तमतादस्य मतस्य किञ्चिद्वैलक्षण्यमपि स्फुटीकृतम्। अस्यानुपलम्भिकस्यायं भाव, परमाणोरवयवा यदि न स्युस्तदा परमाणु कथं स्वावयव वर्तेत इति शङ्का नोदेति। तस्मात्परमाणुर्निजावयवे कथमपि न स्थातुमर्हतीत्येवं पूर्वोक 'वृत्तिप्रतिषेधात् परमाण्वभावो न प्रसाधनीय'। किन्तु परमाणोरवयवास्सान्ति इति साधने तथैव युक्त्या तस्याप्यवयवपरम्परास्साधनीया भवन्ति। तथासति परमाणवस्तदवयवाश्च स्वस्वावयवेषु कथमपि न स्थातुं पारयेयुः, इति समर्थ्य पूर्वोक्तवृत्तिप्रतिषेधप्रयुक्त एव परमाणुतदवयवानामप्यभावस्साधनीयो भवति। तथासति न कस्यापि वस्तुनस्सता, सत्येवं 'सर्वं नास्ती' त्येतदेव सिद्धं भवतीति॥

तद्विभागनिदानतामश्नुते। विभागो हि कर्मजन्यः, नाकाशजन्य इति स्फुटं गम्यते। परमाणोरभ्यन्तरं यच्छिद्रं तदेव 'व्यतिभेद' पदबोध्यमित्यपि नात्र युक्तम्, यस्य सावयवद्रव्यस्यान्तरा अवयवो नास्ति, तस्यद्रव्यस्य मध्यस्थानमेव हि छिद्रमिति वदन्ति। परमाणोस्तु निरवयवत्वेन छिद्रमेव न सम्भवति। तस्मात्पूर्ववादी आकाशव्यतिभेदं किं वा निर्ब्रूयातन्न साध्यसाधकं भवतीति॥

एवं सर्वगतत्वशब्दार्थमबुध्यमान एव पूर्वपक्षी आकाशस्यासर्वगतत्वमचूचुदत्। सर्वगतत्वं हि समस्तमूर्तद्रव्यैस्सह संयोग एव। मूर्तद्रव्यपरमाणुभिरपि संयोगो गगनस्याव्याहत एव। प्रमाणमेव निरवयवस्यापि संयोगं गमयति। पर*माणोरभ्यन्तरे गगनसयोगो नास्तीति न गगनस्यासर्वगतत्वम्। परमाणोरभ्यन्तरं खलु नास्तीत्यसकृदुक्तम्। यद्व्यलीकं तेन सह कथं संयोगो जायते? तस्माद्येषां मूर्तद्रव्याणां सत्ता वर्तते तान्येवात्र 'सर्व' शब्देन धर्तव्यानि। सत्येवं सर्वगतत्वस्य का हानिः?†

---

* आत्मतत्वविवेके नव्यनैय्यायिकरघुनाथशिरोमणिरुदयनतात्पर्यव्याख्यायामेवमेवाभिप्रैति 'आकाशेन परमाणोर्व्यतिभेदः अभ्यन्तरे संयोगः, अभ्यन्तराभावादेवासम्भवी सर्वगतत्वन्तु विभूनां सर्वमूर्तद्रव्यसंयोगितामात्रम्। निरवयवस्याणो' परमाणुशब्दार्थत्वात्परमाणुस्सावयव.' इति प्रतिज्ञापदयोर्व्याघात इत्यर्थः। (आत्मतत्त्वविवेकदीधितिः).

† एतत्सर्वं 'शब्द-संयोग-विभावाच्च सर्वगतं' इति गोतमसूत्रभाष्यवार्त्तिकादौ निगदितम्। परन्त्वत्र भाष्यकारवार्त्तिककारयोस्सूत्रपाठभेदो दृश्यते। वार्त्तिककारमते 'सर्वसंयोगशब्दविभावाच्च सर्वगतमिति पाठः। यतस्समस्तमूर्तद्रव्यैस्सह संयोग एव 'सर्वसंयोग' इति स व्याचख्यौ। भाष्यकारमते तु तद्व्याख्यातदिशा 'शब्दसंयोगविभावाच्चे' त्यादिरेव सूत्रपाठ इति ज्ञायते। वाचस्पतिमिश्रीयन्यायसूचीनिबन्धे एवं न्यायसूत्रोद्धारे भाष्यकृत्पाठ एवादृतः। विश्वनाथपञ्चाननोऽपि वृत्तिग्रन्थे एवमेव पपाठ। राधामोहनगोस्वाम्यपि एतमेव पाठमनुमोदते। परन्त्वर्थवैल-

एवं 'परमाणुस्सावयव' इत्येवं प्रतिज्ञावाक्ये 'परमाणुः'. एवं 'सावयवः' इति पदद्वयस्य व्याघातः । यस्तु परमाणुं नानुमनुते, स तं पक्षतया ग्रहीतुमेव न शक्नोति । यदि पक्षग्रहणानुरोधेन बाध्यस्तं स्वीकुर्यात्, तदा 'सावयवः' इति न वदेत् । कुतः? निरवयवाणुरेव हि परमाणुः, निरवयवत्वमेव परमत्वम् । तस्मात्पूर्ववादी न तथा प्रतिज्ञातुमेव पारयेत् इति ॥

## तदुपर्याक्षेपः.

अत्रैका शङ्कावतरति । अधिजलं काष्ठादीनां निक्षेपे नौकादीनां वा आनयने तज्जलस्य व्यूहनं तावत्सर्वाध्यक्षसिद्धम् । तद्वद्गगनस्य सर्वगतत्वे सक्रियप्रतिघातिद्रव्यसंयोगेनाकाशस्यापि * व्यूहनं भवितव्यम् । तत्कुतो न भवति? एवमाकाशं भित्त्यादिकमिव सर्वत्र सञ्चारिष्णूनां मानवानां गमनक्रियायाः कारणं वेगं प्रतिरुध्य गतिं कुतो न प्रतिबध्नाति?

## तत्खण्डनम्.

नैतद्युक्तम् । भित्त्यादिकं काष्ठादिकं वा स्पर्शवत्वात् विष्टम्भं व्यूहनं वा कर्तुं पारयेत् । आकाशादिकं तु अतिसूक्ष्मत्वान्न प्रतिघाति

---

क्षण्य विद्यते । ग्रन्थविस्तरभिया नेह तत्प्रतन्यते । आकाशात्मनोस्सर्वगतत्वं सिषाधयिषुर्महर्षि कणादोऽपि 'विभवान्महाकाशस्तथाचात्मा' (७-१-२२) इत्येवं बभाण । तत्रोपस्कारकारश्शङ्करमिश्रो विभवः समस्तमूर्तद्रव्यसंयोग' इति व्याचकार । गोतमसूत्रे विभवशब्दात्पूर्वं संयोगशब्दस्य सत्वान्न तथोपवर्णितुं शक्यते । अत एव वृत्तिकारो व्याचख्यौ,—'विभवस्सार्वत्रिकत्व' मित्यलमाकरप्रदर्शनेन.

* व्यूहनं नाम पूर्वोत्पन्नं द्रव्यस्यारम्भकसंयोगं विनाश्य द्रव्यान्तरारम्भकसंयोगोत्पादनमेव । यथा जलमध्ये काष्ठादीना निक्षेपे तज्जलारम्भकावयवसंयोगो नश्यति, तदनु वदवयवानामेवान्योन्यं संयोगो जायते । तस्मात्तत्र तज्जातीयान्यजलमुत्पद्यते । तत्र काष्ठादिभिरन्यजलारम्भकावयवसंयोगस्य यदुत्पादनं तदेव व्यूहनम्.

भवति । निरवयवत्वाच्च काष्ठादिनाकाशे व्यूहनं न भवति । द्रव्यान्तर-जनकावयवसंयोगोत्पादनरूपव्यूहनं अवयवरहितद्रव्ये न सम्भवति । तस्मादव्यूह आकाशस्य स्वाभाविको धर्मः । एवं आकाशं उक्तदिशा प्रतिघातिद्रव्यस्य विष्टम्भं न करोति । तस्मादविष्टम्भोप्याकाशस्य स्वाभाविको धर्मः । अविष्टम्भो नाम द्रव्यस्य क्रियाकारणवेगादिगुण-स्याप्रतिबन्धः ॥

भवतु वा तावदेवम्, नित्यत्वन्तु परमाणूनां न विचारार्हम् । यतो जगति विद्यमानास्सर्वेप्यर्था कार्यतया उपलभ्यन्ते । परमाणोर्विद्य-मानतायां अनित्यतैव ज्यायसी । तथा च 'परमाणुरनित्यः कार्यत्वा-द्घटवदि' त्यनुमानेन परमाणोरनित्यत्वमेव सिद्धं भवेत् । सत्येवं तस्य सावयवतापीति चेत् ॥

नैतदुपपद्यते, परमाणोरकार्यत्वात् । तथाहि, यदि परमाणुः कार्यं भवेत्तस्यावयवोऽपि स्वीकरणीयः । तस्योपादानकारणता समवायिकारणता वास्थेया, तथा सति समवायिकारणं तदणुतरं परमाण्वपेक्षयापीत्युररी-करणीयम् । किं कारणम्? सर्वत्रापि कार्यरूपं द्रव्यं कारणरूपं च द्रव्यं विभिन्नपरिमाणं दृष्टम् । कार्यद्रव्यापेक्षया तत्कारणद्रव्यं क्षुद्रपरि-माणं भवति । तस्मात्परमाणुरूपकार्यस्यावयवः क्षुद्र एव भवेत् । तथा-सति तस्यावयवः तस्याप्यवयव इत्येवमनन्तावयवपरम्परामुररीकृत्य, सूक्ष्मपरिमाणस्य कुत्रापि विश्रामो नास्ति, सर्वापेक्षया सूक्ष्मं द्रव्यं किमपि नास्तीत्येवाङ्गीकरणीयम् । सत्येवं अनवस्थादोषः सुमेरुसर्षप-योस्तुल्यपरिमाणप्रसङ्गरूपो दोषश्चानिवार्यो भवति । तथा च परमाणु-रिति व्यवहार एव विलीयेत । यत्कारणं यदणूनां मध्ये सर्वापेक्षया सूक्ष्मं तदेव परमाणुपदभाग्भवति । न चेत् 'परम' रूपविशेषणस्य सार्थक-तयैव न भवेत्, यदि निखिलाणूनामप्यवयवास्सन्ति तर्हि ते सर्वेपि

स्वस्वकार्यापेक्षयाणुतरा एव भवेयुः । सर्वापेक्षयाणुः यदपेक्षया अणुतरं नास्ति, तादृशं किमपि नैव स्थातुमर्हति । सति चैवं पूर्ववादी किं वा परमाण्विति व्यवहरेत्? यद्धि पूर्वपक्षी पक्षतया कक्षीकुर्यात्तत्सर्वमपि तन्मतरीत्या सावयवं, सत्येवं सर्वापेक्षया अणु तत्कथं भवेत्? सर्वापेक्षया अणोरभावे कथं वा 'परमाणु' शब्दं व्यवहरेम? गौणोऽयं व्यवहार इत्यपि न भवति । कुत्रापि मुख्यप्रयोगासम्भवस्योक्तत्वात् । मुख्यस्य कुहचित्सत्वे किल गौणः । तस्माकार्यत्वहेतुरसिद्ध इति नानित्यता परमाणूनामिति ॥

विनाशित्वमपि न शक्यशङ्क्यम् । कारणविभागाद्धि विनाशिता लोके सिद्धा । नाकाशव्यतिभेदात् , यथा हि घटादीनामवयवविभागादेव विनाशित्वरूपमनित्यत्वं सिध्यति । इदमत्राकूतम् । यथा हि विनष्टलोष्ठानामवयवरूपोपादानकारणस्य विभागाद्विनाशः स्वीक्रियते । न पुनः लोष्टमध्ये आकाशसमावेश आस्ते इति तस्य विनाशः, एवं परमाणावाकाशसमावेशो वर्तते इत्येतावता तस्य विनाश इति वक्तुं न शक्यते । परमाणुना साकमाकाशस्य संयोगमात्रं यदि आकाशव्यतिभेदः, तदा स परमाणुष्ववश्यं वर्तत एव । किन्तु तावता परमाणूनां विनाशिता न सिध्यति । सत्येवं परमाणूनामवयवरूपकारणाविभागो न सम्भवत्येवेति । एवञ्चाकाशव्यतिभेदः परमाणूनां सावयवतासाधको न भवतीति न निरवयवत्वबाधक इति सिद्धम् ॥

(अनुवर्तते)

# दयातत्त्वसमीक्षा

(अथवा अन्तिमाभियोगो धर्मराजसभायाम्.)

---

## (तत्र अन्तिमाभियोगपक्षीया अभ्यर्थना धर्मराज-सविधे चित्रगुप्तनिवेदिता)

श्रीशिवः शरणम् । किमुक्तं भवति? यावदुक्त भवति वेदाः प्रमाणमिति तावदुक्तं भवति शिवश्शरणमिति । शिवो=वेदः । शरणं=प्रमाणं रक्षकं सत इति । कं पुनरर्थममी प्रमिमते? एकस्मिन्नेव पत्यावामरणं वृत्तिस्त्रियाः, इत्येवञ्जातीयकोऽर्थः । यद्येष जीवेत् उताहो म्रियेतेति । तत्किमस्त्येवञ्जातीयकोऽपि वेदः? । काममस्ति भोः शिष्टाचारकल्पितः । तदेषाभ्युक्ता—

'एकोऽनेका विन्देत् नैका विन्देत् कदापि पतिमन्यम् ।
इति किल शिष्टाचारः तेनाक्षिप्त· सदास्ति वेदोऽपि' ॥ इति ॥

तस्योपव्याख्यानम् । धर्मराजसभायां चित्रगुप्तो निवेदयति । महाराज! असहायस्य आनन्दनस्य साहाय्यमादधाना वङ्गीया शिष्टसभा अन्तिममभियोगं लिखन्ती विज्ञापयति ॥

धर्मराज·—किमिव?

चित्रगुप्त·—(अन्तिमाभियोगपत्रं वाचयति)

'सूच्यग्रावलम्बिपादाङ्गुष्ठमात्रावस्थितिषु व्यत्यासलवमात्रेण नियमितपतनस्य पिपतिषोरग्निपर्वतस्य अधोवसतिषु अखिलप्राणिधर्माधर्मनिर्णेतृषु अपरिमितकृत्वः साष्टाङ्गप्रणतिपातं वङ्गीया शिष्टब्राह्मणसभा

विज्ञापयति—'वैधवेयो दुरोदरपुत्रः मित्रविन्दो नाम नेष्टे दुरोदधनस्येति ज्येष्ठ एव दुरोदरात्मजः पाणिगृहीतीतनयः सर्वस्य दुरोदरस्वस्येश्वरः कृतः सभया, यदनु केशाकेशि मुष्टीमुष्टि बाहूबाहवि च युद्धमेनयोर्मृतपि तृकयोरशाम्यत् ॥

अथ मित्रविन्दो ग्रामाध्यक्षे न्यवेदयत्— 'आनन्दनवत् अहमपि तत एव पितुर्जात इति समभागहमिति' । अथ ग्रामाध्यक्षेण कारणं पृष्टा सभाऽकथयत् 'स्वाभिप्रायकृतं कर्म यत्किञ्चिन्मानवार्जितम्। क्रीडाकर्मेव बालानां तत्सर्वं निष्प्रयोजनम्' इत्याङ्गिरोवचनस्याधीमः । अधीमस्तराञ्च 'तस्माच्छास्त्र प्रमाणन्ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि' इति भगवतो गीतायाः । अथैभिरस्माभिः प्रमाणमीदृग्विषये गवेषमाणैः बहवः शिष्टाः आसेतुहिमाचलं पृष्टाः नेष्टे एव वैधवेय इति अनादिकालप्रवृत्तमाचारं प्रमाणमकुर्वन्' इति ॥ अथेदमेव प्रमाणमाश्रित्य ग्रामाध्यक्षोऽस्मन्मतं समनन्यत । अथ तु मित्रविन्दो नगराध्यक्षे पुनरभियोगमकरोत् । यदन्वसौ मित्रविन्दोपि समभाकृतः । तदिदं शिष्टाचारविरुद्धम् । आचारेण हि मूलभूतो वेदः उन्नीयते । अतश्च वैदिकएवायं धर्म इति न कोप्येनमतिवर्तितुमीष्टे इति ॥

## उक्तार्थे ऐतिहासिकी पौराणी च सम्मतिः.

समस्ति चात्रैतिहासिकी पौराणी च सम्मतिः आचारे । वासिष्ठरामायणे १६ सर्गे लीलाभिधाना नारी वैधव्यं परिहरन्ती बह्वयततेति—

'अत्रानेन सहोत्तुङ्गस्तनी कुसुमसद्मसु ।
कथं स्वैरं चिरं कान्ता रमे युगशतान्यहम्' ॥

इत्यादिनालोच्य—

'मरणं भर्तुरग्रे मे यदि दैवात् भविष्यति ।
तत्सर्वदुःखनिर्मुक्ता संस्थास्ये सुखमात्मनि ॥ २६ ॥
अथ वर्षसहस्रेण भर्तादौ चेन्मरिष्यति ।
तत्करिष्ये यथातेन जीवोगेहान्न यास्यति ' ॥ २७ ॥

इत्यादिना, कर्तव्यञ्च निरणैषीत्। इति च प्रपञ्चितः॥ तदन्वतिश्रद्धयाऽऽराधिता सरस्वती देवी यथाभिलाषं वरेणान्वग्राहीत् । नैतावतैव परिसमाप्तिः अपि तर्ह्यनेकेष्वपि जन्मसु अभिन्नपतिकैवाभूदेषेत्यपि प्रपञ्चित' उपाख्यानं नामैतिहासिकं पौराणिकं वा तत्तत्प्रामाणिकानुष्ठानमवगमयत् अनुष्ठेये सर्वं लोकं प्रवर्तयच्च धर्मे वेदमुपबृंहयत् प्रमाणमिति मीमांसकमर्यादा । अतश्चायमत्राभिसन्धिः—'सर्वथा स्त्रिया पतिवियोगः परिहरणीयः । शक्यसम्पादनश्चैष उपासनया दीर्घकालनैरन्तर्यसत्करवत्या, इति एकपतित्वमेव धर्म, इति च' । यदि पुनर्नगराध्यक्षमतं प्रमाण स्यात्, इयान् यत्न एकपतित्वबोधक ऐतिहासिको व्यर्थ आपद्येत । एतेन चूडालादिपतिव्रतोपाख्यानानि परश्शतान्यैतिहासिकानि व्याख्यातानि । तत्तादृशैर्यत्नैर्वैधव्यं परिहरणीयमित्येवमर्थत्वात्तेषाम् ॥

एवं मार्कण्डेयपुराणे २९ अध्याये मदालसोपाख्याने शत्रुजितः सूनुः कुवलयाश्वः पितृनियोगात् दानवोपद्रुतान् तपस्विजनान् वने रक्षन् वज्रकेतुसुतेन पातालकेतुना सूकरवेषेण दानवेनायुध्यत । अथ हन्यमानेन दानवेन पातालं नीतः । तेनैव दानवेन प्रसह्यानीतां विश्वावसुगन्धर्वपुत्रीं परिणिनीषितां, एतद्दर्शनेनैतस्मिन् आहितोत्कण्ठां प्रत्याचष्ट । अथास्याः सखी कुण्डलाख्याऽकथयत् दानवकृतमागामित्रयोदशीदिवसे कर्तव्यविवाहस्य निर्णयं जानाना मे सखी मरणा-

योद्यता । तदा सुरभिर्देवधेनुरागत्याकथयत् 'मा भैषीर्वत्से पातालकेतोर्हन्ता मनुष्यः त्वां परिणेष्यति, नैव त्वेष दानवः' इति । अथाश्वासितेयं मे प्रियसखी त्वय्युद्वेलमुत्कण्ठितेति अकस्मात्तेनोढाप्यामरणं शोकसागर एव स्यादिति' ॥

अथ पारस्परिकविज्ञानानुपदं दैवप्रेरितपुरोहिताचरितविवाहः सुखमास्त कुवलयाश्वः । यथापुरमेव नियोगं पितुरनुतिष्ठन् तद्दानवानुजेन तालकेतुना तपस्विलिङ्गेन यागदक्षिणार्थं कण्ठाभरणं नाथितोऽदात् विशिष्टब्राह्मणबुध्या । स दानवस्तदादाय ब्राह्मणलिङ्गी तत्पित्रे तत्समर्प्य मृतं सुतमकथयत् । तच्छ्रवणानुपदमेव मदालसा साध्वी अम्रियत । 'मदालसा तु तत् दृष्ट्वा तदीयं कण्ठभूषणम् । तत्याज सुप्रियान् प्राणान् श्रुत्वा विनिहतं पतिम्' इति चैवमादि प्रपञ्चयते । यदि नगराध्यक्षमतं प्रमाणं स्यात् तदेयं मृतिर्व्यर्था यथेष्टपुरुषान्तरं हि सुलभम् इति । अनुमृतिं परिहरन्तः कवयश्च समाचक्षते 'न खल्वेषा मृतिरुपरतस्य गुणमावहति, न वैषास्य प्रत्युज्जीवनोपायः । नतराञ्चास्य धर्ममुपचिनोति । नतमाञ्च शुभानस्य लोकानार्जयति, नो एव च निरये पततोस्य प्रतिक्रियामारचयति । नैव चास्य दर्शनाय प्रभवति' । इति चैवमादि । एतेनैवञ्जातीयकानि पातिव्रत्यपराणि पौराणिकान्युपाख्यानानि व्याख्यातानि ॥

किञ्चान्यत् । सख्येषा कुण्डला स्ववृत्तमेवमाचष्टे—'अहन्त्वस्याः सखी नाम्ना कुण्डलेति मनस्विनी । सुता विन्ध्यवतः पत्नी वीरपुष्करमालिनः । हते भर्तरि शुम्भेन तीर्थात् तीर्थमनुव्रता । चरामि दिव्यया गत्या परलोकार्थमुद्यता' इत्यादिना । अतोपि पत्यन्तरपरिग्रहः सुतरां प्रत्याख्यातो वेदितव्यः । अत एव देवीभागवते कलिदोषवर्णनप्रघट्टके योन्यानियमरूपविधवाविवाहादयोपि दोषतया परिगणिताः

'अन्नानां नियमो नास्ति योनीनां च विशेषतः । आश्रमाणां जनानाञ्च सर्वे म्लेच्छाः कलौ युगे' इत्यादिना । तदत्र विषये धर्मराजः प्रमाणम् । पुनरपि साष्टाङ्गप्रणतय' इति । एवं वङ्गीया शिष्टब्राह्मणसभा । इनि ॥ (इत्यन्तिमाभियोगपक्षीयाभ्यर्थना).

अथ प्रतिपक्षिण. तीरितानुशिष्टजयपत्रनिवेदनम्.

अथ धर्मराजः चित्रगुप्तमन्वयुङ्क्त । चित्रगुप्त—अप्यस्ति पक्षान्तरजयकरः प्रमाणप्रसरः ' । चित्रगुप्तः तदनु सभानीतं तीरितानुऽशिष्टजयपत्र वाचयति -

११५ अभियोगे नगराध्यक्षसभाया निर्णयः ' वङ्गीया शिष्टब्राह्मणसभा आनन्दनस्योपकुर्वाणा आचारमेव केवलं प्रमाणयति । आचरणं पुनस्तथ्यमपि स्यात् वितथमपि स्यात् । नातस्तदेकपदे धर्मायैवेति निर्णयायालम् । मित्रविन्दस्य पुनर्वैधवेयस्य मातुल, मातामह, मातृभगिनीपुत्राद्यः व्यवहाराजीविन. रञ्जितसिंह, प्रभुचन्द्र, भीमतोष, साढकराद्याभिधानाः वेदस्मृतिपुराणानि प्रमाणयन्ति । तथाहि—यजुर्वेदे ६-१-१२ मन्त्रः—

I ' उदीर्ष्व नार्यभिजीवलोकं गतासुमेतमुपशेष एहि ।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभिसंबभूव ' ॥ इति ॥

अस्यार्थः—' हे नारि उत्तिष्ठ प्रपञ्चे तव जीवनं निष्प्रयोजनमिति मा मंस्थाः । येन सह त्वमजीवः; सोऽम्रियत । विधवाविवाहं सम्मन्यमानस्य विधुरस्य (मृतपत्नीकस्य) त्वं जाया भवेति ' ॥

ऋग्वेदे ८-१८ २० मन्त्रः—

II कुह स्विद्दोषा कुहस्तोरश्विना
कुहाभिषि त्वं करतः कुहोषतु ।

को वां शयुत्रा विधवेव देवरं
मर्यं न योषा कृणुते सदस्थ आ ॥ इति ॥

अस्यार्थ.—'हे अश्विनीकुमार त्वं रात्रौ कुत्र शयीथाः ? दिवा क्व वससि ? । तव वासस्थानं कुत्र वर्तते ? । विधवा आत्मनो द्वितीयपतिं अथवा भार्या स्वपतिं शयनार्थं शय्यागृहे यथा निमन्त्रयते, तथा त्वां यागानुष्ठानकाले यज्ञकुण्डसमीपे कः निमन्त्रयते ?' ॥ इति ॥

अथर्ववेदे २-३-२७ मन्त्रः—

III या पूर्वं पतिं वित्त्वा अथान्यं विन्दते पतिम् ।
पञ्चौदनञ्च तावजं ददातो न वियोषित. ॥ इति ॥

अस्यार्थः—'विवाहपतेः मरणानन्तरं अन्यं वरयित्वा अजपञ्चौदनं कुर्याच्चेत् तौ दम्पती न वियोगं भजेतामिति' ॥

अथर्ववेदे २-३-२८ मन्त्रः—

IV समानलोको भवति पुनर्भुवा परः पतिः ।

अस्यार्थः—'द्वितीयपतेः पुनर्विवाहितनार्याश्च उपरि समानो लोको लब्धो भवती' ति ॥

अथर्ववेदे—२—३०७ मन्त्रः—

V सोमस्य जाया प्रथमं गन्धर्वस्तेऽपरः पतिः ।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजा. ॥
सोमोऽददत् गन्धर्वाय गन्धर्वोऽददद्ग्नये ।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ इति ॥

अस्यार्थः—'त्वं प्रथमं चन्द्रस्य भार्या अभवः । अनन्तरं गन्धर्वेण सह विवाहं अकरोः । तदनन्तरमग्निमवृणोः । अन्तेच मानवम् ॥ इत्युक्ते चन्द्रो गन्धर्वाय गन्धर्वोऽग्नये अग्निः प्रजया रय्या च सार्धं मह्यं एवमदुः' ॥ इति ॥

ऋग्वेदे १०—४०-२ मन्त्रः—

VI को वां शयुत्रा विधवेवदेवरं मर्यं नां योषा कृणुते सदस्थ आ ।

अस्यार्थः—'विधवा नारी शय्यागृहे स्वपतेः सहोदरस्य वधूः वरस्य मनः आकर्षतीव त्वां कः गृहे आनयेत्' ॥ इति ॥

अथर्ववेदे ९—५-२८ मन्त्रः—

VII समानलोको भवति पुनर्भुवा परः पतिः अथाज पञ्चोदनं दक्षिणा ज्योतिषं ददाति ॥

अस्यार्थः—'पुनर्विवाहितनार्याः द्वितीयपतेश्च एक एव लोकः । अमू पुरोहिताय योग्यां दक्षिण दत्वा अजपञ्चोदनदानं कुर्याताम्' । इति ॥ इमानि वेदवाक्यानि विधवाविवाहं गमयन्ति । एव मृषिवचनानि ॥

पराशरमाधवीयधृतमनुवचनम्—

I नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधायते ॥ इति ॥

अस्यार्थः—'पतिवृत्तान्तस्याज्ञाने, पतिमरणे, पतिवैराग्ये, पतिक्लैब्ये, पतिपातित्ये, चेति पञ्चविधापत्काले नारी द्वितीयविवाहं कुर्यात्' ॥

ब्रह्मपुराणे—

II 'यदि सा बालविधवा बलात् त्यक्ताऽथवा क्वचित् ।
तदा भूयस्तु संस्कार्या गृहित्वा येन केन चित्' ॥ इति ॥

अस्यार्थः—'पतिमरणकाले नारी बाला चेत् । अथवा बलात्करात् पत्या त्यक्ता चेत्, तामन्यो विध्युक्तरीत्या विवहेत्' ॥ इति ॥

III प्रजापतिरपि स्वग्रन्थे पूर्वोक्तश्लोकं लिखति स्म ।

IV अग्निपुराणे—'नष्टे मृते . . . . विधीयते ।
मृते तु देवरे देया तस्याभावे यथेच्छया' ॥ इति ॥

'श्लोकार्थः पूर्ववत्। पत्युः सहोदराय, तदभावे अन्यस्मै मृतपतिका देयेत्यन्तिमाधर्भिः ॥

V बोधायनशास्त्रम्—

'निसृष्टो वा हतो वापि यस्या भार्ता म्रियेत वा।
'सा चेदक्षतयोनिः स्यात् गतप्रत्यागतापि वा
पौनर्भवेन विधिना पुनः संस्कारमर्हति' ॥ इति ॥

अस्यार्थः—'पत्युर्वृत्तान्ताज्ञाने, हतत्वे, मृतत्वे, वा जाया यद्यक्षतयोनिः स्यात्, एकाकिनी वा स्यात् पौनर्भवविधिसंस्कारं प्राप्तुं सा योग्या स्यात्' ॥ इति ॥

VI 'अक्षता भूय· संस्कृता पुनर्भूरिति' विष्णुः ॥

अस्यार्थः—'ऊढा ब्रह्मचारिणी स्या चेत्, पुनः संस्कार्या स्यात्, तदा सा पुनर्भूरिति व्यवह्रियते' ॥ इति ॥

वसिष्ठः—

VII 'पाणिग्रहे मृते बाला केवलं मन्त्रसंस्कृता।
सा चेदक्षतयोनिः स्यात् पुनः संस्कारमर्हति' ॥ इति ॥

अस्यार्थः—'ऊढा ब्रह्मचारिणी यदा, तदा पतिः म्रियेत चेत् सा पुनः संस्कार्या' ॥ इति ॥

वसिष्ठः—'या च क्लीबं पतितमुन्मत्तं वा पतिमुत्सृज्य। यान्यं विन्दते
VIII मृते वा सा पुनर्भूर्भवति' ॥ इति ॥

अस्यार्थः—'क्लैब्यपातित्योन्मादमरणनिमित्तकं पतित्यागेनान्यं पतिं विन्देत चेत् सा पुनर्भूरित्याहूयते' ॥ इति ॥

कात्यायनः—

IX 'स तु यद्यन्यजातीयः पतितः क्लीब एव वा।
विक्रमस्थः सगोत्रो वा दासो दीर्घामयोपि वा।

ऊढापि देया सान्यस्मै सहाभरणभूषणा' ॥ इति ॥

अस्यार्थः—'विवाहानन्तरं पत्युरन्यजातित्वे, पातित्ये, क्लैब्ये, दुष्टत्वे, समानगोत्रत्वे, दासत्वे, महारोगित्वे, वा ज्ञाते सवस्त्राभरणां अन्यस्मै योग्याय नारीं दद्यात्' ॥ इति ॥

पश्यत—ऊढायाः अन्यस्मै दाने सनिमित्तमत्र प्रमाणमस्ति। नेयदेव केवलं। सन्ति चोदाहरणान्यनेकान्यत्रानुसन्धेयानि। तथाहि—कात्यायन आह—

X 'अर्जुनस्यात्मजः श्रीमानिरावान्नाम वीर्यवान्। सुतायां नागराजस्य जातः पार्थेन धीमता। ऐरावतेन सा दत्ता ह्यनपत्या महात्मना। पत्यौ हते सुपर्णेन कृपणा दीनचेतना' ॥ इति ॥

अस्यार्थः—'नागराजपुत्री ऋद्धिमतोऽर्जुनात् बलाढ्यं सुरूपञ्च सुतमलभत। तस्याः पत्यौ सुपर्णेन हते नागराजः ऐरावतः स्वपुत्रीं तां दीनां दुःखितामनपत्याञ्चार्जुनायादात्' इति ॥

XI किञ्चाह-कात्यायनः—

'वरयित्वा नु यः कश्चित् प्रणश्येत् पुरुषो यदा। ऋत्वागमां स्त्रीनतीत्य कन्यान्यं वरयेद्वरम्' ॥ इति ॥ 'कृतविवाहवरमरणे ऋतुत्रयानन्तरं तामन्यः उद्वहेत्' इति तदर्थः ॥

XII वसिष्ठः—'अद्भिर्वाचा च दत्तायां म्रियेताथो वरो यदि। न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा। यावच्चेदाहृता कन्या मन्त्रैर्यदि न संस्कृता। अन्यस्मै विधिवद्देया यथा कन्या तथैव सा' ॥ इति ॥

अस्यार्थः—'वाचा जलधारया च दाने वृत्ते मन्त्रोच्चारणात् पूर्वमेव वरमरणे पितृतन्त्रैव कन्या। वाग्दानमात्रे कृते मन्त्रतः होमे

अकृते पितान्यस्मै तां दद्यात् । वाग्दानमात्रेण न तस्याः ब्रह्मचर्यहानिः ' ॥ इति ॥

XIII नारदसंहिता—' नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते । अष्टौ वर्षाण्युदीक्षेत कुमारी प्रोषितं पतिम् । अप्रसूता तु चत्वारि परतोऽन्यं समाश्रयेत् ॥ क्षत्रिया षट् समास्तिष्ठेत् अप्रसूता समात्रयम् । वैश्या प्रसूता चत्वारि द्वौ वर्षौ त्वितरा वसेत् । न शूद्रायाः स्मृतः कालः एष प्रोषितयोषिताम् । जीवति श्रूयमाणे तु स्यादेष द्विगुणोऽवधिः । अप्रवृत्तौ तु भूतानां दृष्टिरेष प्रजापतेः । अतोऽन्यगमने स्त्रीणामेष दोषो न विद्यते ' ॥ इति ॥

अस्यार्थः—' प्रथमश्लोक उक्तार्थः । पतिवृत्तान्ताज्ञाने ब्राह्मणी वर्षाष्टकं प्रतीक्षेत । क्षत्रिया वर्षषट्कं, वैश्या वर्षचतुष्कं । एता एवापुत्राः तत्तत्कालार्धं प्रतीक्षेरन् । ततः पुनर्विवाहं लभेरन् । शूद्रायाः न कोऽपि नियमः । अयञ्च सर्वमनुष्यप्रभोः प्रजापतेरभिप्रायः । अत एवमनुष्ठाने न कोपि दोषः ' ॥ इति ॥

पूर्वोक्तप्रमाणजाते पुरतः स्थापिते विचारिते च सति विधवाविवाहः मनुप्रभृतिधर्मग्रन्थकर्तॄणां अभिप्रायविरुद्धो न भवेत् । इदम्मतं सर्वमहर्षिसम्मतमेव । इयांस्तु विशेषः—' पराशरभिन्नाः पुनरूढां पुनर्भुवं, ततो जातसन्ततिं च पौनर्भवां व्यवहरन्ति न पराशरः । स परमाद्यविवाहजातसाम्यं सर्वात्मना पौनर्भवस्याङ्गीकुरुते ॥ इति ॥

अवश्यमवधेयञ्चेदमत्र सर्वशास्त्रतत्त्वं दयैव परमो धर्म इति । न खलु क्वचिदपि विषममतिर्भगवान् परमेश्वरः । स स्त्रीणामपि पुरुषाणा-

मिव पुनर्विवाहं सम्मन्यत इत्येव वक्तुं युक्तम्। अत एव कैस्तव-माहम्मदादयः एवमेवानुतिष्ठन्त सुखिनोऽपरिमितसङ्ख्याश्च साङ्घिक-मधिकारं बहुशो लभन्ते, मतञ्चैषां प्रतायते। तस्मात् दयावद्भिः सर्वैरपि भारतीया बालविधवा अनुकम्पनीयाः। अपरिमितसुखभाजनं मानुष्यकं जन्म बालविधवानां क्रूरा मूढा निरर्थीकुर्वन्ति, अब-लात्वात्तासाम् तदिदमासेतुहिमाचलं दर्शन्दर्शं नितान्तं खिद्यतां नो मर्मोद्भिद्य दया जाता। तामाश्रित्य कोमलवल्याः मे सोदर्याः वत्सां नवप्रसूतां चन्दिरप्रभां दुरोदराय विधुरायादाम्। अधुनाप्येषा तृतीयाय पतये कुमुदलोचनाय दित्सिता। सर्वथा सर्वदा पतिराहित्यं यावच्छक्ति परिहरणीयम्। तदेतत् प्रभुवर्यो नगराध्यक्षः सम्यगालोच्य सर्वासां भारतयिबालविधवानां हितमाचरन् दयालुर्भूत्वा, श्रेयसा भूयसा योज्यतां परमेश्वरेणेति॥

रञ्जितसिंहः चन्द्रिरप्रभायाः अभियोक्त्र्याः व्यवहाराजीवी अभिप्रैति। एवमेव प्रतापसेनप्रभुचन्द्रभीमतोषसाढेकराः अपि अभिप्रयन्ति। अतियुक्तिमिदमिति चन्द्रिरप्रभापुत्रः मित्रविन्दः समं भागमर्हतीति॥

(हस्ताङ्कनम्) नगराध्यक्ष बोधसिन्धुविद्यासागरः। इति॥

कलिवर्षे ४००० कार्तिकवदि ४। इति वाचयित्वा पत्रमर्पयति चित्रगुप्तः॥

धर्मराजः—चित्रगुप्त किमत्र प्रतिपत्तव्यम्?॥

चित्रगुप्तः—यत् यत् महाराजाय रोचते॥

धर्मराजः—त्वया यन्निर्णीयते तन्मे रोचते॥

चित्रगुप्तः—(आत्मगतम्) आः कष्टतरं महाराजेषु भारवाहित्व नाम, कथमत्र धर्मे साक्षात्तिष्ठति प्रचण्डभास्कररूपे खद्योतकल्पस्य मे धर्मप्रकाशः प्रथेत? अथवा तमेवानुध्यायन् ताद्रूप्यमाश्रित्य

विज्ञापयामीति मुहूर्तं क्षणमिव ध्यात्वा धर्मात्मना (प्रकाशं) निवेदयति—

'महते धर्माय नमः कृष्णाय नमः सदव तद्गोप्त्रे ।
भूदेवानपि नत्वा सनातनं धर्ममाख्यामि' ॥

महाराजः—कालधर्मं गतः सत्यवानानायि महाराजेन, पतिव्रता सावित्री तमन्वसार्षीत् पातिव्रत्यात्, महाराजकृतप्रश्नोत्तरैर्महाराजं मोदयन्ती धर्मतत्त्वबोधेन महाराजेनान्वगृह्यत । तत्रैवंविधस्य धर्मतत्त्वस्याध्येमि ॥

पतिरेक एव साध्व्याः श्रुतिभिः स्मृतिभिः स्फुटेन निरणायि ।
उपबृंहितश्च भवता विपर्ययेऽनेकदोषोक्त्या ॥

तथाहि—यजुस्संहितायां षष्ठ काण्डे 'यदेकस्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते, यन्नैकां रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते' इति स्पष्टमेकस्याः द्वितीयपतिसम्बन्धो निषिद्धः उपबृंहितश्चायं निषेधो ब्रह्मपुराणे—

'अन्यपूर्वा यस्य गेहे भार्या स्यात्तस्य नित्यशः ।
आशौचं सर्वकार्येषु देहे भवति सर्वदा ॥
दानं प्रतिग्रहः स्नानं सर्वं तस्य भवेद्वृथा' इति ।

देवीभागवते च—

'पतिव्रता चैकपतौ द्वितीये कुलटा स्मृता ।
तृतीये धर्षिणी प्रोक्ता चतुर्थे पुंश्चलीत्यपि ॥
वेश्या च पञ्चमे षष्ठे पुङ्गी च सप्तमेऽष्टमे ।
ततः परं महावेश्या साऽस्पृश्या सर्वजातिषु ॥
यो द्विजः कुलटां गच्छेत् धर्षिणी पुंश्चलीमपि ।
पुङ्गीं वेश्यां महावेश्यां यत्स्योदे याति निश्चितम् ॥

शताब्द कुलटागामी धृष्टागामी चतुर्गुणम् ।
षड्गुणं पुंश्चलीगामी वेश्यागामी गुणाष्टकम् ॥
पुङ्गीगामी दशगुणं वसेत्तत्र न संशयः ।
महावेश्याकामुकश्च ततो दशगुणं वसेत् ॥
तत्रैव यातनां भुङ्क्ते यमदूतेन ताडितः ।
तित्तिरिः कुलटागामी धृष्टागामी च वायसः ॥
कोकिलः पुंश्चलीगामी वेश्यागामी वृक. स्मृतः ।
पुङ्गीगामी सूकरश्च सप्तजन्मनि भारते ॥
महावेश्याप्रगामी च जायते शाल्मलीतरुः' ॥ इति ॥

आह मनुरपि—

'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः ।
अन्यस्मिन् हि नियुञ्जानाः धर्मं हन्युः सनातनम् ॥
न विवाहविधावस्ति विधवाऽऽवेदनं क्वचित्' ॥ इति ॥

याज्ञवल्क्योऽपि विवाह्यकन्यालक्षणे—'अनन्यपूर्विकां कान्ता'मिति वदन् विधवाविवाहं निषेधति ॥

ऋग्वेदे चाविधवात्वाशीर्वादः विधवायाः निन्दाद्वारा तद्विवाह-निषेधं गमयति । निन्दया निषेधोन्नयनञ्च मीमांसान्यायसिद्धम् । 'यथा अयज्ञिया वै मषा वरकाः कोद्रवाः' इत्यादौ ॥ तथाहि—

अविधवा भव वर्षाणि शतं साग्रन्तु सुव्रता ।
तेजस्वी च यशस्वी च धर्मपत्नी पतिव्रता ॥
जनयद्बहुपुत्राणि मा च दुःखं लभेत् क्वचित् ।
भर्ता ते सोमपा नित्यं भवेत् धर्मपरायणः ॥
अष्टपुत्रा भव त्वञ्च सुभगा च पतिव्रता ।
भर्तुश्चैव पितुर्भ्रातुरुभयानान्दिनी सदा ॥

इन्द्रस्य तु यथेन्द्राणी श्रीधरस्य यथा श्रिया ।
शङ्करस्य यथा गौरी तद्वत् त्वमपि भर्तरि ॥
अत्रेर्यथानसूया स्यात् वसिष्ठस्याप्यरुन्धती ।
कौशिकस्य यथा सती तद्वत् त्वमपि भर्तरि ॥ इति ॥

महाराज अयमप्यर्थ उपबृंहितो महाराजेन देवीभागवते सावित्रीसंवाद-प्रघट्टके सावित्र्याः अविधवात्ववरप्रार्थनया ॥ तथाहि—

'यथा श्रीः श्रीपतेः क्रोडे भवानी च भवोरसि ।
यथा दितिः कश्यपे च यथाऽहल्या च गौतमे ॥
यथा शची महेन्द्रे च यथा चन्द्रे च रोहिणी ।
यथा रतिः कामदेवे यथा स्वाहा हुताशने ॥
यथा स्वधा च पितृषु यथा संज्ञा दिवाकरे ।
वरुणानी च वरुणे यज्ञे च दक्षिणा यथा ॥
यथा वराहे पृथिवी देवसेना च कार्तिके ।
सौभाग्या सुप्रजा त्वञ्च तथा सत्यवतः प्रिये' ॥ इति ॥

'अन्ते सत्यवता सार्धं यास्यामि हरिमन्दिरम् ।
समतीते लक्षवर्षे देहीदम्मे जगत्प्रभो ॥' इति च ।

एवं वासिष्ठरामायणादौ लीलाचूडालाप्रभृतयः सम्भाव्य विधवात्वं बहुप्रकारैः न्यवारयन् । यदि विधवायाः पुनर्विवाहः शास्त्रसम्मतः, तदा किमर्थोऽयमियान् प्रयासः तैस्तैः प्राचीनैः स्त्रीपुरुषैः आश्रीयेत । ततो मन्यामहे अशास्त्रीय एवायं विधवायाः पुनरुद्वाह इति ॥

## पूर्ववादिसम्मतश्रुतिप्रमाणखण्डनम्.

I यत्पुनः 'उदीर्ष्व नार्यभिजीवलोकं' इति तैत्तिरीयमन्त्रः प्रमाणमुक्तः । सोऽस्माकमेवानुकूलः, न परस्य । मन्त्रे हि 'इदं

जनित्वं' इति वर्तते । इदं जायात्वं इति तदर्थः । इदमिति च सर्वनामशब्दः । अत उपस्थितार्थपरामर्शी वक्तव्यः । उपस्थितश्च एतत्पतिनिरूपितत्वरूपः । अतश्चैषोऽर्थोऽत्र स्फुटितः । 'म्रियमाणोऽयं जन्मान्तरे पुनरपि विवाहमिच्छेत् तदा त्वं जाया भव' इति । अवश्यञ्चैवमेवैतत् प्रतिपत्तव्यम् । उपक्रमानुरोधात् । एवंह्यत्रोपक्रमः—

'इयं नारी पतिलोकं वृणाना निपद्यते उप त्वा मर्त्य प्रेतम् ।
विश्वं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणञ्चेह धेहि ॥' इति।

अस्यार्थः—'हे मर्त्य=मनुष्य मृतस्य तव या भार्या, सा पतिलोकं वृणाना मृतस्य तव समीपं नितरां प्राप्नोति । किं कुर्वाणा? अनादिकालप्रवृत्तं कृत्स्नं स्त्रीधर्ममनुक्रमेण पालयन्ती । पतिव्रतानां स्त्रीणां पत्या सहैव वासः परमो धर्म इत्यर्थः । तस्या इहैव लोके वासं अनुजानीहि धर्मपत्नी हि सेति । अत्र च लोके विद्यमानप्रजाधनादिकं पालयेति' ॥ अयमत्राभिसन्धिः—यदि हि पुनर्विवाहः शास्त्रीयः, किन्निमित्तमेषा पतिलोकं वृणीयात्? विद्यमानप्रजादिपोषणञ्च किन्निमित्तं मृतसकाशे प्रार्थयेत? अन्यः पतिः पुनर्भूरुक्तः तदिष्टमाचरन् स्वत एव पालयेत् इति सर्वथोपेक्षणीयोऽयं अपरामर्शिदार्शितपुनर्विवाहप्रमाणतावादोऽस्य मन्त्रस्येति॥

II 'कुहस्विदिति' ऋग्वेदमन्त्रः एक एव । अस्यैवैकदेशः पुनः (षष्ठवाक्यत्वेन VI) मन्त्रान्तरत्वेन उपात्तः प्रतिपक्षिणेति वञ्चना स्फुटा। अत्र देवरसम्बन्धो मनुना निषिद्धः विधवायाः ब्राह्मणविषये इति युगान्तरे ब्राह्मणव्यतिरिक्तविषये आपत्काले वर्तमानः प्रकृताश्विनीदेवतास्तुत्यर्थं कीर्त्यते । तथा हि—मनुना पुराकल्परीतिमास्थाय वेनाद्यनुष्ठानं निषेध्यत्वेन प्रदर्श्य निषिद्धो नियोगः—

'अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥

स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा ।
वर्णानां सङ्करं चक्रे काममोहितचेतसः ॥
ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थे तं विगर्हन्ति साधवः ॥' इति ।

एतादृशश्च कीर्त्यमानः सदा कर्तव्यतां ब्राह्मणादिविषये कथं नाम गमयेत्? यदि च कीर्तनमात्रं कर्तव्यतां गमयेत् चौर्यसुरापानान्यस्त्रीदूषणादीन्यप्यवश्यं कर्तव्यान्यापतेयुः, तादृशान्यपि तत्र तत्र कीर्त्यन्त एवेति । ततश्च तत्तादृङ्निषेधाः कुप्येयुरिति न किञ्चिदेतत् ॥

III 'या पूर्वं पतिं वित्वा' इत्यथर्वमन्त्रोऽपि अतिक्रान्तनिषेधां नारीमुद्दिश्य 'इतोऽपि बहुपतित्वमतिदुष्टं, एतावतैव दोषेण समाप्तिरस्तु देवीभागवताद्युपबृंहणानुरोधात्' इति प्रायश्चित्तोपदेशपरः । तत्त्वं तु 'वाग्दानानन्तरं वरमरणे प्रायश्चित्तविधायकमिदं विवाहात् प्रागि'ति । न खल्वेवञ्जातीयकानां विधायकतास्ति, कीर्तनमात्रन्त्वन्यथाप्युपपद्यते प्रमाणमन्यदाश्रयताम्, इति ह्यवोचाम पूर्वमन्त्रविमर्शे ॥

इदन्त्विह पाठकमहाशयैर्विशेषतोऽवधेयम्—'इह मन्त्राः पूर्वपक्षिणा प्रदर्शिताः अध्येतृसम्प्रदायाननुगुणाः व्यत्यस्ताः दृश्यन्ते । इति । अर्था अपि भाष्याननुगुणाः इति । अनुपलब्धभाष्याश्च मन्त्राः पूर्वपक्षिकृतविवरणाः दृश्यन्ते, इति' च । विस्तरभयात्तु न तत्परामर्शखण्डनादौ लेखनीं व्यापारयामः । तत्सम्मतान् अर्थान् अङ्गीकुर्वाणैरपि न तत्सम्मतो विधवाविवाह. शक्यसाधन इत्यत्रैव प्रवर्तामहे इति ॥

IV एवं 'समानलोको भवती'त्यथर्वमन्त्रोऽपि 'समाना पापलोकप्राप्तिः' इत्यर्थपर एव ॥

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥

इत्यादिरीत्या तत्त्यागपूर्वकं पञ्चौदनप्रदानं तादृक्फलनिर्वर्तकमिति बोधन एव चास्य मन्त्रस्य तात्पर्यम् । न पुनः विधवाविवाहकर्तव्यताबोधकः । यथा किल द्वितीयमन्त्रैकदेशः षष्ठमन्त्रत्वेन कीर्तितः, तथैव चतुर्थस्यैकदेशः सप्तममन्त्रत्वेन कीर्तितः इति वञ्चनान्तरमिदम् ॥

VI, VII, ततश्च षष्ठसप्तममन्त्रौ दत्तोत्तरौ । पञ्चममात्रमवाशिष्यते ॥

V तत्रोच्यते 'सोमस्य जाया प्रथमं' इत्यादिरथर्ववेदमन्त्रः प्रत्यक्षबाधितार्थबोधकः । नात एष शक्यार्थे तात्पर्यवान् । तद्यथा—

'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।

त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यान् आविवेश' ॥ इति

न खलु चतुश्शृङ्गं द्विशीर्षाणं त्रिपादं सप्तहस्तं त्रिधाबद्धं वृषभं कञ्चन पश्यामः, यः पुनः पुना रौति ॥ इति ॥

अतः प्रकृतमन्त्रे शुध्यादिदातारः सोमादयः उपकारिणस्तस्याः इति जायात्वमुपवर्ण्यते । तत्तद्दत्तार्थसंस्कृता ह्येता भवन्तीति संस्कारविशिष्टतया जातः इति जायाशब्दो यौगिक इत्यपि वक्तुं शक्यम् ॥ अत एव याज्ञवल्क्यादिवचनं—

'सोमः शौचं ददावासां गन्धर्वश्च शुभां गिरम् ।

पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः' ॥ इति ॥

तन्न मात्रयापि पूर्वपक्षिणां साधकोऽयं मन्त्रः । ईदृक्षेषु च मन्त्रेषु एवमेव मीमांसकैरर्थस्य वर्णनात् । मीमांसयैव वेदार्थो निर्णेतव्य ॥ इति ॥ आहुश्च—

'धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।

इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥ इति ॥

तस्मात् सिद्धं न किमपि वेदवाक्यं पूर्वपक्षिणां साधकमस्तीति ॥

## पूर्वपक्ष्यभिमतस्मृत्यादिप्रमाणखण्डनम्.

एवमेव स्मृत्यादिवचनान्यपि असाधकानि पूर्वपक्षिणाम् ।

I 'नष्टे मृते प्रव्रजिते' इत्यादिवचनं वाग्दत्ताविषयम् । अत एव पताविति प्रयोगः गौण एवायं पतिशब्द इति द्योतयति । अन्यथा हि पत्यावित्येव प्रयुञ्जीत । यत्पुनर्मनुवचनमिति उक्तं, तद्दूषणार्थमेव, पराशरवचनं ह्येतत् । अत एव स्वोक्तमस्य मनुवचनत्वं विस्मृत्यान्ते पूर्वपक्षिणा पुनर्भुवापि प्रथमविवाहसंस्कृताऽभेदः पराशरसम्मतः इति उपसंहृतः पूर्वपक्षः । स्यादेतत् पाराशर्यमेव स्मरण विमृशामः । कियदवधिकमिदमत्राभिनिविशत इति ॥

एवमत्र पाराशर्यं स्मरणमवतार्यते—

'श्रुता मे मानवा धर्माः वासिष्ठाः काश्यपास्तथा ।
गर्गेया गौतमीयाश्च तथा चौशनसा स्मृताः ॥
अत्रेर्विष्णोश्च सवर्तात् दक्षादङ्गिरसस्तथा ।
शातानपाच्च हारीतात् याज्ञवल्क्यात्तथैव च ॥
आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य च ।
कात्यायनकृताश्चैव तथा प्राचेतसान्मुनेः ॥
श्रुता ह्येते भवत्प्रोक्ताः श्रुत्यर्था मे न विस्मृताः ।
अस्मिन् मन्वन्तरे धर्माः कृतत्रेतादिके तथा ।
सर्वे धर्माः कृते जाताः सर्वे नष्टाः कलौ युगे ॥
चातुर्वण्यसमाचारं किञ्चित् साधारणं वदे' ति ॥

अत्र मन्वादिकीर्तनं तदुक्तार्थानां सुदृढाङ्गीकारप्रयोजनं विना केनान्येन प्रयोजनवत् स्यात्? किञ्चान्यत्, दर्शयति पराशरो मनौ महिमातिशयम्—

'न कश्चित् वेदकर्ता च वेदं स्मृत्वा चतुर्मुखः ।

तथैव धर्मान् स्मरति मनुः कल्पान्तरेऽन्तरे ॥ इति ।

अतश्च स्फुटितः सामस्त्येन तदुक्तार्थाङ्गीकारः । ततश्च तत्तदृषिकीर्तितानां धर्माणां कलियुगे सङ्कोचनेन सर्वसाधारणधर्मनिर्णयार्थ एव पाराशर्यस्मरणं, न तदुक्तं खण्डयित्वा धर्मानन्यथयितुमिति विमर्शशीलिनः सुधियो विदाङ्कुर्वन्तु । मानवमभिप्राय पुनरनुपदमेव प्रकाशयिष्यामः ॥

II 'यदि सा बालविधवा' इत्यादिब्रह्मपुराणवचनं अस्मत्प्रदर्शितं तत्पुराणवचनमेवापरुन्धे इति, त्रैवर्णिकव्यतिरिक्तविषयं, युगान्तरविषय चावतिष्ठते अत एव वृद्धमनुः—

'शूद्राणामेव धर्मोऽय पत्यौ प्रेतेऽन्यसंश्रयः ।
लोभात् मूढैरविद्वद्भिः क्षत्रियैरपि चर्यते ॥ इति ।
अकार्यमेतद्विप्राणां विधवा यन्नियुज्यते ।
उद्गते वा मृते पत्यौ देवरेण विशेषतः ॥' इति चाह ॥

III एतेनैव प्रकारेण प्रजापतिवचनमपि प्रत्याख्यातम् ॥

IV एवमाग्नेयपुराणवचनमपि वाग्दत्तापरमेव । तद्धि वेदं धर्मप्रमाणमिति सुदृढमङ्गीकरोतीति विमर्शरसिका तत्र प्रमाणम् । अतस्तत्र वेदविरुद्धार्थं कथयति भगवान् द्वैपायन इति कथमिदं प्रामाणिकाः विश्वसेयुः ?

V यत्पुनर्बोधायनवचनं 'निसृष्टो वा हृता बापीत्यादि' दर्शितं, तदपि वञ्चनार्थमेव । 'निसृष्टायां हुते वापी' त्येव सा स्मृतिः विश्वरूपाचार्यैः व्याख्याता । 'अपि निसृष्टायां--वाचा अद्भिर्वा दत्तायां ॥ अपि हुते--होमे कृते । न तु परिणीतायां । 'यस्य भर्ता म्रियेत सः । सा चेदक्षतयोनि स्यात् गतप्रत्यागता सती' इत्यवशेषः इति । अत्रेदमवधेयम्—'एकैकस्मिन्नृतौ दोषं पातकं मनुरब्रवीत्' इत्यादिना अनेकस्थलेषु 'मनुरब्रवीत् मनुरब्रवीत्' इति मनु प्रमाणयति बोधायनः ।

अतो मनुरीत्यैव बोधयति विशेषांश्च कांश्चन दर्शयतीति स्फुटतरमिदम्। मनुना च—

'न विवाहविधावम्ति विधवावेदनं क्वचित्' इति उक्तम्। क्वचिदपि=वेदे स्मृतिपुराणादिषु वा विवाहविधिप्रकरणे विधवाविवाहो नास्तीति वदता च स्पष्टोपदेशः कृत ॥ सत्येवं कथ नाम मनूक्त-सकलशास्त्रार्थतत्वमतिक्रम्य विधवाविवाहपरतया बोधायनवचनस्य व्याख्यानं कुर्वन् उपादेयवचनो भवेत् विमर्शशीलिनाम्?

किञ्च सर्वे स्मर्तारो महर्षयः सर्वं धर्मं न बोधयन्ति। कांश्चिद्धि धर्मान् अन्यतः सिद्धाननूद्य विशेषाः तत्सम्बद्धाः अभिधीयन्ते। केचन पुनः नो एव विधीयन्ते। नैतावता अविधीयानाः अन्यत्र विधीयमानाः न सन्त्येव ॥

१ तथाहि. बृहस्पतिः—दानादीन्येव विदधाति न विवाहम् ॥

२ सवर्तः—कन्यादानफलं वदति, विवाहन्तु अन्यत्र विहितमनुवदति ॥

३ आपस्तम्बोऽपि—स्वस्मृतौ गृहिधर्मान् विदधाति न विवाहं, यथोपनयनमविधायैव अन्यत्र विहितमनूद्य ब्रह्मचारिधर्मान् वदति तद्वत्।

४ कात्यायनोऽपि—अविधायैव विवाहमनेकान् धर्मान् विदधाति। प्रसङ्गात् पातिव्रत्यञ्च दर्शयति वैधव्यनिरसनेन—

'निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा।
प्रवसेत् कार्यवान् विप्रः वृथैव न चिरं क्वचित् ॥
मनसा नैत्यकं कर्म प्रवसन्नप्यतन्द्रितः।
उपविश्य शुचिः सर्वं यथाकालमनुव्रजेत् ॥
पत्न्या चाप्यवियोगिन्या शुश्रूष्योग्निर्विनीतया।
सौभाग्यवित्तावैधव्यकामया भर्तृभक्तया ॥ इत्यादिना ॥

तथा 'यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत्। चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा' इति विवाहञ्चान्यतः सिद्धं दृष्टान्ततयानुवदति ॥

५. यमोऽपि—धर्मविशेषानेव विदधाति न विवाहम्। अन्यतः सिद्धे विवाहे—

'स्वगोत्रात् भ्रश्यते नारी विवाहात् सप्तमे पदे' इति विशेषमेव कीर्तयन् सप्तपद्याः पूर्वं पतिमरणे पितृगोत्रत्वात् विवाहं तदनन्तरञ्च पतिगोत्रत्वात् पितुर्दानानधिकारञ्च मन्यते ॥

६ व्यासस्तु—विवाह्यकन्यालक्षणे 'अनन्यपूर्विकां लघ्वी' इति विशेषं वदन् विधवाविवाहं निषेधति ॥ स्पष्टञ्चाह—

'मृतं भर्तारमादाय ब्राह्मणी वह्निमाविशेत्।
जीवन्ती चेत् त्यक्तकोशा तपसा शोषयेत्तनुम्' ॥ इति ॥

७ शङ्ख.—ब्रह्मणस्यानेका भार्याः दर्शयति, न ब्राह्मण्याः पतीननेकान्, ब्राह्मदैवार्षप्राजापत्यविवाहानेव धर्म्यान् वदति, विवाहम्पुनरन्यतः सिद्धमनुवदतीति कथमस्य विधवाविवाहः सम्मत उन्नीयेत? 'अनन्यपूर्वा' इति लक्षणं ज्ञातृभिः ॥

८ शातातपः—प्रायश्चित्तान्येव विविधमन्त्रकर्मविशेषैः वदन् परमवैदिकः निषेधानां अनवशेषं परिज्ञाता न विधवाविवाहमनुमन्यते ॥

९ लिखितोऽपि—इष्टापूर्तादिधर्मानेव वदति। प्रसङ्गात्तु 'स्वगोत्रात् भ्रश्यते नारी उद्वाहात् सप्तमे पदे' इति वदन् उक्तपूर्वरीत्या विधवाविवाहं निषेधति, स्पष्टञ्चान्यतः सिद्धं विवाहमनुवदन् ॥

१० दक्षोऽपि—पत्नीमुख्यो गृहस्थाश्रम इति वदन् अन्यत सिद्धं विवाहमनुवदति। 'सर्वशास्त्रार्थतत्त्वज्ञ सर्ववेदविदां वरः' इति दक्षविशेषणात् न श्रुत्यादिविरुद्धाभिप्रायः सम्भवतीति स्पष्टम्। आह्निकादिकृत्यान्येवैष उपदिशति न विवाहम् ॥

११ गौतमः —' गृहस्थः सदृशीं भार्यां विन्देत अनन्यपूर्वा ' मित्यादिना विधवाविवाहं निषेधत्येव। अतोऽस्य विधवाविवाहे कथं सम्मतिः स्यात् ? ॥

१२ वसिष्ठस्तु स्वोक्तार्थे प्रमाणतया अथाप्युदाहरन्ति—

' संवत्सरेण पतति पतितेन सहाचरन्।

याजनाध्यापनात् यौनात् अन्नपानासनादपि ' ॥

इत्यादिना अनेकत्र मनुवचनं प्रमाणतया गृह्णाति। अतोऽस्य मनूक्तार्थातिक्रमो दुर्वचनः। अतश्च ' अद्भिर्वाचा च दत्तायाः म्रियेतादौ वरोयदि न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ' इत्यादिवासिष्ठश्लोकव्याख्यानं विश्वरूपाचार्यैः कृतं ' आदाविति वचनात् विवाहात् पूर्वमपि अद्भिर्वाचा च दानं सम्भवति, तथाविधे पितृस्वत्वस्यानपगमात् पित्रान्यस्मै दानं युज्यते। तदेव स्पष्टयति ' न च मन्त्रोपनीतेति ' पदेन ' ॥ इति समीचीनम्। एतेन ' नष्टे मृते प्रव्रजिते ' इत्येवञ्जातीयकानि सर्वत्र विद्यमानानि वचनानि व्याख्यतानि ॥ तस्मात् ' निसृष्टो वा हतो वा ' इत्यादिपञ्चमप्रमाणोपन्यासः पूर्वपक्षिकृतः वञ्चनार्थमेवेति, कथमपि तत्पक्षस्यासाधक इति च स्फुटम् ॥

VI ' अक्षता पुनः संस्कृता पुनर्भू ' रिति विष्णुयाज्ञवल्क्यादिवचनमपि पुनर्भूत्वे कारणविशेषं गमयति, न पुनर्विवाहं कर्तव्यत्वेन बोधयति। यदि कीर्तनमात्रं कर्तव्यताबोधकं स्यात्, तर्हि पैशाचादिविवाहाः सुरापानादयश्च कर्तव्यत्वेन विहिता आपद्येरन्। इत्येवं सर्वेषामपि निषिद्धानां कर्तव्यत्वापत्त्या नैकविधानि निषेधशास्त्राणि व्यर्थान्यापद्येरन्निति अत्यन्तमेवाव्यवस्था प्राप्नुयात् ॥

VII एवं ' पाणिग्राहे मृते कन्या केवलं मन्त्रसंस्कृता। सा चेत् अक्षतयोनिः स्यात् पुनः संस्कारमर्हति ' इति वसिष्ठवचनमपि मनो-

निहितसर्वमन्वादिवचना विश्वरूपाचार्याः एवं व्याख्यान्ति। अस्यार्थः-'ग्रामधर्मेण पूर्वमपि विवाहात् पाणिग्रहणं, तस्मिन् पाणिग्राहे मृते मन्त्रसंस्कृता केवलं, न पाणिग्रहणं सप्तपदी वा वृत्तम्। तर्हि पुनः संस्कारमर्हति, तदेव दर्शयति सा चेदक्षतयोनिः स्यात्' इति पितृगोत्रक्षत्यभावाभिप्रायेण। एतादृशावस्थायामन्येन भर्त्रा पुनर्विवाह संस्कारमर्हतीति। सर्वथा परिणीतायाः पुनः परिणयनाभावः। तदुक्तं-'न विवाहविधावुक्तं विधवावेदनं क्वचित् इति' इति। अस्यानन्तरं एतत्समानार्थकतया पूर्वोक्त बोधायनवचनमपि कीर्तयन्ति विश्वरूपाचार्याः तथाच बोधायनः 'निसृष्टायां हुते वापि यस्यै भर्ता म्रियेत सः। सा चेदक्षतयोनिः स्यात् गतप्रत्यागता सती। पौनर्भवेन विधिना पुनस्संस्कारमर्हति' इति। अतश्चैवमत्र निर्गलितोर्थः यदि पितृगोत्रसम्बन्धो नापैति सर्वथा पुनस्संस्कार्या विवाहस्यासिद्धत्वात्, वाग्दानेन, जलदानेन, होमेन ग्राम्यधर्मपाणिग्रहणेन वा विवाहानिष्पत्तेः पुनर्विवाहाप्रसक्तेरिति॥

VIII 'या च० क्लीबमुन्मत्तं' इत्यादिवासिष्ठवचनमपि पुनर्भूस्वरूपकीर्तनपरं, न पुनरवज्ञातीयकस्य धर्म्यत्वेन कर्तव्यताबोधनपरं पूर्वोक्तयुक्तेरिति न किञ्चिदेतत्। किं बहुना एवं विवाहं विदधाति वसिष्ठः 'सदृशी' मिति पदेन शास्त्रान्तरोक्तापेक्षितांशोपसंहारद्वारा 'असमानार्षामस्पृष्टमथुनां—यवीयसीं सदृशीं भार्यां विन्देत्' इति। 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च। एतन्मैथुनमष्टाङ्ग' मिति लक्षणमैथुनहीनामिति रेखायुक्तस्यार्थः। अतो न कथमपि वसिष्ठस्य पुनर्विवाहे शास्त्रीयत्वसम्मतिः शक्या। अपि तु तदभावे एवेति विमर्शशीलिनो विदाङ्कुर्वन्तु॥

१३ अङ्गिरास्तु—प्रायश्चित्तमेव विदधाति न विवाहं, परन्तु आपस्तम्बं 'तद्विजेभ्यो न दातव्यं आपस्तम्बोऽब्रवीन्मुनि' रिति अनेकत्र प्रमाणयति । ततश्च दत्तां गुप्तां इत्यादिना गृह्यसूत्रे वर्जनीयत्वेन दत्तायाः कीर्तनात् दत्तायाः पुनर्दानाभावः आपस्तम्बसम्मतः अङ्गिरसाप्यङ्गीकृत इति नाङ्गिरोमहर्षेरपि विधवाविवाहः सम्मत इति तत्स्मृतिपर्यालोचनया निर्गलितार्थः ॥

१४ उशनो महर्षिः—जातिवृत्तमेव कीर्तयति। वर्णाश्रमधर्मान् सर्वानन्यतः सिद्धाननुवदति इति अस्माकमेवानुकूल इति न विधवाविवाहस्य धर्म्यत्वं तत्सम्मतमिति सुस्पष्टम् ॥

१५ हारीतोऽपि—गृहीतवेदाध्ययनः श्रुतशास्त्रार्थतत्ववित् । कन्यामुद्वहेत्' इति वदन् शास्त्रसम्मतसकृद्दाने दृष्टिमस्योपदिशति। स्मरन्ति हि 'सकृदंशो निपतति सकृत् कन्या प्रदीयते । सकृदाह ददानीति त्रीण्येतानि सतां सकृत्' इति । तन्न विधवाविवाहोऽस्यापि सम्मत इति सिद्धम् । शास्त्रार्थोपसंहारावसरे च तत्तत्प्रमाणसिद्धान् स्वस्वधर्मान् अनुतिष्ठेयुरिति 'तस्मात् स्वधर्मं कुर्वीत द्विजो नित्यमनापदी' ति चैवञ्जातीयकैर्वदन् स्पष्टमेव शास्त्रान्तरं सम्मन्यत इत्यवगच्छामः ॥

१६ विष्णुना तु—विवाहोऽन्यत्र विहितोऽनूदितः । अन्येऽनेके धर्मा विहिताः । अन्ते परं 'यदत्राविदितं किञ्चित् तदन्येभ्यो गामभ्यथ' इत्युपसहारात् शास्त्रान्तरसिद्ध एव विवाहेऽस्य तात्पर्यं न विधवाविवाह इति स्फुटम् ॥

१७ अत्रिरपि—'यन्मे पृच्छथ संशयम् । तत्सर्वं सम्प्रवक्ष्यामि यथादृष्टं यथाश्रुतं' इति वेदप्रामाण्यं कीर्तयन् वेदोक्तविवाह एव दृष्टिं

# नव्यन्यायचरितम्

## १. समुन्मेषः.

बौद्धदार्शनिकानां क्रिस्तद्वितीयशताब्दीमारभ्यैव समभ्युदय इति चरित्रचिन्तकास्समामनन्ति । तत्र सौगतविपश्चिन्नागार्जुनस्तदैवाविर्भूय माध्यमिकमतं विशेषतः प्रचारयामास । सौत्रान्तिकमतस्य प्रधानप्रवर्तकः कुमारलब्धाचार्यः । सोऽपि हि नागार्जुनसमसामयिकः कनिष्कस्य समये सुगतानां तृतीया परिषत्प्रचचाल । तस्याः परिषदो वसुबन्धुस्सभापतिरासीत् । स एव 'महाविभाषा सूत्रं' प्रणिनाय । एतदेव चीनदेशीयत्रिपिटकमध्येऽन्तर्भुक्तम् । वैभाषिकमतस्य विकासः तृतीयशताब्द्यामारब्ध. । तदा आर्यदेवस्यान्तेवासी भदन्तधर्मत्रातः, भदन्तघोषाकः, भदन्तबुद्धदेवः, भदन्तवासुमित्रप्रभृतयो वैभाषिकमतस्य जीवातवस्संवृत्ताः ॥

अयमार्यदेवस्सिंहलथेरादेवानतिरिक्तश्चेत्स तृतीयशताब्द्यामेवावर्तत । भदन्तवसुमित्रः कनिष्ककुमारहुविक्षसमकालिकः । हुविक्षस्तु १५०तमे क्रिस्ताब्दे सिंहासनमारुरोह । तस्माद्वैभाषिकनयः द्वितीयतृतीयशताब्द्यामभिवृद्धिं गमित इति निश्चप्रचम् । तुरीयशताब्द्यां चरमभागे योगाचारप्रसारः समभवत् । तदैव हि वसुबन्धोस्तत्सहोदरासङ्गस्य चाविर्भावस्समजनि । पञ्चमशताब्द्यां बुद्धघोषचन्द्रकीर्तिप्रमाणसमुच्चयकारादिङ्नागप्रमुखा उदभवन् । षष्ठशताब्द्याश्चरमे सप्तमशताब्द्या आदिमे भागे च दार्शनिकगुणप्रभाचार्यः समासीत् । स च हर्षवर्धनस्योपदेष्टा, एकशतप्रबन्धप्रणेता चेतीतिवृत्तं विद्यते । सप्तमशताब्द्यामेव स्थिरमति—सङ्घदास—बुद्धदास—धर्मपाल—शीलभद्र—जय-

सेन–चन्द्रगोमिन–गुणमति–वसुमित्र–यशोमित्र–भव्य–रविगुप्त–बुद्ध-पालित–धर्मकीर्तिप्रमुखास्सौगतविद्वद्वराः प्रादुरासुः ॥

सर्वेऽप्येते आस्तिकदर्शनसमुन्मूलनाय तज्जीवातुभूतां श्रुतिममानीकर्तुमयतन्त । तत्र च लङ्कावतारसूत्रप्रणेता (300 A. D.) षड्दर्शनान्यपि निराकर्तुमारेभे । एवं दिङ्नागनामा प्रसिद्धविपश्चिन्न्याय-भाष्य वात्स्यायनविरचितं 'प्रमाणसमुच्चया' ख्यनिबन्धे निराकार्षीत् । वस्तुतो द्वितीयशताब्दीमारभ्य बौद्धधर्माणामवनतावपि तद्दर्शनानां समुन्नतिरेव समधिकं दृश्यते । तदात्वे हि वैदिकधर्मस्य सनातनस्यापि समुन्मूलनाशङ्का आस्तिकविपश्चितां हृदयकुहरे प्रादुरभूत् । तन्निराकरणायास्तिकनिकरः स्वीयं जीवनमपि पणीचकार । तेषु कुहचिन्मीमांसकमूर्धन्या वेदामानतामसहिष्णवस्तत्प्रामाण्यरक्षायै प्राग्वेदानामपौरुषेयतां वर्णानां च नित्यतां साधयितुं प्रावर्तन्त । कुत्रचिच्च नैय्यायिक-वैशेषिका वेदानां पौरुषेयतां वर्णानामनित्यतामभ्युपगम्यापि विभिन्नां सरणिमाश्रित्य मीमांसकेप्सितं साधयितुं प्रारेभिरे । तदा तदसहिष्णवः प्राभाकरप्रमुखा नैय्यायिकवैशेषिकपदार्थतत्त्वखण्डने प्रवृत्ता गृहकलहे व्यापृता अभूवन् । तदानीं च ये नैय्यायिकवैशेषिकमतयोस्सामञ्जस्यमास्थाय पदार्थतत्त्वस्थापनपूर्वकं मीमांसकमतोपरि प्रतिद्वन्द्वितां समाचरन्, तेषां प्रयत्नेन नव्यन्यायनिचयस्योत्पत्तिः, तेषां निकट एव नव्यन्याय अधमर्णः । एतच्च चिन्तामणिनिबन्धगतमङ्गलपद्येन ज्ञातुं पार्यते । तत्र 'गुरुभिर्ज्ञात्वा गुरूणां मत' मिति विद्यते । 'गुरूणां' इत्यस्य प्रभाकराणामित्यर्थः । एवं पदार्थसङ्ख्यानिर्णयकाले मीमांसकसम्मत 'शक्तिसादृश्या' दीनामतिरिक्तत्वनिराकरणेनेदं निरूढं भवति ॥

तथाचेत्थं फलति । नव्यन्यायस्य जनकः न्यायप्रबन्धः, जननी च कणाददृष्टिः । यदा ह्यवैदिकमतानि वैदिकधर्ममतोपरि आतिभीषणं

क्रियासमभिहारेण निपेतुः, यस्मिंश्च समये आस्तिकदर्शनानि अन्योन्यं बाह्वास्फोटनपूर्वकं रिपुदमने प्रवृत्तास्तदैव नव्यन्यायस्य जनिः। पितृमातृप्रभृतिनिजजनास्तदा अरिविदळने व्यस्ता इति सद्योजाततनयस्य न किमप्युत्सवमकार्षुः। तस्मादेव चास्योत्पत्त्युदन्तं न केऽप्यज्ञासिषु। तथापि नव्यन्यायबालक एकाकी कस्मिंश्चिन्निभृतस्थानेऽवर्धत। क्रमशो यदास्तिकदर्शनानि शत्रुदमने समर्थान्यभूवन्, तदा नव्यन्यायो व्योमशिवस्य (700 A. D.) सप्तपदार्थ्यां स्वीयं बाल्यरूपं प्राचकाशत्। तदनु चोदयनस्य (1000A. D) लक्षणावल्यां निजतारुण्यं प्रकटीचकार। तदात्वे जना अमुं वैशेषिक इति जननीनाम्नैवाजह्वुः। तदसहमानः पुरुषपुङ्गवोऽयं स्वनाम्नैव धन्यं बुभूषुः गङ्गेशस्य (1200 A D) तत्त्वचिन्तामणिनामकमहानिबन्धे स्वीयप्रौढावस्थां प्रादुष्चकार। तदा तत्फलेनायं निजजनकनामैवोपपदेन संयोज्य "नव्यन्याय" इति नामधेयेन प्रथां भेजे। अथ चेदृशोपाधिपरीतोऽयं निजारातिजातं निजबाहुबलप्रदर्शनेन भीतं चकार। निजजनांश्च निजविभवसन्दर्शनेन विमुग्धानकरोत्॥

वस्तुतस्तदारभ्यैव मैथिलस्य तार्किककुलपुङ्गवगङ्गेशस्य वैभवं जना अज्ञासिषुः। तदनु वङ्गे रघुनाथशिरोमणिरनुपमां (1400 A.D.) दीधितिनामधेयां मणेर्व्याख्यां विरचय्यामरस्संवृत्तः। अथ मथुरानाथस्तदन्तेवासी (1600 A.D.) मणेर्दीधितेश्च रहस्यनाम्नीं टीकामकरोत्। ततश्च दीधितेर्जगदीशो गदाधरश्च (1600 A.D.) टीकां कृत्वा मानवमनीषायाश्शेषसीमां प्रदर्शयामासतुः॥

मिथिलाजनपदेऽपि नव्यन्यायजनिदेशे गङ्गेशसूनुर्वर्धमानः (1200 A.D) तत्पुत्रोयज्ञपतिश्च (1300 A.D) पितृमितामहप्रबन्धस्य व्याख्यां चक्रतुः। तदनु जयदेवमिश्रापरनामधेयः (1300 A.D.) पक्षधरमिश्रो मणेरुपरि "आलोक" नाम्नीमसमानव्याख्यांचकार। तदुपर्यपि

महेशठक्कुरस्य दर्पणाभिधाना टीका चकास्ति । एवं मिथिलायां पण्डितमण्डली गङ्गेशप्रबन्धस्य टीकाप्रटीकाप्रभृतिं प्रणिनाय । वङ्गदेशे जगदीशगदाधराभ्यामेव न निबद्धमभून्न्यायशास्त्रम् । किन्तुभवानन्दसिद्धान्तवागीश-वासुदेवसार्वभौमप्रभृतीनां प्रबन्धा अद्यापि नयनगोचरतां भजन्ते । व्यतीत्य चैतान्कति वा प्रबन्धाः करालकालकबलग्रस्तास्तान्के वा गणयितुमीशते ॥

वङ्ग—मिथिलानुकारं भारते बहुत्र चिन्तामणिलाभे समधिकं प्रयत्नः पण्डितानां प्रवृत्तः। तत्र श्रीमन्मुम्मडीकृष्णराजसार्वभौमपरिपालिते कर्नाट जनपदे बहवो विद्वांसः चिन्तामणिदीधितिव्याख्यायां व्यापृता बभूवुः । तत्र महीशूरनरपालनियोगेन काशीतिम्मण्णाचार्यनामा (1900 A.D.) (ग्रन्थकारस्य प्रपितामहः) विपश्चिदुत्तंसो मणिदीधितिजागदीश्यदीनां समालोचानपूर्वकं "अभिनवकाशिका" ख्यां नूतनपरिष्कारनिकरनिगूढां व्याख्यां चकार । पुस्तकमेतदिदानीमपि सरस्वतीभण्डारकोशागारे ५६तम सङ्ख्याकं विराजते। एवं तिरुपतिश्रीनिनासाचार्याः गूळीबालाचार्याः व्याघ्रपुरीश्रीपत्याचार्या मन्नारीकृष्णाचार्याः अनन्ताचार्याः पण्डितप्रकाण्डाः कर्नाटकसार्वभोमादेशेन बहून्प्रबन्धान्प्रणिन्युः । तत्र कुणिगल्रामशास्त्रिणः पण्डितमणयश्शतकोटिनामानं ग्रन्थं विरचितवन्तः । स च वाराणस्यां मुद्रितः, तदुपर्यपि खण्डनमण्डनात्मका वहवो निबन्धाः प्रचेरुः । अनेनैव तेषां पाण्डितीप्रकर्षं कियानिति ज्ञायते॥

दक्षिणभारतेपि कृष्णताताचार्यविग्रहंदेशिकाचार्यविजयराघवाचार्यप्रभृतयस्सूरिशेखरा नैकविधप्रबन्धप्रणयनेन गङ्गेशस्य महिमानं प्रचारयामासुः ॥

महाराष्ट्रजनपदेपि, विपश्चिन्मणय धर्मराजाध्वरीन्द्रा भट्टत्र्यम्बकशास्त्रिण अन्ये च बहवः बहून्ग्रन्थान्निर्माय देशगौरवं ररक्षुः ॥

अथ क्रमशो नव्यन्यायमतमवलम्ब्य बालबोधोपयोगिन अनेके प्रबन्धाः भाषापरिच्छेद—मुक्तावली तर्कसङ्ग्रह—पदार्थदीपिका—तर्क-कौमुदी—तर्कप्रकाश—शितिकण्ठी—दिनकरीयप्रमुखाः प्रादुरभूवन्। वस्तुतस्तदा नव्यन्यायाविर्भावेन दार्शनिके जगति अभिनवयुगस्याविर्भावस्समभूत्। अद्यापि नव्यन्यायालोकेनैव साङ्ख्ययोग-व्याकरणालङ्कार-मीमांसावेदान्तप्रभृतीनि शास्त्राणि रचितानि पठितानि च दृश्यन्ते। किम्बहुना? न्यायवैशेषिकदर्शने अपि नव्यालोकेन समुज्वलतरे अभूताम्[*] ॥

## २. आदिप्रवर्तकः.

केचिदत्रैवमाहुः—सौगतविपश्चिद्धर्मकीर्तिरेव नव्यन्यायस्य मार्गोपदेशकः, यतस्तत्प्रणीतन्यायबिन्दुसाजात्यं चिन्तामणिनिबन्धे प्रमाणमात्रनिरूपणेन ज्ञातुं पार्यते। स च धर्मकीर्तिः कुमारिलभ्रातुष्पुत्रस्तत्समकालीनस्तत्प्रतिवादी चासीत्। तस्मात्स ७मशताब्दीयः। तदैव नव्यन्यायः प्रादुरास। तदनु गङ्गेशः (1200 A. D.) तदीयामेव प्रणाली प्रपन्नस्तत्वचिन्तामणिं प्रणिनायेति ॥

नैतन्मनोज्ञमाभाति प्राज्ञानाम्। चिन्तामणौ हि गङ्गेशः प्रमाणमात्रं न न्यरूपयत्। येन न्यायबिन्दुसाजात्यं भजेत चिन्तामणिः। किन्तु मणिग्रन्थे उपमानखण्डे प्रमेयानपि सुष्ठु निरूपयामास। अत एव तत्र शक्तिसादृश्यादीनमतिरिक्तत्वशङ्कानिराकरणे सङ्गच्छेते। अतः

---

[*] विशेषजिज्ञासुभिर्निम्नीनिर्दिष्टा प्रबन्धा अवलोकनीया। सतीशचन्द्रविद्याभूषणस्य मनोमोहनचक्रवर्त्तिनश्च प्रबन्धौ, राजेन्द्रलालमित्रमहाशयस्य हरप्रसादशास्त्रिणश्च पुस्तकविवरणं, वङ्गीयएष्याटिक्सभाया पुस्तकसूची, इण्डियाकार्यालयीयपुस्तकसूचिका इण्डियन्एण्टिकोय्यारि, एष्याटिकमासिकपत्रिका वे त्येवमादयः.

प्रमाणमात्रनिरूपणपरन्यायबिन्दुसाजात्यं कथं संघटेतेति वाचकास्समालोचयन्तु ॥

अपरे तु भासर्वज्ञोपज्ञन्यायसार एव नव्यन्यायसरणिज्ञापकः । भासर्वज्ञस्तु क्रुस्तीयनवमशताब्द्यां ग्रन्थकारजीवनं यापयामासेति तां रीतिमेव समाश्रितवान्मणिकार इति वदन्ति । तदपि प्रोक्तकारणान्नसमीचीनतां बिभर्ति ॥

वस्तुतस्त्वेवम्प्रतिभात्यस्माकं । व्योमशिवाचार्यसप्तपदार्थ्येव नव्यन्यायस्यादिमो निबन्धः । स एव ह्यादौ न्यायवैशेषिकमतयोस्सामरस्यमास्थाय प्राभाकरविजयार्थं अभिनवामेव कांचित्सरणिं प्रपन्नः सप्तपदार्थीनामकं प्रबन्धं निर्ममे । अत एव नव्यन्याये कदाचिन्न्यायमताश्रयणं, कदाचिच्च वैशेषिकमताश्रयणं च क्वचिद्दृश्यते। तस्मादेव नवीनन्यायशास्त्रं वैशेषिकं वा न्यायशास्त्रं वा न भवितुमर्हति । किन्तु नवीन एव कश्चन शास्त्रविशेषः । अत एव भारते नवीनप्राचीनन्यायशास्त्रयोः पृथक्पृथगेवाध्ययनं परीक्षा च तत्र तत्र कलाशालासु दृश्यते । 'वस्तुतो नव्यन्यायशास्त्रं भाषाविज्ञानशास्त्रमिव निखिलशास्त्रोपकारकं विराजते । अत एव नव्यशास्त्रीया अवच्छेदकावच्छिन्नादिभाषा सर्वशास्त्रेषूपयुक्ता भवति । नैतच्च षट्दर्शनशास्त्रेषु कुत्राप्यन्तर्भवति । अत एव चेतरदार्शनिका न्यायदर्शनखण्डनकाले न्यायसूत्रभाष्यवार्त्तिकटीकापरिशुद्ध्यादिगतान्यथाख्यातिवादादीनेवोपाददति—तस्मान्न्यायादिविलक्षणं नव्यन्यायशास्त्रं, तस्यादिमः प्रवर्तको व्योमशिव इति सिद्ध्यति। तदीयप्रबन्धस्य नव्यतां 'सप्तपदार्थी' ति नामधेयमेव ज्ञापयति । वैशेषिकस्तु षट्पदार्थवादीति पुराणादिप्रतनप्रबन्धेभ्योऽवगच्छामः । साङ्ख्यसूत्रे*

* 'न वयं षट्पदार्थवादिनो वैशेषिकादिवत्' (सा. सू. १-२५).

कणादः षट्पदार्थवादीति स्पष्टमुक्तम् । वेदान्तदर्शन*भाष्ये श्रीमच्छङ्कराचार्या अपि वैशेषिकष्षट्पदार्थवादीति स्फुटमभ्यधुः ॥

तस्मात्सप्तपदार्थीति नामकरणमेव व्योमशिवप्रबन्धस्य वैशेषिकतां निवारयति । यदि सप्तपदार्थवादित्वं नव्यन्यायलक्षणं, तर्हि गङ्गेशप्रणीततत्त्वचिन्तामणौ प्रमाणमात्रनिरूपके प्रोक्तलक्षणाभावान्नव्यता न स्यादित्यपि भ्रमविजृम्भितम् । मणिकारस्सप्तपदार्थानङ्गीकरोत्येव, न चेदयमुपमानचिन्तामणौ शक्तिसादृश्यादीनामतिरिक्तत्वं नैव खण्डयेत् । एतच्च सिद्धान्तमुक्तावल्यां विश्वनाथः विस्पष्टमूचिवान् ॥

तदनु गङ्गेशः चिन्तामणौ प्रमाणचतुष्टयं विशेषतः विवृण्वन्नपि ईश्वरानुमानप्रकरणे एकस्मिन्नेव प्रमेयनिरूपणोद्देश्यं निखिलमपि निरूपयामास ॥

तस्मात्सप्तपदार्थप्रमाणचतुष्टयाभ्युपगमपूर्वकं न्यायवैशेषिकयोरन्यतरमतमवलम्ब्य प्रवर्तमानं भारतीयानां शास्त्रमेव नव्यन्यायशास्त्रमित्युच्यते । नैतच्च तर्कशास्त्रं, न वा जैनबौद्धाविष्कृतं भारतवेषभूषामण्डितं शास्त्रम् ॥

जैनानां मध्येपि पदार्थतत्त्व—प्रमाणतत्त्वोभयप्रतिपादकप्रबन्धानां विद्यमानतया तत्सम्पत्तिरियं नव्यन्याय इति कुतो न प्रतिपत्तव्यम्? न प्रतिपत्तव्यम्, यतस्तदीयपदार्थतत्त्वनिरूपणमन्याविधं, नव्यन्यायपदार्थतत्त्वनिरूपणमन्यरूपम् । यथा हि प्राक्प्रतिष्ठितसाम्राज्यप्रतिरोधनाय प्रवर्तमानानां वैरिणां नवीना शक्तिरस्त्रशस्त्रादौ पूर्वप्रतिष्ठित-

* 'अपि च वैशेषिकाः तन्त्रार्थभूतान् षट्पदार्थान् द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यानत्यन्तभिन्नान् भिन्नलक्षणान् अभ्युपगच्छन्ति' (शां. भा २०२ पृ. काशीसं) । 'न च वैशेषिकैः कल्पितेभ्यः षड्भ्यः पदार्थेभ्य अन्ये अधिकाः शतं सहस्रं वार्था न कल्पितव्या इति निवारको हेतुरस्ति' (२१० पृ).

राज्यानुकारेणोद्भवति, तद्वदेव प्राक्प्रवर्तितकणादाद्युदीरितपदार्थसार्थानवलोक्य, तदनुकारं जैनसौगतविपश्चितः स्वीयदर्शनानि, तर्कशास्त्राणि च रचयामासुः । आस्तिकास्तु प्राचीनान्येव स्वीयोपकरणानि किञ्चिन्नवीकृत्योद्भावयामासुः । तान्येव नवीनन्यायशास्त्राणीत्युच्यन्ते । येषां हि किञ्चिदस्ति तदेव ते समये नूतनीकुर्वन्ति, येषान्तु किमपि नास्ति त एवानुकुर्वन्तीति नैसर्गिको नियमः । तस्मान्नव्यन्यायोद्भावनकार्यं अहिन्दूनामुपरि आरोपयन्ति ये, तेषां युक्तेर्दृढता नास्माकं निकटे समीचीना प्रतिभातीति महामतिराजेन्द्रघोषमहाशयोऽभिप्रैति । तस्माज्जैनानां प्रबन्धानालोक्य नायं नव्यनयो निर्मित इति सिद्धम् । इतः परं नव्यनयोत्पत्तिसमयं निरूपयामः ॥

## ३. उत्पत्तिकालः

नव्यन्यायस्यादिप्रवर्तको व्योमशिव इति प्रागवादिष्म । इदानीं तत्कालनिरूपणे नव्यनयकालो ज्ञायत इति व्योमशिववेलानिर्धारणाय प्रयत्यते । व्योमशिव उदयनादपि प्राचीन इति उदयनवचनेनैव निश्चीयते । अयञ्च विषयो विजयानासंस्कृतपुस्तकावल्यन्तर्गतसत्वपदार्थीभूमिकायां स्फुटीकृतः । *उदयनसमयस्तु ९८४ क्रिस्ताद्ब इति अनुपदमेव गङ्गेशकालनिर्णयप्रसङ्गे व्यवस्थाप्यते । तस्माद्व्योमशिवः ९८४ कृष्टाब्दतः प्राक्तन इति सिध्यति । यदि च राजशेखरगिरामादरणीयत्वे न्यायकन्दलीकारश्रीधरादपि पूर्ववर्ती भवति व्योमशिवः । श्रीधरस्तु †

* 'तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥' (लक्षणावली).

† 'त्र्यधिकदशोत्तरनवशतशाकाब्दे न्यायकन्दली रचिता' (न्या. कं. ३३१).

## श्रीमन्महाराजसंस्कृतमहापाठशालीयोदन्तसन्दोहः.



वत्सरे चास्मिन्वरणीयपीठमलङ्कुर्वाणाः केचन राजकीयाधिकारिणस्समाययुरेतां पाठशालाम्—

तत्र माननीया राजकीयधर्मशाखामुख्याधिकारिणः एन्. माधवरावमहोदयास्समागम्यागमादिकक्ष्याः पर्यवेक्षयन् । तदनु शालीयाधिकारिभिस्सभाजितास्सप्रमोदं प्रतस्थिरे ॥

* * * *

अन्यदा च द्वितीयां मन्त्रिस्थानीमलङ्कुर्वाणा राजमन्त्रप्रवीणा एस्. पि. राजगोपालाचार्यमहाशया महापाठशालामिमां समागत्य सादरसम्भाषणादिना निखिलानपि पर्यतोषयन् ॥

* * * *

अत्रान्तरे अतर्कितोपनतेनैवास्मद्भागधेयेन प्रधानामात्यपदवीमधिकुर्वाणाः सर्. मिर्जा इस्माइल्महोदयास्समन्दहासं तत्र सन्यदधुः । तदीयमधुरमूर्तिसन्दर्शनेन समुत्तेजितानन्दसन्दोहतुन्दिलास्सर्वेपि सभाजयामासुरमात्यसमाजाधिपतीन् । अभिरूपमिदं कार्यं निसर्गत एव गीर्वाणवाणीप्रणयिनाम् ॥

* * * *

अस्मिन्वत्सरे द्वितीयज्यौतिषमहासम्मेलनमस्मन्महाराजसंस्कृतकलाशालायामेव समुचितजननिकरैर्निरवर्ति ॥

* * * *

अहो! महदिदं विषादनिदानं, यत्कर्णाटकसार्वभौमस्य माता करुणेव मूर्तिमती समेषामेतज्जनपदनिवासिनां सौभाग्यमनवरतमर्थयन्ती महानुभावा रमणीमणिः गीर्वाणवाणीप्रणयिनी वाणीविलास सि.ऐ.इ. महाराज्ञी अकाण्ड एवास्मान्विहाय यशश्शरीरेणैव प्राणितीति। उदन्तमेतंनिवेदयितुं नितरां निर्विण्णा भवामः। तदर्थं स्वीयविषादावेदनाय काचन परिषत्कलाशालाधिकारिभिरस्यां शालायां निरवर्ति। तत्र च शालासमिति महाध्यक्षा एम्. रामरावमहोदयाः, आंग्लकलाशाला संस्कृतमुख्याध्यापकाः डि. श्रीनिवासाचार्यमहाशया, राजकविभूषणाः लिङ्गराजमहाभागाः अन्ये च लौकिकप्रवराः शालीयोपाध्यायाश्छात्राश्च समाजग्मुरेनां परिषदम्। तत्र श्रीमन्तः लिङ्गराजमहाशयास्सर्वानुनयेन सभाध्यक्षपदमध्यतिष्ठन्। तदनु महामातृश्रीगुणगणानुवर्णनपूर्वकं प्राच्यपाश्चात्यविपश्चितस्तादृशमहाराज्ञीवियोगजनितं विषादमाविष्चक्रुः। अन्ते च सर्वेप्युत्थाय किञ्चित्कालं जोषभावमास्थिताश्चरमे महानुभावायास्तस्याः परलोके निश्चलां शान्तिं सन्तनोतूमाकान्त इति साश्रुनयनाः अभ्यर्थयामासुः॥

अपरेद्युः प्रातः परलोकं गताया वाणीविलासमहाराज्ञ्या आत्मनः शान्त्यर्थं भगवतः शालीयगजाननस्य महारुद्राभिषेचनं सायं नीराजनं च निरवर्ति॥

---

## विद्यार्थिसङ्घः.

अयि! भोः! महाशयाः,

प्रायस्तत्रभवतां भवतां श्रुतिपथमवतीर्ण एव स्यादयं विषयः— यदस्यां सरस्वतीप्रासादपाठशालायां कश्चन विद्यार्थिसङ्घः महता उत्साहेन स्वकार्यकलापं निर्वर्तयन् प्रतिवर्षं वर्धिष्णुरेव वर्तत इति । सङ्घे चास्मिन् महापाठशालाध्यापका. पण्डिता एव बहुमत्या एकैकशः अध्यक्षतया स्वीक्रियन्ते । स च प्रतिमासं गीर्वाणकर्णाटकोभयभाषामयीं स्वयशः पताकामिव. बुधहृदयेन्दीवरोल्लासिकां चन्द्रिकामिव चन्द्रिकां नाम हस्तलिखितां पत्रिकां प्रकाशयति । अस्माच्च पदे पदे विद्यार्थिनां निरर्गळवाग्धोरणीसम्पादिकाः चर्चाः प्रचलन्ति। एवं लब्धप्रतिष्ठाः बहवः पण्डिता अपि विद्यार्थिनां ज्ञानाभिवृद्धये अनर्घान् विषयानधिकृत्य भाषणानि कुर्वन्ति । तत्र अस्मिन्वत्सरे एतावत्पर्यन्तं द्वादश अमूल्याः उपन्यासाः एकं नाटकपठनं च निरवर्तयन्निति विज्ञापयितुं प्रमोदामहे । एवं विद्यार्थिभिः द्वे चर्चे प्रचलिते । एवं उपन्यासादिसौकर्यसम्पादनेन सङ्घविषये महदुपकुर्वतां लौकिकवैदिकमहाशयानां एतच्छालाधिकारिणां च सङ्घोऽयं स्वकृतज्ञतां प्रकाशयति ॥

के. सीताराम्,
कार्यदर्शी.

# संवत्सरान्ते निवेदनम्.

भो! भो! अमरभारतीरसिकाः,

ग्राहकमहाशयैस्सादरातिशयं पोपुष्यमाणा चेयं पत्रिकाद्य दशमहायनं निरापदं समुत्तीर्णा एकादशसंवत्सरे कृतपदा विराजते । निरपराधमधुरवयस्येवेयं ससागरमेखलामखिलामपीलां पर्यटन्ती तत्तत्सम्मतगुणगणैस्तांस्तानावर्जयन्तीत्येतत्प्रमोदनिदानमस्माकम् । क्वचिदित्थं हि चतुरवनितेवानितरसाधारणसरस्वतीभिस्साहितीरसविदां हृदयमाहरति । क्वचिच्चातिविरागिणीव रागिणामैहिकरतिं निराकरोति । क्वचित्तु सकलकलाकोविदेव पक्षपातविधुरा विषयनिकरं परामृशन्ती, विमर्शकधौरेयाणामपि शिरांसि चालयति । क्वचिदतिजरतीव अज्ञातप्रतनतत्त्वान्याविष्कुर्वती, बुधजनानपि ग्राहयति । क्वचिन्नैकदर्शनसरणिषु निपुणं सञ्चरन्ती, दार्शनिकनिचयानां मनांसि विकासयति । क्वचिदश्रुतपूर्वं रमणीयं विषयनिकरं समुपन्यस्यन्ती, उपदेशकुशलानपि जिगीषति । क्वचित्कमनीयाभिः कथाभिर्विनेयानां मनांसि विनोदयति । क्वचिन्निखिलजनजेगीयमानगुरुगाथाभिर्भावुकानां चेतांसि प्रसादयति । कुत्रचिदहिंसातत्त्वं समुपदिशति। कुहचिद्दयातत्त्वं समीक्षते । क्वचित्प्राचीनग्रीकिपश्चित्संवादसचिवा त्रिपाद्विचारं गोचरयति । क्वचित्समुचितदर्शनादिनिचयनिदर्शनैर्नैय्यायिकवैशेषिकानपि योगस्थान्यां स्थापयति । क्वचिच्च मुरारिनिरूपिताज्ञत्वपरिष्करणेन मींमांसकसमयं परिस्फुटयति ॥

एवमादिगुणगणान्गुणैकलोलुपैरनेकैरनेकधा गीतानत्र निवेदयितुं नितरां प्रमोदामहे । एवमेवेयं विचित्रचरित्रा परजेगीयमानगुणगण-

मण्डिता पत्रिका धरित्र्यां चिराय निरन्तरायं सञ्चरत्विति चराचरगुरु मनवरतमभ्यर्थयामः ॥

महाभागाः,

अतर्कितोपनतमुद्रणप्रतिबन्धकसन्दोहसम्पात –इदम्पत्रिकासम्पादकपरिवर्तनाद्यनेकान्तरायसन्तानान्तरिता वयं यथाकालमेतां पत्रिकां ग्राहककरसरोरुहेषु समर्पयितुं न प्राभूमेति निवेदयितुं नितरां विषीदाम । इतः परं परस्ताद्यथैवं न भवेत्तथा वयमवहिता भविष्यामः ॥

अपरञ्चात्रावेदनीयमस्ति—यदस्मिन्वत्सरे केचन पत्रिकासम्पादकमहाभागाः पत्रिकामनां निजपत्रिकासु सादरं समालोचितवन्तः । तेन भृशं संवर्धितोत्साहा वयं गुणैकलोलुपेभ्यस्तेभ्यो महाशयेभ्यो बहून्धन्यवादान्समर्पयामः ॥

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

# सम्पादकीयसमितिः

---

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए.,
विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रोजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचलशास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानोपाध्यायाः

६. महाविद्वांसः ब्र. क. गोपालकृष्णशास्त्रिणः, महापाठशालासाहित्यप्रधानोपाध्यायाः

७. महाविद्वांसः करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

८. श्रीमन्तः एस्. बि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

## विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञाप- यामः-संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधि - कृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरि- कर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चो - कारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुख विलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भयः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पार- यामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (*3s.*) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

**संपादकः,**

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

---

1. संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगर.
2 संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता.
3. उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. संस्कृतरत्नाकर, जयपुर.
7. संस्कृतपद्यवाणी, कल्कत्ता.
8. मञ्जूषा, कल्कत्ता.
9 अच्युत, काशी.
10. कल्याण, गोरख् पुर.
11. The Mythic Society Journal, Bangalore.
12. Annals of the Bhandarkar Oriental Research Institute, Poona.
13. Review of Philosophy and Religion, Poona.
14. Journal of Oriental Research, Madras.
15. The Law College Magazine, Madras.
16. The Literary and Educational Supplement to "The Hindu," Madras.
17. The Aryan Path, Bombay.
18. The Theosophical Movement, Bombay.
19. The Philosophical Quarterly, Calcutta.
20. Karnataka Historical Review, Dharwar.
21. Ardra, Ceylon.
22. "Yoga," Bulsar.
23. The Vaitarini, Chowdwar.

24 ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ
25 ಭಾರತೀ, ಮದ್ರಾಸು
26. ಸನಾತನಮತಪ್ರಚಾರಿಣೀ, ಭಟ್ಕವಲ್ಲಿ.
27. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ
28. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ
29. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು
30 ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
31. ಅಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಬೆಂಗಳೂರು
32. ರಂಗಭೂಮಿ, ಬೆಂಗಳೂರು
33. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು
34. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ
35. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು
36 ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು

———

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः"

(ईशोपनिषत्

सम्पुटम् ११] जनवरि १९३५ [सञ्चिका १

## सुभाषितानि.

किं वाच्यं सूर्यशशिनोः दारिद्र्यं महतां पुरः ।
दिनरात्रिविभागेन परिधत्तं यदम्बरम् ॥

यथा नयति कैलासं नगं गानसरस्वती ।
तथा नयति कैलासं न गङ्गा न सरस्वती ॥

अतिपरिचयादवज्ञा ह्येतद्वाक्यं मृषैव मे भाति ।
अतिपरिचितेऽप्यनादौ संसारेऽस्मिन्न जायतेऽवज्ञा ॥

सिंहादेकं बकादेकं शिक्षेच्चत्वारि कुक्कुटात् ।
वायसात्पञ्च शिक्षेच्च षट्शुनस्त्रीणि गर्दभात् ॥

प्रभूतं कार्यमल्पं वा यो नरः कर्तुमिच्छति ।
सर्वारम्भेण तत्कार्यं सिंहादेकं प्रचक्षते ॥

इन्द्रियाणि च संयम्य बकवत्पण्डितो नरः ।
देशकालबलं ज्ञात्वा सर्वकार्याणि साधयेत् ॥

प्रत्युत्थानं च युद्धं च संविभागं च बन्धुषु ।
स्वयमाक्रम्य भुञ्जीत शिक्षेच्चत्वारि कुक्कुटात् ॥

गूढमैथुनधार्ष्ट्यं च काले काले च सङ्ग्रहम् ।
अप्रमादमविश्वासं एतत्पञ्च च वायसात् ॥

वह्वाशी स्वल्पसन्तुष्टः सुनिद्रो लघुचेतन. ।
स्वामिभक्तश्च शूरश्च षडेते श्वानतो गुणाः ॥

सुश्रान्तो वहते भारं शीतोष्णं च न पश्यति ।
संतुष्टश्चरते नित्यं त्रीण्येतानि च गर्दभात् ॥

क्षणशः कणशश्चैव विद्यामर्थं च साधयेत् ।
क्षणं त्यक्त्वा कुतो विद्या कणं त्यक्त्वा कुतो धनम् ॥

स्त्रीलिङ्गपुल्लिङ्गनपुंसकेऽपि
पश्चादिरूपं समभाववर्ति ।
समत्वमादाय गुणं तदीयं
लोकोऽपि पश्चादिकृतं प्रतीते ॥

प्रतीयमानं पुनरन्यदेव
वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्धावयवातिरिक्तं
विभाति लावण्यमिवाङ्गनासु ॥

---

## नव्ययुववत्सरारम्भमङ्गलाशासनम्.

---

यस्यापाङ्गलवेन नीरजभवो देवी गिरां शङ्कर-
श्शर्वाणी शरजोऽथ दन्तिवदनश्शेषः खगाधीश्वरः ।
पाराशर्यमुखाश्च वाङ्मयमहासाम्राज्यधुर्या नृणां
स श्रीमान् युवहायने हयमुखो दत्तां विवेकश्रियम् ॥ १ ॥

दोषोन्मूलनभव्यवर्धनपटुस्सूरिर्नृपस्सूर्यजं
कुर्वाणस्सचिवं समं कुशलतां स्वां दर्शयन् निस्तुलाम् ।
सेनार्घाम्बुदपं च हन्तु भृगुजं शम्भुं वितन्वन् जगत्
शासद्भिर्ग्रहैरपि रुर्वरां वितनुतां कर्णाटनीवृद्भुवम् ॥ २ ॥

प्रासादे शैलतुङ्गे नवनवरुचिरे भासुरस्सर्वकाले
वर्षन् कारुण्यपूरं बहुलमपहरन् दुर्गतानाञ्च तापम् ।
श्लिष्टो लक्ष्मीविलासाह्वसुतनुतडिता धर्मवल्लीं च पुष्णन्
कर्णाटक्ष्मालवाले लसतु फलनतां कृष्णभूपाम्बुवाहः ॥ ३ ॥

एष श्रीजयचामराजहिमगुर्दैनन्दिनैरन्तैर-
स्संवृद्धैः क्रमशो व्रजन् स्वसरणिं प्राचीं भृशं संमुखैः ।
सूर्यालोकचयैः प्रपूरितकलाजालो जनानन्दन-
स्सन्तापापहरश्च राजतुतरां भूमौ सतां पालकः ॥ ४ ॥

इन्धां लक्ष्मीविलासाभिधसुतनुसखस्सात्मजस्सानुजात
स्सामात्यस्साश्वनागस्सभटसमुदयः कृष्णभूपालमौलिः ।
शौरेः कारुण्यभूम्ना त्रिजगदधिपतेर्निस्सपत्नं च राज्यं
शासन्नीरोगगात्रः प्रकृतिहितपरो दीर्घजीवी यशस्वी ॥ ५ ॥

करूरु शेषाचार्यः,
संस्थानमहाविद्वान्, संस्कृतमहापाठशालायां
ज्योतिश्शास्त्रप्रधानोपाध्यायः, महीशूरपुरी.

स्थाने परं गुणवती यौवन श्रीःनवोदया ।
प्रायःस्थितोऽपि स युवा यद्गुरोः शासने रतः ॥

सद्भावेन पुरस्कृता नवयुवाऽयं धातुसाम्यादनू-
नैश्वर्यं बहुधान्यतामनुभवन् जीयाद्यथास्वोत्तरम् ।
जीमूताहितजीवनामितमुचो नद्यः समृद्धा जलैः
सर्वोर्वी भृशमुर्वरोद्यमपरा भूयात्सुरानन्दिनः ॥

रामेश्वरशास्त्री,
सं. पण्डितः, हैस्कूल्.

# नरेन्द्राष्टकम्.

विश्वनाथः पिता यस्य माता च भुवनेश्वरी ।
नाम्ना यश्च नरेन्द्रस्तं वन्दे दत्तकुलोत्तमम् ॥ १ ॥

विवेकेनात्मानं जनिमरणशोकादिरहितं
परं दृष्ट्वानन्दं गत इति विचिन्त्यामलधियः ।
विवेकानन्दं यं मुदितहृदयाः प्राहुरधुना
नमस्तस्मै लोकोत्तरगुणगरिष्ठाय यतये ॥ २ ॥

प्रबोधं धर्माणां किमपि च विनोदं मतिमतां
प्रमोदं साधूनामविरतनिनादं श्रुतिगिराम् ।
प्रभेदं बन्धानां कटुतरविरोधं च कुधियां
विवेकानन्दायं जगति महिमा ते वितनुते ॥ ३ ॥

क्वचित्सेवासक्ता गुरुपदसरोजस्य सभयं
क्वचिद्धयालारण्येऽपरिचितभयैकापि रमते ।
क्वचिद्राज्ञां भूतिं तिरयति च मूर्तिस्तव विभो
क्वचिद्भूत्वा दीनं सदनमपि दीनस्य कुरुते ॥ ४ ॥

वदन्ति त्वामेके कृतनवयुगारम्भपुरुषं
परे त्वामाम्नायं श्रुतवपुषमन्ये यतिवरम् ।
हिमाद्रौ ते पूजां सुरसरिति चानन्यनिरतिं
विजानन्मन्ये त्वामशशिशिखिभालं स्मरहरम् ॥ ५ ॥

गते प्राचीं सूर्येऽपरदिगभिभूतान्धतमसा
प्रतीचीं यातेऽस्मिन्पुनरपि च पूर्वा सतिमिरा ।
तव प्रेद्धं तेजस्त्वनिशमुभयाशाहततमो
नृणामन्तर्ध्वान्तं परिहरति भाग्यं च दिशति ॥ ६ ॥

त्वया सार्थंमन्यो निगमनिवहो निर्मलधिया
त्वया स्वस्थंमन्यो भुवनधरधर्मः कृतिमता ।
त्वया धन्यंमन्यः स च परमहंसो गुरुवर-
स्त्वयैवाहंमन्योऽद्वयमतपिता शङ्करयतिः ॥ ७ ॥

न भावाधीनस्त्वं न च गुणगणस्ते मतिवशो
न वा मद्वाणी ते स्तवनसदृशी चिन्मययतेः ।
तथाप्यानन्दौघस्तव चरणकीर्तिश्रवणजो
दयासिन्धो मन्दं मुखरयति मां ते स्तुतिविधौ ॥ ८ ॥

एम्. जि. पाटील.

## आवेदनम्.

गतवत्सरान्तावधि एतत्पत्रिकासम्पादकपदमधिष्ठितानां श्री योगनरसिंहार्याणां स्थानान्तरगमनेन महापाठशालाध्यक्षपदवी-मलङ्कुर्वाणाः श्री कृष्णमूर्तिमहाशयाः सम्प्रति सम्पादकपदमध्यासत इत्यावेद्यते प्रियपाठकमहाभागेभ्यः ॥

०१३ तमेऽब्दे कन्दली विरचयन्नपि उदयनापेक्षया ज्येष्ठ एव । विस्तरस्तु मदीय 'दर्शनचरित्रविज्ञाने' द्रष्टव्यः । माधवीयशङ्करविजय-रीत्या तु व्योमशिवः श्रीमच्छङ्कराचार्यादपि प्राक्तनो भवति । यतः नीलकण्ठनामा विपश्चिच्छङ्कराचार्यैः पराजितोऽन्ते व्योमशिवसप्त-पदार्थीमाश्रित्य विचारयितुमारेभे इत्यस्ति तत्र कथा । श्रीशङ्कराचार्याणां समयः ६८६ क्रिस्तशताब्द इति मदीय 'दर्शनचरित्रविज्ञान' निबन्धे निर्णीतम् । तस्माद्व्योमशिवष्षष्टशताब्द्यां सप्तमशताब्द्यां वा आसीत् । मीमांसकधौरेयप्रभाकरसमये यथा पदार्थतत्वविचारो दृश्यते, तद्दृष्ट्या कुमारिलप्राक्तनप्रभाकरसमय एव व्योमशिवाविर्भावकाल इति ज्ञातुं पार्यते । इयमेव व्योमशिवस्याधुनिकी सीमा भवितुमर्हति । प्राचीन-सीमा तु प्रशस्तपादस्येति ज्ञायते । प्रशस्तपादस्तु वात्स्यायनादनन्तर-कालिकः । कारणमत्र, स वात्स्यायनन्यायभाष्यतः वाक्यान्युद्धृतवान् । एतदर्थं जर्मन्पाण्डतजेकबिप्रबन्धो द्रष्टव्यः । वात्स्यायनस्तु जेकबिमते क्रिस्तीयचतुर्थशताब्दीयः, सतीशचन्द्रविद्याभूषणोऽपि प्राय एतं कालमेव निर्दिशति । एतदर्थं इण्डियन् एण्टिकोयरीप्रबन्धो (१९१५) द्रष्टव्यः । म. म. फणिभूषणतर्कवागीशमते क्रिस्तपूर्वपञ्चमशताब्दीयो भवति वात्स्यायनः । एतन्मध्यकाल एव व्योमशिवोऽवर्ततेति प्राचीनप्रवादः । पाश्चात्यानां मते तु क्रिस्तीयचतुर्थशताब्दीमारभ्य सप्तमशताब्द्या मध्यवर्ती कालो भवति । एतयोर्मध्ये कतरस्साधीयानिति निर्णायक-प्रमाणं नास्माभिस्समुपालम्भि । तथा च नव्यन्यायकालस्सप्तमशता-ब्दीतः प्राक्तनः इति सिध्यति । भवतु यथा वा, नव्यन्यायेतिवृत्ते प्रधानव्यक्तिषु प्रथमं व्योमशिवस्तदनु क्रमशः उदयनः, वल्लभः, गङ्गेशः, वर्धमानः, यज्ञपतिः, पक्षधरः, वासुदेवः, रुचिदत्तः, महेश-ठाकूरः, वासुदेवसार्वभौमः, रघुनाथः, मथुरानाथः, भवानन्दः, जगदीशः,

त्वया सार्थंमन्यो निगमनिवहो निर्मलधिया
त्वया स्वस्थंमन्यो भुवनधरधर्मः कृतिमता ।
त्वया धन्यंमन्यः स च परमहंसो गुरुवर-
स्त्वयैवाहंमन्योऽद्वयमतपिता शङ्करयतिः ॥ ७ ॥

न भावाधीनस्त्वं न च गुणगणस्ते मतिवशो
न वा मद्वाणी ते स्तवनसदृशी चिन्मययतेः ।
तथाप्यानन्दौघस्तव चरणकीर्तिश्रवणजो
दयासिन्धो मन्दं मुखरयति मां ते स्तुतिविधौ ॥ ८ ॥

एम्. जि. पाटील.

## आवेदनम्.

गतवत्सरान्तावधि एतत्पत्रिकासम्पादकपदमधिष्ठितानां श्री योगनरसिंहार्याणां स्थानान्तरगमनेन महापाठशालाध्यक्षपदवीमलङ्कुर्वाणाः श्री कृष्णमूर्तिमहाशयाः सम्प्रति सम्पादकपदमध्यासत इत्यावेद्यते प्रियपाठकमहाभागेभ्यः ॥

९१३ तमेऽब्दे कन्दलीं विरचयन्नपि उदयनापेक्षया ज्येष्ठ एव । विस्तरस्तु मदीय 'दर्शनचरित्रविज्ञाने' द्रष्टव्यः । माधवीयशङ्करविजय-रीत्या तु व्योमशिवः श्रीमच्छङ्कराचार्यादपि प्राक्तनो भवति । यतः नीलकण्ठनामा विपश्चिच्छङ्कराचार्यैः पराजितोऽन्ते व्योमशिवसप्त-पदार्थीमाश्रित्य विचारयितुमारेभे इत्यस्ति तत्र कथा । श्रीशङ्कराचार्याणां समयः ६८६ क्रिस्तशताब्द इति मदीय 'दर्शनचरित्रविज्ञान' निबन्धे निर्णीतम् । तस्माद्व्योमशिवष्षष्ठशताब्द्यां सप्तमशताब्द्यां वा आसीत् । मीमांसकधौरेयप्रभाकरसमये यथा पदार्थतत्वविचारो दृश्यते, तद्दृष्ट्या कुमारिलप्राक्तनप्रभाकरसमय एव व्योमशिवाविर्भावकाल इति ज्ञातुं पार्यते । इयमेव व्योमशिवस्याधुनिकी सीमा भवितुमर्हति । प्राचीन-सीमा तु प्रशस्तपादस्येति ज्ञायते । प्रशस्तपादस्तु वात्स्यायनादनन्तर-कालिकः । कारणमत्र, स वात्स्यायनन्यायभाष्यतः वाक्यान्युद्धृतवान् । एतदर्थं जर्मन्पाण्डतजेकबिप्रबन्धो द्रष्टव्यः । वात्स्यायनस्तु जेकबिमते क्रिस्तीयचतुर्थशताब्दीयः, सतीशचन्द्रविद्याभूषणोऽपि प्राय एतं कालमेव निर्दिशति । एतदर्थं इण्डियन् एण्टिकोयरीप्रबन्धो (१९१५) द्रष्टव्यः । म. म. फणिभूषणतर्कवागीशमते क्रिस्तपूर्वपञ्चमशताब्दीयो भवति वात्स्यायनः । एतन्मध्यकाल एव व्योमशिवोऽवर्ततेति प्राचीनप्रवादः । पाश्चात्यानां मते तु क्रिस्तीयचतुर्थशताब्दीमारभ्य सप्तमशताब्द्या मध्यवर्ती कालो भवति । एतयोर्मध्ये कतरस्साधीयानिति निर्णायक-प्रमाणं नास्माभिस्समुपालम्भि । तथा च नव्यन्यायकालस्सप्तमशता-ब्दीतः प्राक्तनः इति सिध्यति । भवतु यथा वा, नव्यन्यायेतिवृत्ते प्रधानव्यक्तिषु प्रथमं व्योमशिवस्तदनु क्रमशः उदयनः, वल्लभः, गङ्गेशः, वर्धमानः, यज्ञपतिः, पक्षधरः, वासुदेवः, रुचिदत्तः, महेश-ठाकूरः, वासुदेवसार्वभौमः, रघुनाथः, मथुरानाथः, भवानन्दः, जगदीशः,

गदाधरः, धर्मराजाध्वरीन्द्र, काशी तिम्मणाचार्यः, भट्टत्र्यम्बकशास्त्री, कुणिगल् रामशास्त्री, अनन्ताचार्यः, कृष्णताताचार्यः, विग्रहं देशिकाचार्यः, विजयराघवाचार्यः एवमन्ये च बहव आचार्याः आविर्भूय नव्यन्यायसाम्राज्यं विशेषतः अभिवर्धयामासुः । एतेषां चरितानि पुरतः स्पष्टीभविष्यन्ति ॥

## ४. जन्मदेशः.

नव्यन्यायजनिदेशमवगन्तुं नास्त्युपायः । श्रूयते च व्योमशिवस्य 'शिवादित्यमिश्र' इत्यपरं नामधेयमास्त इति । तेन चायं मैथिल एव भवेत् । मिश्र इत्युपनामधेयं तत्रत्यानामेव समधिकं दृश्यते । यथा—वाचस्पतिमिश्र–पक्षधरमिश्रेत्यादयः । वस्तुतो मिथिलैव न्यायशास्त्रस्य जन्मभूमिः । न्यायशास्त्रप्रणेता गोतमोऽपि तत्रैवावात्सीदिति समालोचकाः कथयन्ति । मिथिलाराजपरिवारस्य गोतमवंशीयाः पुरोधसः—इत्ययमंशः वेदे रामायणादौ च दृश्यते । तस्मात्तन्मूलपुरुषो गोतमस्तद्देशीय इत्यत्र नास्ति विवादः ॥

स्वल्पदिनात्पूर्वं दरभाङ्गानिकटवर्तिकामतौलासमीपे महामतिगोतमस्मरणार्थं 'गोतमपाठशाले' ति काचन शाला निरमायि तत्रत्यैर्महाशयैः । सदाशया राजकीयाधिकारिणस्तस्यै शालायै प्रतिमासं पञ्चाशन्मुद्राण्यर्पयन्तीति तर्कवागीशमहाशया लिखन्ति । एतेन तत्रैव तर्कप्रचार इति ज्ञायते । महात्मानः वाचस्पतिमिश्रोदयनगङ्गेशपक्षधरमिश्रादयस्तद्देशीया एव । तद्वन्नव्यन्यायजन्मभूमिरप्रतिमविपश्चिच्छिवादित्यमिश्रापरनामा व्योमशिवोऽपि मैथिल एवेति ज्ञायते । विशेषजिज्ञासुभिः मन्निर्मित दर्शनचरित्रविज्ञानाख्यो निबन्ध अवलोकनीयः । इतःपरं पूर्वोक्तानामाचार्याणां चरित्राणि निरूप्यन्ते ॥

**का. प्राणेशाचार्यः.**

विधाय धर्मविशेषान् बोधयतीति न विधवाविवाहेऽस्य तात्पर्य-वर्णनस्यावकाशः कथमपि सम्भावयितुं शक्यः ॥

१८ पराशरोपि—अष्टवर्षा भवेद्गौरीत्यादिना विशेषमात्रं विवाहे वदन् शास्त्रान्तरसिद्धमेव विवाहं गृह्णातीति नाम्यापि विधवाविवाहेभि-प्रायमुन्नेतुं पारयामः ॥

१९ विवाहमविधायैव पुलस्त्यः—सामान्यधर्मान् वदन् शास्त्रान्तरसिद्ध-विवाहमङ्गीकरोतीति न विधवाविवाहेस्याभिप्रायं वर्णयितुं शक्यते ॥

२०–२१ एव बुधकाश्यपावपि विशेषधर्मानेव कांश्चन वदन्तौ विवा-हीयविशेषान् अन्यतः सिद्धानेव गृह्णीत इति नाशास्त्रीये विधवा-विवाहे दृष्टिं-क्षिपेतामिति स्फुटम् ॥

अयन्तु विशेषः काश्यपेनोक्तः "वाचादत्ता मनोदत्ता कृतमङ्गलकौतुका उदकस्पर्शिका या च या च पाणिगृहीतिका । अग्निपरिगतां या च या च बाह्यस्य बाह्यिका । इत्येताः काश्यपप्रोक्ताः दहेयुः कुलमग्निवत्" । तस्मात् 'सदा पौनर्भवाः कन्याः वर्जनीयाः कुलाधमाः' इति । एवञ्च कासाञ्चित् वाग्दत्ता-दीनां ग्रहणं महर्ष्यन्तराभिप्रेतं विश्वरूपाचार्यप्रोक्तरीत्या लौकिक-वाग्दानादिपरमेवेति विख्यापितं भवतीति न कापि स्मृतिः मतान्तरसाधिकास्तीति अनया दिशा प्रदर्श्य विस्तरभिया विरम्यते ॥

इयता चावधेयवचनेन प्रतिपक्षिणां सर्वविधप्रत्यवस्थान रुद्धम् ॥

IX 'ऊढापि देया सान्यस्मै' इति नवमकात्यायनवचनमपि विवा-हात् पूर्वं लौकिकवहनपरं । 'पाणिग्राहे मृते' इत्यत्र विश्वरूपाचार्यः

दर्शितरीत्या ज्ञेयन् । अस्मन्मतसाधकं हि कात्यायनवचनं प्रादर्शयामेति । अनङ्गीकारे चैवं पूर्वोत्तरविरोधस्य दुरुद्धरत्वात् ॥

X 'अर्जुनस्यात्मजः श्रीमान्' इत्यादि दशमकात्यायनवचनमपि अब्राह्मणविषयत्वात् न ब्राह्मणे विधवाविवाहगमकम् । तत्वन्तु अर्जुन एव रूपान्तरेण नागकन्यामुपायच्छत् । स्वरूपेण पुनरुपयच्छति स्म, यदा रूपान्तरमनश्यत् । इत्येव वक्तव्यम् । कथमन्यथा पञ्चानां पाण्डवानां एका पत्नीति इदं न निन्द्यं स्यात् । ये पुनः तत्वं विमृशन्ति न तेत्र साहसगन्धमप्याजिघ्रन्ति । अस्ति हि मार्कण्डेयपुराणे चतुर्थाध्याये उपपत्तिरेवञ्जातीयके । तथाहि—इन्द्रोऽनयेन त्वाष्ट्रमवधीत् । तदन्वस्य तेजो धर्ममगात् । बलञ्च वायुं । रूपशक्तिश्चाश्विनौ । सति चैवं वसुधा भारपीडिता तपसाराधितदेवदत्तेन 'मानुष्यकमाप्य देवाः पडिां वारयेयुरि'ति वरेणानुगृहीता । तदनुगुणं देवेषु तत्र तत्र जातेषु इन्द्रशच्योरेवमवतार आख्यायते 'यदिन्द्रदेहजं तेजः तन्मुमोच स्वयं वृषः । कुन्त्यां जातो महातेजाः तेन राजा युधिष्ठिरः । बलं मुमोच पवनः तेन भीमो महाबलः । शक्रवीर्यस्यार्धतश्च जज्ञे पार्थो धनञ्जयः । उत्पन्नौ यमजौ माद्र्यां शक्ररूपौ महाद्युती । पञ्चधा भगवानित्थमवतीर्णः शतक्रतुः । तस्योत्पन्ना महाभागा पत्नी कृष्णा हुताशनात् । शक्रस्यैकस्य सा पत्नी कृष्णा नान्यस्य कस्य चित् । योगीश्वराः शरीराणि कुर्वन्ति बहुलान्यपि । पञ्चानामेकपत्नीत्वमित्येतत् कथितं तव' इति । एवञ्च नागकन्यकापि शच्येवेत्येवमभ्यूहितुमेव युक्तम् । ईदृशञ्च दृष्टान्तं गृह्णन्तः वङ्गीयशिष्टब्राह्मणसभाया अनुकूलाः परिणताः । सर्वथा जन्मान्तरेपि एकपतिकात्वं साध्व्या सम्पादनीयमिति यतो बोधयन्ति । युक्तञ्चैतत् अत एव देवीभागवते ६ स्कन्धे १९ अध्याये हयरूपायां लक्ष्म्यां पुत्रमुत्पादयितुं हयरूपं हरिर्दधाविति कीर्त्यते । तथाहि रेवन्तः

सूर्यपुत्रः हरिं दिदृक्षुः उच्चैःश्रवसमारुह्यागात् विष्णोरुपकण्ठम् । सोदरस्नेहात् रमा तदासक्तमनाः उपातिष्ठत्, यदा वृत्तान्तजिज्ञासुना भगवता दृष्टापि न विवेद । तदनु हयध्याननिबन्धनमनवधानं जानन् भगवान् हयी भवेत्यशपत् । अतिभक्तिप्रसादितश्च लक्ष्म्या 'भद्ररूपं पुत्रमासाद्य शापमुक्ता भविष्यसी'ति अन्वगृह्णात् । ततः कालिन्दीतीरे बहुकालतपसा शम्भुं तोषयित्वा पुत्रोत्पत्तये विष्णुमेव हयरूपमवृणीत । तथैव वरेणेष्टे सिद्धे एकवीराख्यः पुत्रो विष्णुबलोऽजायत । ततो हैहयराजवंशसम्भव इति । एवञ्जातीयकस्य धर्मस्य सूक्ष्मत्वं आक्षेपसमाधानाभ्यां महाभारतेपि निर्णीतम् 'लोकवेदविरुद्धोयं धर्मो धर्मभृतां वर' इति द्रुपदेन पञ्चपतित्वस्याक्षेपे कृते 'भ्रान्तिरस्यापनेयेति युधिष्ठिरवचनम् सूक्ष्मो धर्मो महाराज नास्य विद्मो गतिं वयम्। इति, अत्र च विद्म इत्येतावतैव सिद्धेऽर्थे वयमिति पदं स्थूलदर्शिन इत्यर्थतात्पर्यकम् । ततश्च सूक्ष्मदर्शिनो जानन्त्येव मद्विधा इति सिद्धम्। अहङ्कारपरिहारार्थं तु धर्मपुत्रः स्थूलदर्शिष्वात्मानमप्यन्तर्भाव्याह 'विद्म इति । यदा हीमामेव सूक्ष्मेक्षिकां सर्वत्र प्रसारयामः, तदा क्षत्रियाणामेव, सन्तानविच्छेद एव, ब्राह्मणेनैव, नैयोगिकपुत्रोत्पादनमिति, न वैयासिकानुष्ठानं परेषां पुनर्विवाहे अवलम्बनायालमिति स्फुटम् । तत्सिद्धं न कात्यायनीयवचनं परेषां साधकमिति ॥

सूक्ष्मेक्षिकयैव पराशरवचनमपि 'नष्टे मृते प्रव्रजिते' इत्यादिकं न परानुकूलं सिध्यति । व्यासो हि स्वपितरं कलियुगधर्मविशेषं पृच्छन् श्रौतार्थज्ञातृत्वं मानवादिधर्मज्ञातृत्वञ्च स्वपितृभूतपराशरनिबन्धनमेव कीर्तयन् पितापुत्रयोः मानवादिधर्मे प्रामाण्यबुद्धिं दर्शयति । यदि कचिदप्रामाण्यबुद्धिः स्यात् अन्यतरस्य, पृच्छेत्तत् पुत्रः, पिता वा पुत्रस्य बुबोधयिषया 'एवमेवं मन्वादिभिरुक्तं, तन्न तथा ग्राह्यं वत्स

एवमेव तु ग्राह्य' मिति निर्लुण्ठ्यव्याचक्षीत । नैवमुभयथापि । तत्र मन्वादिसम्मतस्य विवाहादेः असम्मतिः पराशरादेरिति सिद्धम् । उपादर्शि च पराशरस्मृतीयोपक्रम. वैयासिकः 'धर्मं कथय मे तात अनुग्राह्यो ह्यहं तव । श्रुता मे मानवा धर्मा' इत्यादिः—श्रौतार्था मे न विस्मृता' इत्यन्तः । तत्र कथमपि परेषां प्रत्यवस्थानावकाश इति पूर्वापरपरामर्शशालिनस्तत्र प्रमाणम् ॥

XI 'वरयित्वा तु यः कश्चित् प्रणश्येत् पुरुषो यदे' त्याद्येकादशकात्यायनवचनमपि न विधवाविवाहगमकं वरणमात्रानुष्ठानेन विवाहस्यैवासिद्धत्वात् ॥

XII 'अद्भिर्वाचा च दत्ताया' मित्यादिद्वादशवासिष्ठवचनस्य विश्वरूपाचार्यव्याख्यानुगतपाठरीत्या अस्मदनुकूलत्वमेवेति पूर्वमेवोक्तम् ॥

XIII यत्पुनर्नारदवचनं, तत्रोच्यते—'इह हि भगवान् मुनिरित्यादिना मनुर्नारदाय धर्मशास्त्रं महदुपदिदेश । स च मार्कण्डेयाय सङ्क्षिप्योवाच । स च भार्गवाय सुमतये, सङ्क्षिप्याह । सोपि चतुर्भिः सहस्रैः सङ्क्षिप्य लोके विस्तारितवान् । तस्यायं आद्यः श्लोकः—

असीदिदं तमोभूतं न प्रज्ञायत किञ्चन ।
ततः स्वयम्भूर्भगवान् प्रादुरासीत् चतुर्मुखः' ॥ इति इति॥

मनुश्लोकप्रदर्शनेन मानवधर्मशास्त्रत्वात् तदतिक्रमेण नारदो धर्मं वदतीति वदन् न कस्यापि श्रद्धेयाख्यानो भवेत् । अपितु सर्वथा मनूक्तविवाहादिकमङ्गीकृत्यैव धर्ममुपदिशतीति अवश्यं वक्तव्यत्वे सिद्धे 'अष्टौ वर्षाण्युदीक्षेत ब्राह्मणी प्रोषित पतिं' इत्यादिनारदवचनमपि न विधवाविवाहविधायकम् । प्रत्यक्षश्रुतिविरोधात् । किन्त्वतिक्रान्तनिषेधानां स्त्रीणां रागतः पुनर्विवाहप्रवृत्तौ कालविशेषविधायकं । यदेतत् रागतोन्यसमाश्रयणं ब्राह्मण्याः पतिवियोगे, तत् अष्टवर्षानन्तरमे-

वेति । तथैव मीमांसामर्यादा । अतश्च यथा न हिंस्यात् सर्वा भूतानीति निषेधे सत्यपि अतिक्रान्तनिषेधाः शत्रुमारणे प्रवर्तमाना ये रागतो भवन्ति, तेषामुपायोऽभिचारयागादिरुक्तः, न च तावता मारणप्रयुक्तदोषाभावः, अविहितं हि मारणं नाम । उपाय एव तु विहितः । विधीयमानश्चासौ न पापाभावोद्देश्यकतया भवति, शत्रुमारणं ह्यत्रोद्देश्यं समस्तीति तादृक्ष फलं सिध्यत्येव । हिंसाजन्यन्तु पापं स्थिरमेव अत एवाभिचारादिः तामसधर्म इति कीर्त्यते वर्जनार्थं 'परस्योत्सादनार्थं यत् यत् तामसमुदाहृत' मिति । इत्यङ्गीक्रियते, तथैवात्रापि स्वभावतः द्वितीयपत्याश्रयणे प्रोक्तानि पापानि स्थिराण्येव । इयांस्तु विशेषः ॥

यत् अतिरागेण प्रवर्तमानायाः पञ्चषवत्सरपर्यन्तं ब्रह्मचर्यविधाने यदि रागोऽपेयात्, ततो न पापे पुनर्विवाहे प्रवर्तेतेति तामेव रागिणीमनुरुध्य निवर्तनमस्याः कृतं भवतीति, पापादेषा कथंचित् रक्षणीयेति नारदमहर्षेः द्विती‍यविवाहादिनिषेधकवेदाभिज्ञस्याभिसन्धिरिति । यदि पुनरत्यन्तरागदूषिता तदनन्तरं प्रवर्तेत, तदा वचनमहिम्ना पापे लेशतो न्यूनता कल्पनीया न ह्यन्यथा विघानस्य फलं सिध्यतीति दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वादिति च मीमांसकमर्यादा । सन्ति च निषिद्धेषु प्रवर्तमानान् रागिण उद्दिश्य विशेषवचनानि पापेऽल्पह्रासबोधकानि, 'पञ्च पञ्चनखा भक्ष्या' इति 'न मांसमश्नीयात्' इति निषिद्धविषये । 'हुतायां वपायां यजमानस्य गृहेऽशितव्य' मिति 'अग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्य' मिति च 'न दीक्षितस्यान्नमश्नीयादिति च निषिद्धविषये । अतो मीमांसामर्यादां पूर्वापरञ्च अपर्यालोच्य वेदाद्यर्थो न निर्णेतव्यः अन्यथा बहुविप्लवापत्तेः। तथाहि— 'प्रजापतिरुषसमभ्यैत् स्वां दुहितरं' इति वाक्यमनुरुध्य सुताविवाहं

अनुतिष्ठन्तः पितरोपि, 'न यत्पुरा चकृम' इत्यादि सोदरसोदर्योः विवाहकरणविषयकव्यवहारबोधकमनुरुध्य सहोदर्यादिविवाहमनुतिष्ठन्तः सहोदराः, 'न काञ्चन परिहरेत् तद्व्रतं' इत्यादिवचनमनुरुध्य मातृ-मातामहीपितामहीप्रभृतिचण्डालीपर्यन्तं अथवा चतुष्पात् स्त्रीपर्यन्तं स्त्रीगमनमनुतिष्ठन्तोपि, एवमेव यत्किञ्चिद्वचनान्याश्रित्य तत्तानि कर्माणि निषिद्धान्यनुतिष्ठन्तः, अन्ततश्च न कलञ्जं भक्षयेत्, न परस्वमपहरेत्, इत्याद्यनेकवाक्यस्थनञर्थपरित्यागेन कलञ्जभक्षणादिसकलनिषिद्धपदार्था-ननुतिष्ठन्तश्च वेदशास्त्रैकप्रमाणशरणाः शिष्टाग्रेसराः आपद्येरन् । यथेच्छमनुतिष्ठन्तश्चैते किमर्थं शास्त्रं प्रमाणयन्तीति विवेचनीयम् । वयन्तु पश्यामः अविज्ञातशास्त्रार्थान् गुरुवाक्यमात्रविश्वासेन तं तं शास्त्रीयं धर्ममनुष्ठातॄन् वाक्याभासेनापरिमृष्टेन अधर्मेपि प्रवर्तनेनाति-सन्धातुमेवेति ॥

यदि पुनर्निषिद्धेषु नञर्थयोजनेन कलञ्जभक्षणादिषु न प्रवृत्ति-रिति मतं, तर्हि सर्वत्रापि तथैव पूर्वापरपर्यालोचनया मीमांसयैवार्थो वर्णयितव्यः । सन्ति च काव्यादिष्वपि पर्यालोच्य शक्यार्थं परि-त्यजन्तः अर्थान्तरं परिग्रहीतारः तद्यथा 'विषं भुङ्क्ष्वेति' अतिकृच्छ्र-लब्धं स्वप्राणसमं पुत्रमेकमेव शत्रुगृहभोजने प्रवर्तमानमुद्दिश्य पितुः प्रयोगे, अपकारिणि च—

उपकृतं बहु तत्र सखे सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्व ततः शरदां शतम् ॥

इति प्रयोगे। तस्मात् पूर्वोक्तयुक्तिभिः न पुनर्विवाहस्य कथमप्यवकाशः। यानि तु पुनर्भूसम्बद्धानि वाक्यानि न तानि विवाहकर्तव्यताबोधकानी-त्यवोचाम, रागप्राप्ते प्रकारविशेषबोधकानीति च ॥

तद्यदि मीमांसया पूर्वापरपर्यालोचनया वाक्यार्थो निर्णीयेत, न कस्यापि वाक्यस्यानर्थक्यमापद्येत, यदि च यथाश्रुतार्थगृहीतिः, उच्चावचानि वचनानीतरेतरं विरुन्धीरन् तदन्वनेकान्यानर्थक्यमश्नुवीरन्, तदनु च बह्व्योऽव्यवस्थाः प्रसज्येरन्, तस्मात् सर्वमिदं परिजिहीर्षुभिः अस्मदुक्तः प्रकार एवाश्रयितव्यः इति स्थूणानिखननस्थापितोऽयमर्थः ॥

एवमाश्रण्वताञ्च—

दीर्घकालं ब्रह्मचर्यं धारणञ्च कमण्डलोः ।

(वनाश्रम इत्यर्थः) ।

गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा ।

नराश्वमेधौ मद्यञ्च कलौ वर्ज्यं द्विजातिभिः ।

इति ब्रह्माण्डवचनानि न कदापि परित्याज्यानि ॥

तथा—

देवराच्च सुतोत्पत्तिः दत्ता कन्या न दीयते ।

न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः ॥

इत्यादिक्रतुस्मृतिवचनान्यपि न पृष्ठीकार्याणि ॥

एवं 'ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।

कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्' ॥

इत्यादि वायुपुराणादिवचनान्यपि नापलपनीयानि ॥

परित्यजन् पृष्ठीकुर्वन् अपलपंश्च प्रतिपक्षी भद्रिकाः प्रजाः वञ्चयन् वेदशास्त्रार्थशरणैः यदि कदाचित् निर्लुण्ठितगर्भः तादृशीभिः अवगम्येत कावास्य गतिर्भवेदिति न विद्मः । कथन्तराञ्च ॥

'इयं नार्युपब्रूते कुल्पान्यविपन्तिका ।

दीर्घायुरस्तु मे पतिर्जीवातु शरदश्शतम्' ॥

इत्यादयो वैवाहिका मन्त्रा एकस्यैव पत्युः पुरुषायुषजीवन प्रार्थना-बोधकाः न परित्यज्याः पूर्वपक्षिणेति, अपारीक्षतरमणीयोयं पुनर्विवाह-प्रतिपादनवादः । एवं बोधयन्तश्च तत्तद्रोगखिन्नेभ्यः तत्तद्रोगिभिः वाञ्छितानि वस्तुतस्तत्ताद्दग्रोगवर्धकत्वेन शास्त्रसम्मतानि वस्तुजाता-न्यपि दयया दयया ददतः दयालुप्रष्ठाः आपद्येरन् ॥

अन्ततः बालानां स्त्रीणां वा दुर्वृत्तासक्तमानसानां तत्ताद्दशेभ्यो निवर्तनेत्यन्तं दूयमानानां त इमे दयालुप्रष्ठाः दयया तत्तेभ्योऽनिवर्त्य यावच्छक्ति अतिशक्ति वा आनुकूल्यमेवारचयेयुरित्यपि सुदृढं विश्वसनीयम् । न हीमे आपातज्ञाः वैद्यकतत्वं शास्त्रतत्वं वा विदन्तीति ॥

अतश्च रुग्णादीनामनिष्टमिव पूर्वोक्तविवाहसम्बद्धानामपि वैद्य-कतत्वज्ञावगतवत् शास्त्रतत्वज्ञावगतं महदादधीरन्निति सर्वथोपेक्षणीयोऽयं पुनर्विवाहस्य शास्त्रसम्मतत्ववादः श्रेयस्कामैरिति स्थितम् ॥

यत् पुनः 'समुदायसङ्ख्यान्यूनता स्यात् सा माभूदिति तत्प्रा-बल्यं सम्पादयता माहम्भदकैस्तववत् अवश्यमाचरितव्यः पुनर्विवाह' इति परेषामाहोपुरुषिका, तयैकयैव पतितिष्ठापयिषितोर्थः प्रतिष्ठाप्यतां किमेतेनान्तर्गडुना श्रुतिस्मृत्यादिसम्मतिप्रदर्शनेन ॥

तस्मात् गुरूपदेशमात्रबद्धश्रद्धतया अनुष्ठातॄन् साधून् वञ्चयितु-मेव तथा प्रदर्शनमिति विमर्शशीलिभिः सम्यगवगम्यत इति बाह्याना-मेव मूर्धन्या एवमाचक्षाणा इति सुस्फुटितमेतत् ॥

न खलु पश्वादिष्वपि प्रसिद्धे ग्राम्यधर्मे शास्त्रस्य प्रवृत्तिः, किन्तु कर्मणां, कालविशेषाणां, पदार्थविशेषणाञ्च, विचित्राः शक्तयः सन्ति, कर्मकालद्रव्यविशेषाणां संयोगविशेषैश्च ततोपि विचित्राः शक्तयः उत्पद्यन्ते विचित्रफलजनिकाः भैषज्येष्विवेति बोधनार्थमेव प्रवृत्तिः,

सर्वस्यापि वेदतन्मूलकशास्त्रजातस्य । स्पष्टश्चेदं 'धर्मप्रजासम्पत्त्यर्थं स्त्रियमुद्वोढु' मित्यादिवैवाहिकसङ्कल्पादिकं पर्यालोचयताम् ॥

विस्तरस्तु 'आत्ममीमांसायां' अवगन्तव्य इति नेह प्रतन्यते । अन्यथा हि अतिविस्तरः सन् प्रबन्धः आयासकारी स्यात् वाचायितॄणामिति । अत्र मध्ये धर्मराजः—चित्रगुप्त, कथमिवानालोच्यैव नगराध्यक्षः धर्मगतिमीदृशी वैपरीत्येनातीरयत् ? अन्वशाच्च ॥

चित्रगुप्तः–(मुहूर्तं पुनर्ध्यात्वाचष्ट यथावृत्तं ध्यानसंस्कृतमनसावगतम्) ॥

महाराज—'नगराध्यक्षः (दौवारिकं प्रति) प्रथमं व्यवहाराजीविनमानये-त्यन्वशात् । तेन साकं प्रविश्य आयस्थूणः 'स एष देवे' ति विज्ञापयति' ॥

नगराध्यक्षः—कस्त्वं भोः ?

प्रथमः—रञ्जितसिंहः, अत्यहिताभियोगानां विवेचयिता, धनेन तत्तादृग्बह्वभियोगसञ्चितेन साम्राट्सभायामपि सभ्य, गोनर्दीयनगराध्यक्षं अकारणेनैव नालीकयन्त्रप्रयोगात् बहुजनान् मारितवन्तं मदिरामत्तं सम्राट्सभायां अपराधितया तीरयित्वा दशमीं अवस्थां प्राप्नोत्वेष इति' निर्णयस्य अन्यथयिता, तन्निबन्धनमेव गोनर्दीयदत्ततदर्धधनः समस्मीति ॥

नगराध्यक्षः—का पुनः सा रीतिः येनान्यथाकरणम् ?

प्रथमः—प्रतिपक्षिसाक्षी प्रष्टव्य इति मया विज्ञापितम् । कामं भवत्विति स्वामिनानुमते पृष्टो मया मृतजनीयः साक्षा—'जानके कथं गोनर्दीयः प्रायुङ्क्त नालीकयन्त्रम् ? येनानेके जना आम्रियन्ते 'ति ॥

साक्षी (दण्डं कमप्यमवलम्बनसाधनमवष्टभ्य एवमिति वामेतरबाहुभ्यां दण्डाग्रमूलयोः दृढं गृहीत्वोपर्युन्नमय्य उपर्या-

काशे नालीकयन्त्रतः शस्त्रमोक्षणं नाटयति) तदनुपदमेवाहं 'स्वामिन् न ते जनाः गोनर्दीयमारिताः । पर्वतके उच्चैःप्रदेशे गोनर्दीयावस्थितिरिति तत्पक्षीयैः सर्वैरङ्गीकृतम् । अधश्च बहुदूरे काष्ठादीन्युपचिन्वन्तः जना आसन्निति च तर्हि सर्वथा अप्रसक्तिः गोनर्दीयप्रयुक्तनालीकयन्त्रनिस्सृतशस्त्रैः अनेकजनमारणस्य, यतः उपर्येन गच्छेयुः शस्त्राणि नाधस्तादिति' व्याहार्षम् । अथैतामेव नीतिं युक्तिमतीमास्थायैष सप्राणः कृत, इति, ईदृग्रीत्यैवाहमतिदरिद्रो राजा सम्पन्न इति चावोचत् । अथ प्रकृतनगराध्यक्षोऽकम्पत आरोमकूपेभ्यः, 'सर्वथानुसर्तव्योऽयं जीवनापेक्षिणेति' सुदृढ मनसि निश्चिन्वन् ॥

नगराध्यक्षः—आयस्थूण द्वितीयं प्रवेशय । अन्यांश्च सहैव ॥

आयस्थूणः—(तैः सार्धं प्रविश्य) त एते महास्वामिन्निति निवेदयति ॥

नगराध्यक्षः—के यूयम् ?

द्वितीयप्रभृतयः—रञ्जितसिंहस्यापि पक्षं बहुधनददात्रनुगुणतया प्रतिक्षिपन्तः प्रतापसेन–प्रभुचन्द्र–भीमतोष–साढेकराद्यभिधानाः वयमिति, तदपेक्षया द्विगुणत्रिगुणादिधना इति, सम्राट्सभायामर्धासनमधिपतेरर्हन्तीति सम्भाविता इति चावोचन् । अवोचंश्चात्र निदर्शनम् । वधकर्तुः कस्यचित् उद्बन्धनेन दण्डेन मारणं रञ्जितसिंहोऽसाधयत् । वध्यस्थानं नीयमानः सः प्रतापसेनादीन् नः शरणमगच्छत् सर्वस्वेन । ततो वयं 'मन्दरवर्मन् मा भैषीः, अभीष्टं भोगं वृणीष्वेत्याज्ञसोधिकारिणा भवान् अधिकारिणः (न्यायाधिपस्य) भार्यामद्यैकाहं भार्यात्वेन वृणीष्व, ततो वय प्रमाणं' इति अबोधयाम । तदनु तथैव मन्दरवर्मणा वृते भोगे कोपस्य परां काष्ठां प्राप्तः सभाध्यक्षः आत्मानं

विस्मृत्य उद्यतकृपाणोऽतित्वरया प्राद्रवत् एकपदे एव स्मरणीयतां नेतुम्। ते वयन्त्वतिवेगेनोत्प्लुत्य मा मेति न्यवारयाम सभाध्यक्षम्। तदनु सम्राट्सभायां विचारे प्रचार्यमाणे 'पत्नीदूषणजः कोपः यद्यन्न्याय्ये प्रवर्तयेत् न तर्हि कोपनो दण्डनीय इति न्यायं कञ्चनोत्पाद्य सभाध्यक्षेण साकं मन्दरवर्मा आत्मजायायाः सन्दूषणघाती अदण्डार्ह इति विमुक्त इति' ॥

तदनु नगराध्यक्षः—(आत्मगतं-सर्वथा मृत्युमुखान्नास्ति मे मोक्षः, सर्वसाक्षी परमेश्वरः सभामनुगृह्णातु, आत्मा सर्वतो रक्षणीय इति चास्ति शास्त्रमिति चैवमादि निश्चित्य) प्रकाशं—तत्तत्पक्षसाधकप्रमाणमन्वयुङ्क्त। सर्वं तदवगत्य मनस्साक्षिविरुद्धमेव निरणैषीत्। तदन्वते लोककण्टकाः जयभेरीं वादयन्तः तत्तद्भीषणवचनैः साधुजनेभ्यो बहुधनं कणश आहृत्य पञ्चषभाषामयीः विविधाः प्रात्याहिकसाप्ताहिकादिपत्रिकाः स्वमताविष्करणपराः प्रकाशयन्तः स्वपराविवेकेन सर्वतो म्लेच्छीकुर्वन्तिः स्मेति ॥

हा हन्त सम्यक् प्रकटिता अतिदयालुता दीनेषु वञ्चनविशेषे विशिष्य चातिधनसमृद्धावपि दीनजनपीडनेन कणशो धनसम्पादनेनेति अनुरूपे शासने महाराजः प्रमाणमिति ॥

(प्रासङ्गिकं समाप्य प्रकृतमनुसरति चित्रगुप्तः)

अतः—

परस्मिन् बन्धुवर्गे वा मित्रे द्वेष्येऽथवा रिपौ।
आत्मवत् वर्तितव्यं हि दयैषा परिकीर्तिता।

इत्यत्रिः।

यत्नादपि परक्लेशं हर्तुं या हृदि जायते।

इच्छा भूमिसुरश्रेष्ठ सा दया परिकीर्तिता ॥

इति पाद्मे ।

'आत्मवत् सर्वभूतेषु यो हिताय शुभाय च ।
वर्तते सततं हृष्टः क्रिया ह्येषा दया स्मृता' ॥ इति मात्स्ये ॥
'परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आत्मवत् वर्तितव्यं हि दयैषा परिकीर्तिता' ॥ इत्येकादशीतत्वे ॥

अन्यत्र च वर्तमानानि चैवञ्जातीयकानि वचनानि दयातत्त्वबोधकानि विमृशतां नः एवं निष्कर्षो निर्गलितः—

'यथा यथानुष्ठितेऽभ्युदयनिश्रेयसप्राप्तिरात्मनः सिध्यति अनर्थो वा परिह्रियेतोच्चावचभेदभिन्नः, तथान्येषामप्यविशेषेण तदखिलं सम्पादनीयम्,' इति । नचर्ते शास्त्रानुसारात् तत्तादृशेभ्योऽनुष्ठानेभ्यः प्रभवेत् इति तान्यनुसरतैव भिषजेव सर्वमिष्टं सम्पादनीयमिति च सिध्यति ॥

एवमाचरन्ती च वङ्गीया शिष्टब्राह्मणसभा दयावती । अतिसन्धातारस्त्वन्ये, गुरुसम्प्रदायरहिताः स्वयमेव वैद्यकशास्त्रार्थवर्णनया वैद्यप्रष्ठवेषेण भैषज्यं विदधत इवेति, सिद्धम् ॥

यद्यत्र धर्मतत्त्वनिर्णये मात्रयापि व्यत्यस्तः स्याम्, तदा सूच्येषा महाविषदिग्धा सर्वविधव्यथानिदानं आशिरः सीव्यतु, पततु चानलशिखरीति धर्मराजतादात्म्यदृप्तचैव वदन् नमस्कृत्यातिसुखी चित्रगुप्तोऽवास्थित ॥

अथ वञ्चनावाक्चौर्यशास्त्रोल्लङ्घनादिबहुविधापराधानां बहुकालनरकावस्थितिं, तदनु सूकराद्यनेकजन्मानि अखिलानर्थव्याधिनिधानानि चादिश्य साधुकारिभ्यश्च साध्वादिशन्ती धर्मसभा निष्क्रान्ता । समीचीनमत उपख्यानम् ॥

युक्ततराचार्या—

एकोऽनैका विन्देत् नैका विन्देत्कदापि पतिमन्यम् ।
इति किल शिष्टाचार तेनाक्षिप्तः सदास्ति वेदोऽपि ॥

इति । युक्तमुक्तमतो 'वेदाः प्रमाणम्' इति । तत्सिद्धं 'श्रीशिवः शरण'मिति । ओन्तत्सत् ॥

इति वेदान्तविशारद (मद्रास्) पण्डितवर (श्रृङ्गगिरिजगद्गुरुसंस्थान)
मीमांसाविद्वत् (मैसूरु) श्रीमन्महाराजसंस्कृतमहापाठशालाधर्म-
शास्त्रप्रधानाध्यापकस्य, महामहोपाध्यायश्रीमत्त्यागराज-
मखिवर, म. म. श्रीमत्सुन्दरशास्त्रिवर्य, म. म.
श्रीमत्पञ्चापगेशशास्त्रिवर्यरूपगुरुपरम्परा-
वाप्तशास्त्रतत्वस्य श्रीशिवसुब्रह्म-
ण्यशास्त्रिणः कृतिषु दया-
तत्त्वसमीक्षा

(अथवा धर्मराजसभायां अन्तिमाभियोगः) समाप्ता ॥

———

## २. संस्थानम्.

भवतु तावदेवम् । संस्थानं हि परमाणुनिकरस्य अवयववत्तां साधयति । तथाहि । संस्थानं नाम अवयवसमूहस्य सन्निवेशः—परस्पर विलक्षणसंयोग. । यथाहि वसनस्योपादानकारणसूत्रव्रातस्य परस्परं विलक्षणस्संयोग एव वसनस्य 'संस्थानं' । तदेव हि असमवायिकारणं वसनस्य । आकृतिरित्यप्यस्यैवाभिधानान्तरम् । एतच्च संस्थानं परमाणूनामप्यस्ति । तस्मात्परमाणवस्सावयवा इति । परमाणूनां संस्थानमस्तीत्येतत्कथं प्रतिपत्तव्यम्? मूर्तत्वात्तदवसेयम् । यत्परिमाणं कस्मादपि परिमाणादपकृष्टं तस्य मूर्तिर्मूर्तत्वं वेत्यभिधानम् । सर्वव्यापि कालाकाशदिगात्मनो विहाय क्षित्यादिनिखिलेष्वपि द्रव्येषु मूर्तिर्मूर्तत्वं वा वर्तते । क्षित्यादीनां हि स्पर्शवता त्रिकोणं, चतुरस्रं, समं परिमण्डलमित्येता आकृतय स्सन्ति । तत्र परमाणूनां परिमण्डलात्मिकाकृतिस्संस्थानं वा विद्यते । यतस्तेऽपि परिच्छिन्नाः *स्पर्शवन्तश्च । एवञ्च परमाणवस्सावयवा इति सिध्यति ॥

* सर्वमेतत 'मूर्तिमताञ्च संस्थानोपपत्तेरवयवसद्भाव' इति गौतमसूत्रभाष्यटीकासु व्यक्तम् (४-२-२४) तत्रोद्योतकरस्तु—'सावयवा परमाणवो मूर्तिमत्त्वादिति, संस्थानवत्त्वाच्च सावयवा इति' हेतुद्वयपरतया सूत्रं व्याततेने । परन्तु सूत्रात्तादृशार्थो न स्वरसतो लभ्यते । वात्स्यायनोऽपि न तथा व्याचख्याविति पदवाक्यप्रमाणपारावारीणा विदाङ्कुर्वन्तु ॥

न्यायवैशेषिकमते परमाणोर्यदतिसूक्ष्मपरिमाणमस्ति, तदेव परिमण्डलमिति गीयते । वैशेषिकदर्शने कणाद 'नित्यं परिमण्डल (७–१–२०) मिति सूत्रे परमाणुपरिमाणमेव 'पारिमाण्डल' मिति जगाद । प्रशस्तचरणश्रीधरभट्टादयोऽप्येतदेव पारिमाण्डिल्यमिति निरूपयाम्बभूवु । परिमण्डलशब्दात्स्वार्थे तद्धितप्रत्ययेन स शब्दो निष्पन्नः । विश्वनाथपञ्चानन. 'पारिमाण्डल्यभिन्नाना' मित्यत्र कारिकावल्या (१५तमपद्यं) 'अणुपरिमाण' मिति व्याकृत्य द्व्यणुकपरिमाणमपि पारिमाण्डल्यशब्दादभि-

## तद्विमर्शः.

नैतद्युक्तम् । संस्थानस्य परमाणावङ्गीकारे अनवस्था दोषस्य जागरूकत्वात्। तथाहि, द्रव्यस्य हि विभागे विभक्ता भागा क्रमशः क्षुद्रः, क्षुद्रतरा भवन्ति । किन्त्वेतत्क्षुद्रतरत्वप्रसङ्गस्य किञ्चिन्निवृत्तिस्थानमवश्यमास्थेयम् । तथा च यदपेक्षया किमपि क्षुद्रं नास्ति, यद्धि सर्वापेक्षया क्षुद्र, तत्रैव तस्य निवृत्तिस्वीकरणीया, तच्च द्रव्यं निरवयवमिति चोररीकरणीयं, नो चेत्प्रागुक्तदिशानवस्थादिदोषाः स्युः । तथा च प्रागुक्तयुक्तिजाले निरवयवपरमाणोस्सिद्धौ विलक्षणावयवसयोगरूप सस्थानं कथ सिध्यति ? एवञ्च संस्थानरूपहेतुः पक्षे परमाणौ नास्तीति स्वरूपासिद्ध इति ॥

## ३. संयोगः.

I. ननु एकस्मिन्मध्यस्थाने एकः परमाणुरास्ते । तदा तस्य पूर्वपश्चिमदिग्भ्यां द्वौ परमाणू आगत्य मध्यस्थितपरमाणुना सह संयुज्य व्यवधानं कुरुतः । अनेन व्यवधानेनैवमनुमातुं शक्यते, यन्मध्यस्थः परमाणुः पूर्वभागे पूर्वस्थपरमाणुना एव परभागे पश्चिमस्थपरमाणुना संयुज्यते इति । सत्येव तस्यान्तरावर्तिनः परमाणोः पूर्वभाग अपरभागश्चेति अवयवद्वयं सिध्यति । एवमेव सर्वेषामपि परमाणूनां विभिन्नपरमाणुभिस्संयोगस्य जननात्तत्संयोगवत्त्वरूपहेतुत एव सावयवता सिध्यति ॥

II एवं एक एव परमाणुः मध्यवर्ती एकदैव षड्भिरणुभिस्साकं युज्यते । तस्माच्छडश इति स्वीकर्तव्यम् । कुतः ? एकस्मिन्नेव

---

प्रति । पारिता मण्डलमेपान्ते पारमण्डलास्तपा भाव पारिमाण्डित्यमिति विग्रहमाभियुक्ता निरूपयन्ति ॥

षट्संयोगा नोत्पत्तुमर्हाः । भिन्नभिन्नदेशेष्वेव भिन्नभिन्नसंयोगा जायन्ते । यदि परमाणोरेकस्मिन्नेव स्थाने संयोगषट्कं जायते इत्यङ्गीक्रियते तदा "पिण्डस्स्यादणुमात्रकः'—सप्तकयोगाज्जायमानं द्रव्यं परमाण्वात्मकमेव भवेत् । न स्थूलतां प्रतिपद्यते । तेन च न दृश्यो भवेत् । भिन्नभिन्नदेशे संयोगे हि द्रव्यस्य प्रथिमा विस्तृतिर्वा जायते । परमाणोर्विभिन्नदेशाभावे तत्कथं भवति? वस्तुत एकस्मिन्नेव प्रदेशे बहवस्संयोगा नोत्पत्तुमर्हन्ति । एवं परमाणोरवयवाभावे तेन सह बहूनां परमाणूनां सयोग एव न जायते । किन्तु मध्यस्थानस्थितपरमाणोः षड्भ्यो दिग्भ्यः षाड्भिः परमाणुभिस्संयोगो जायते, तस्मात्परमाणूनां षडंशताङ्गीकरणीये*ति चेत् ॥

* अत्रोद्योतकरः 'अयमेवार्थः कारिकया गीयते' इति निरूप्य 'षट्केन युगपद्योगात्परमाणोष्षडंशता । षण्णा समानदेशत्वात्पिण्ड. स्यादणुमात्रकः' । इति विज्ञानाचार्यवसुबन्धोः 'विज्ञप्तिमात्रतासिद्धि' प्रबन्धान्तर्गत 'विंशतिकाकारिका' गतं पद्यमेवोद्दधारेत्यत्र नास्ति विशयलेश । परन्तु प्रोक्तकारिकयास्तृतीयपादे 'षण्णां समादेत्शवा' दिति पाठो दृश्यते । अयमेव पाठस्साधायानिति वसुबन्धुर्व्याख्ययापि निर्विचिकित्समेव ज्ञातुं पार्यते । तस्मान्न्यायवार्त्तिके सर्वदर्शनसङ्ग्रहे च (बौद्धदर्शने) मुद्रितः प्रकृतो नेति ज्ञायते । न्यायवार्त्तिके पुरतः 'षण्णां समानदेशत्वादिति वाक्यं' इति उद्योतकरीयोक्तिरपि प्रोक्तमवार्थं द्रढयति । तस्मात्प्रोक्तपद्यस्यान्यविधपाठः संशोधकानवधानमूलक एवेति प्रतिभाति । उद्योतकरश्चोपर्यपि विज्ञानवादपराचिकीर्षया 'विंशतिकाकारिकान्तर्गततृतीयपद्योक्तविषयं (देशादि नियमसिद्धः स्वप्नवत्प्रेतवत्पुनः । सन्ताननियमस्सर्वैः पूयनद्यादिदर्शने ॥ ३ ॥ विंशतिकाकारिका) निराकृत्य सप्तमकारिकायाः (कर्मणो वासनान्यत्र फलमन्यत्र कल्प्यते । तत्रैव नेष्यते यत्र वासना किन्तु कारणं ॥ ७ ॥ विंशतिकाकारिका) पूर्वभागं व्याकृत्य निजसिद्धान्तोपरि दोषं पर्यहार्षीत् । तस्मादुद्योतकरः विज्ञानवादिवसुबन्धोर्विंशतिकाकारिकां खण्डयित्वैव निजमतं समर्थयामासेत्यत्र नास्ति विगानं ॥

वसुबन्धुरयं विज्ञानवादे प्रमुखाचार्यासङ्गस्य कनिष्ठस्सहोदरः । प्रप्रथमयं हीनयानबौद्धसम्प्रदायान्तर्गतसर्वास्तिवादिवैभाषिकसम्प्रदायप्रविष्टोऽपि परं असङ्गप्रभावेण

॥ श्रीः ॥

# उपोद्घातः

---

शुभानघनमामेयगुणौघमणिमण्डितम् ।
वन्दे सुधांशुनिलयं धाम तत्परदैवतम् ॥

अथात्रभवन्तः सहृदयहृदयसंवननिपुणतमनिरुपमललिततमपद-जटिलबहुलकृतिरचनपटुतरशुभनिजाधिषणाः निखिलजगदुदयविभवलय-विलसितनिगममयनिश्वासितहयवदनपदनलिनयुगसततपरिचरणजनितप्रम-दभरभरितहृदयाः नयनरसहयशशि १७६२ समशकनृपसमये विकारि-वत्सरे निजे ज्येष्ठे मासि कृष्णदले तृतीयायां शनिवासरे श्रवणभे निशि वृषभलग्ने धरणितले कृतावतरणाः वाङ्मनसामेयमहिमशालिनः श्रीकृष्ण-ब्रह्मतन्त्रपरकालसंयमिवराः स्वस्य चतुस्सप्ततितमे वयसि जरसोपनतं प्रबन्धविनिर्मितिभगवदपचितिमुखकर्मप्रतिरोधकमान्ध्यमपूर्वमहाभिषङ्मणि फणिगिरीशकृपापाङ्गभेषजैकापनोद्यमिति दृढं मन्वानास्तदपजिहीर्षवो रसगुणवसुभू १८३६ समे शके प्रमादिशरदि मार्गशीर्षे शुक्लच्छदे प्रणिन्युः परदैवतवृषगिरिपतिशुभतमगुणाभिधायकं शतश्लोकपरिकर्मितं रसभरितं भावगभीरं श्लेषयमकादिबहुचमत्कृतिपरिमण्डितं 'लोचनोल्लासं' नाम किमपि ग्रन्थरत्नम् ॥

ग्रन्थेऽत्र विद्योतमानासु चमत्कृतिषूपायनीक्रियन्ते त्रिचतुरा एव सहृदयेभ्यः—

(१) यथा 'विलुसे कित्वेन प्रथितिमयति प्रत्यय इतः' इति सप्तदशे पद्ये प्रेक्षणार्थकाद्दृशेः संपदादिभ्यश्चेति करणार्थक आर्धधातुके

क्विपि प्रत्यये कृते तस्य लोपे पुगन्तलघूपधस्यचेति लघूपधोपाधिके गुणे प्राप्ते क्ङितिचेति तत्प्रतिषेधे दृशीतिरूपमिति प्रक्रियां मनसि निधाय श्रीश तादृशि दृशि स गुणः प्रतिक्षिप्तः अदूप इति यावत् मम दृशि तु परं पटलोन्मूलनजनैर्मल्यरूपं गुणं विधाय प्रदर्शय, त्वमसि गुणानामावासः तव किं नाम दुष्करमिति दृग्गुणपदयोश्चमत्कृतिः प्रादर्शि ॥

(२) 'रुगत्यन्तं शान्तामपि मम दृशं दूषयति या' इति द्वाविंशे श्लोके नैसर्गिकजकारशकारान्ताभ्यां रुग्दृक्शब्दाभ्यामकारिहृद्योयमुल्लेखः हरे यापटलरूपिणी रुक् शान्तामुपशान्तामपि परत्र शकारान्तां मे दृशं दूषयति तस्या अन्त्यजाया अन्तिमकुलजायाः अन्यत्र अन्तिमजकारयुतायाः सा शान्तोपहिंसनरूपा प्रकृतिः निसर्गः अनिवार्या खलु, अतस्तेऽग्रीया प्रथमकुलजा अपरत्र प्रशस्या दृक् रुजोपहतां मे दृशं शोधयतु विपदि शुद्धाः स्त्रियः स्त्रीणां साह्यं विदधते हि दृक्छब्दस्य स्त्रीत्वादिति भावः इति ॥

(३) 'गदोयं चक्षुर्मे भवदवरजन्मा व्यधितवान्' इत्यष्टाविंशे पद्ये गदाग्रज इति भगवन्नाम्नि चमत्कृतिरियं व्यतानि, शौरे, भवदनुजोयं तिमिररूपो गदो रोगः मे चक्षुर्व्यधितवान् त्वं गदाग्रजः गदस्य व्याधेरन्यत्र गदनाम्नोऽग्रज इति निगदामि कृपणे मयि यदि तवास्ति कृपा तर्ह्येनं निगृह्णीष्व । सतां खलः कनीयानपि निग्राह्यो हि इति ॥

(४) 'दृगेषा म दुश्शासनघनरुगाच्छादनहठा' दिति सप्तत्रिंशे श्लोके दृशि द्रौपदीत्वमधिरोप्य श्रीकृष्ण विपदपनयात् तां त्रायेथा इति संप्रार्थ्यते । 'कृष्णार्जुनरुचिघना' कृष्णार्जुनयोर्या रुचिः प्रीतिः तया घना सान्द्रा परत्र कृष्णा नीला अर्जुना धवला च रुचिः कान्तिः तया घना ममैषा द्रुपदजारूपिणी दृक् 'दुश्शासनघनरुगाच्छादनहठाकृति-

क्षोभात्' घना रुक् द्युतिर्यस्य तत् घनरुक् तच्चतत् आच्छादनं घनदीप्तिकमंशुकं पीताम्बरमिति यावत् । तस्य दुश्शासनकर्तृका हठात्कृतिः बलवदाकर्षणं तज्जनितक्षोभात् । अन्यत्र दुश्शासना अनिग्राह्या घना या रुक् पटलरूपा तस्या आच्छादनं पिधानं तस्य हठात्करणक्षोभात् साश्रुनयना नाथं दयितमपरत्र भगवन्तमपश्यन्ती क्लिश्यति तामिमां कृपयाऽव्या इति ॥

प्रेष्ठाः! मुहुरिदमप्यपरमुपायनीकुर्मः प्रासङ्गिकं संक्षिप्तं प्रशस्यमदसीयं चरितम्—

इमे खलु कर्णाटदेशान्तर्गतनूत्नदुर्गा(होसदुर्ग)भिजनाः श्रीशैलघनगिर्यप्पलार्यकुलजतातार्यद्वितीयतनुभवाः कृष्णाम्बागर्भसम्भवाः कौण्डिन्यनदीतटोपगश्रीश्रीनिवासब्रह्मतन्त्रपरकालसंयमिवरोपदिष्टश्रीहयानन—प्रब्रमहिमसमेधितप्रतिभाष्षोडशे वयसि विदधिरे श्रीपरकालगुरुविजयं नाम कमपि चम्पूप्रबन्धम् । अधिजग्मुरेते तादृशग्रन्थश्रवणप्रमुदितेन तृतीयेन श्रीकृष्णसार्वभौमेन सभाजिताः कविसार्वभौमबिरुदम् ॥

ते—तादृशश्रीरङ्गनाथब्रह्मतन्त्रपरकालदेशिकेन्द्राज्ञामुत्तंसयता श्रीचामराजमहीन्द्रेण प्रार्थिता वनपर्तिसंस्थानादानीता नागखवसुभू(१८०८) समे शके पार्थिववत्सरे भाद्रकृष्णदशम्यां श्रीहयग्रीवास्थान्यां मूर्धाभिषिक्ता बभूवुः ॥

अथ ते न्यवेदयन् बहोः कालादनुवृत्तमतिप्रवृद्धमनपनोद्यं सपञ्चपञ्चाशत्सहस्रलक्ष(१५५०००)प्रमितमृणं श्रीमच्चामभूपालमौलये ॥

इदं चावोचंस्तस्मै ते, "अयि! चामभूपमणे! 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते' इति श्रुत्युक्तदिशा नैसर्गिकमृणत्रयमपाकुर्वन्तो मोक्षाश्रममधिष्ठिता अपि गुरुतममृणमिदमपाकर्तुं न वयं प्रभवामः ॥

अतोऽत्रार्थे प्रतिभूपदमधिष्ठाय भवता वयमनृणाः कार्याः" इति। तदात्वमीदृशार्थबोधकं चमत्कृतिकरम्भितं पद्यमिदमन्वग्राहि—

कला दत्वा दत्वा क्षपितनिजधाम्नि द्विजपतौ
श्रियं दातुं को वा प्रभवति विनेनाद्वसुमतः ।
अमुं दर्शंदर्शं निजवसुभिरुज्जीव्यमयम-
प्युदस्येच्चेद्वृद्धिं कथमयमियाच्चामनृपते ॥ इति ॥

किञ्च द्विनेत्राष्टशशि १८२२ समे शके विकारिवत्सरे ज्येष्ठमासे कृष्णपञ्चम्यां श्रीवाणीविलासदेवी श्रीकृष्णमहीपतिवरयोश्चकाङ्क्नावसरेऽमीभिरपेक्षितं जीर्णतमहयवदनसदनोद्धरणमङ्गचकार्ष्टां तौ, गुरुभक्तिगरिम्णा—नातिचिरादेव रसद्विनागभू १८२६ समे शके शोभकृद्वत्सरे ज्येष्ठमासि नूतनश्रीमठनिर्मापणपुरस्सरं निरन्तरनिरन्तरायहयमुखकैङ्कर्यनिर्वहणेन कृतार्थितजनिं वदान्यमणिं तुर्यं श्रीकृष्णसार्वभौममेवमनुजगृहुस्ते—

महानन्दश्रीमद्व्रजविभवविश्राणनपटु
यशोदां सद्वृत्तिं कुशलजनयित्रीं प्रथयसे ।
अतो नूनं कृष्णस्त्वमसि विशयं कोऽत्र कुरुता
मृणग्राहग्रस्तं गुरुमपि ततो मोचयसि भो ॥ इति ॥

एवमिमे महाभागाः सभक्त्युन्मेषं श्रीवृषगिरीशमभिष्टूय तत्करुणारसपरिप्लुतापाङ्गबलान्निजनयनजपटलस्य व्यपगमेन प्रकृतिस्थां दृशमापेदिरे ॥

अयमंशो ग्रन्थकृद्भिरेव ग्रन्थान्ते सुस्पष्टमभ्यधायि—

'अमीभिः प्रीतस्त्वं सदय नयनोल्लाघमतनोः'

तस्मादिदं लोचनोल्लासं नाम स्तोत्ररत्नं सभक्तिप्रकर्षमनुसन्दधतां न कदापि नयनक्षतिः स्यादिति दृढं विश्वसिमः ॥

॥ श्रीहयवदनपरब्रह्मणे नमः ॥

# लोचनोल्लासः

शेषाद्रीशानमाशाशे स्तोतुं हेतुं जगज्जनेः ।
सोपतापदृगुल्लाघरूपकल्याणलिप्सया ॥ १

जगच्चक्षुश्चक्षुस्त्वमिति वदते शास्त्रनिचयो
नमच्चक्षुश्चक्षुः कथमिव भवेरब्जनयन ।
इति स्थेम्नो भूम्ना तव पदयुगेऽस्म्यर्पितभरो
न जाने किं कुर्या इति तदपि पश्येयमचिरात् ॥ २

अयं मादृग्भूयाद्वपुरवसिताविंत्यनघ ते
मयीन्धे सङ्कल्पो भवतु च तथैवायमथकिम् ।
इदानीमेतस्मिन्वपुषि भवतान्मादृगिति ते-
त्युदारा प्रेक्षा स्यादिति तु पुनरभ्यर्थनमिदम् । ३

यथा भूम्यामन्धोऽन्ध इति निगदन्नक्रममियां
तथा कार्षीस्तादृक्छ्रिय इह मम श्रीश कृपया ।
विना दृक्छक्त्याऽन्धोऽन्ध इति बहु सीदेयमधुना
पुनर्दद्यास्तादृक्छ्रिय इह यथा लोकविभवम् ॥ ४

अदृष्टं किञ्चित्स्याद्यदि मयि सुधासारसरसां
निदध्यास्त्वं दृष्टिं क्षणमपि रमानाथ कृपया ।
ततो निर्मृष्टान्तर्बहिरपि च मे दृष्टिरनघा
भवन्तं पश्यन्ती सुचिरमपि तत्रैव रमताम् ॥ ५

भवद्रूपं दृष्ट्वा सपदि मुनयो दण्डकवने
श्रियः कान्ताऽभूवन् सुदृश इव रागान्धनयनाः ।
अहं त्वेतर्हि त्वामनुभवितुमापादमकुटं
सुदृग्भूयं प्राप्तुं चिरमभिलषाम्यातनु कृपाम् ॥ ६

ननु त्वन्नामानं द्रुपदतनयां नेत्रपटल
प्रदानादावीरित्यश्रृणवमिहाख्यानकगिरा ।
इदानीं मां कृष्ण त्वदभिधमिमं नेत्रपटल
प्रदानादव्याश्चेद्भवति तदिदं प्रत्ययपदम् ॥ ७

सखे मास्मग्लासीस्त्वमपनयनं देहधृतितो
विषादो यस्तेऽसौ तमपनय नन्देहधृतितः ।
जगन्नेत्राऽत्मा यत्सुखनयनतामन्धककुले
विशेषात्संप्राप्तस्सुखयति दृशा त्वां यदुपतिः ॥ ८

विरूपाक्षः फालोज्वलदनलतीक्ष्णान्यनयनो
दृशान्धानां नृणां स किमुपकरोत्यन्धकरिपुः ।
स एवेष्टे भास्वच्छिशिरकरनेत्रोऽन्धककुलं
परित्राता दृग्भ्यां जगति सदृशस्तान् रचयितुम् ॥ ९

यथाप्रज्ञं प्राज्ञप्रगुणजनभोग्यं तव नव
स्तवव्याख्यानादिप्रणयनससंरम्भहृदयः ।
विहीनो दृक्शक्त्या लिखितुमपटुर्निश्वसिमि मा
मिमं श्रीकान्त त्वंतदुचितदृशं साधु तनुयाः ॥ १०

अहं गोविन्दस्स्यामिति गलितदृक्छक्तिरधुना
भजे गोविन्द त्वां कलयसि तथा तत्क्रतुनयात् ।

ततोऽहं तां गां त्वत्परिचरणहेतोः प्रहिणुया
मिमां गामन्यामप्यथ ननु तथा तत्सहचरीम् ॥ ११

अदाश्चक्षुर्दिव्यं समरभुवि कृष्णाय कृपया
भवद्रूपं द्रष्टुं विततभुवनं दिव्यमनघम् ।
त्वदर्चां द्रष्टुं मे समभिलषते प्राकृतदृशं
प्रदातुं त्वन्नाम्ने श्रम इह कियान् कृष्ण भविता ॥ १२

अहो तारामेतां घनपटलमाच्छादयति य
त्तदेतद्विध्वस्तं वरद तव दृक्स्पर्शनवशात् ।
इतो भास्वज्ज्योतिः परमुदयतीक्षातिसुखदं (सुभगं)
गलत्यान्ध्यं सर्वं तिमिररचितं कोऽ(ना)त्र विशयः ॥ १३

तपस्तप्त्वेत्येषा वरद भवता लोचनयुजा
कृतिं क्लृप्तां ब्रूते श्रुतिरिह विना लोचनमहम् ।
कथं कुर्यां तुष्ट्यै तव कृतिमिमामित्यनुपदं
परं निर्विद्ये मां विरचय तथा लोचनजुषम् ॥ १४

दृशाहीने दीने नमति मयि नाथेक्षणरुचि
तव श्रीमन्नाथेक्षणरुचिमुपेयामकलुषाम् ।
उदारा मे भूयाज्जलजनयनाथेक्षणरुचि
र्मयेषा तेऽनाथे क्षणरुचिरिवाप्नोतु न लयम् ॥ १५

क्वचित्कान्तां स्वादौ क्वचिदथ च शान्तां प्रकृतितो
दृशं प्राहुः प्राज्ञा इह सहजशङ्कास्पदमपि ।
सदा कान्तां शान्तां मम दृशमशङ्कां वितनुया
जगन्नामव्याकृत्समितशकनो नाथ स भवान् ॥ १६

विलुप्ते किन्त्वेन प्रथितिमयति प्रत्यय इतः
प्रतिक्षिप्तं मन्ये दृशि गुणमिहौपाधिकमपि ।
विधाय श्रीजाने मम दृशि गुणं दर्शय परं
गुणानामावासस्त्वमसि तव किं दुष्करमिदम् ॥ १७

गुणोऽभूत्प्रत्यस्तो दृशिपदविदा तेन भवता
गुणं संधायारं परमपरधाऽऽदर्शय दृशम् ।
अकर्तुं कर्तुं वा गुणमितरथा वा रचयितुं
भवत्तोऽन्यः को वा प्रभवति पुमानीश जगताम् ॥ १८

सुधासारस्मेरैरपरिमितसारैर्ननु हरे
कटाक्षैस्ताद्दक्षैर्मम दृगुपतापं परिहरेः ।
इतः प्रत्येमि त्वान्निखिलभवतापोपशमनं
वधं सालच्छेदात्तपनतनुजो वालिन इव ॥ १९

सविस्रम्भं लक्ष्मीदशशतविवृत्यै प्रववृते
मया निर्वृत्ताभूदविशददृशा हन्त न च सा ।
दृशोर्लक्ष्मीं दद्या यदि मम तथा तामविकलां
वितन्वन्नक्ष्णोस्ते श्रियमुपहरेयेत्यभिलषे ॥ २०

रुगेषा दृक्चेयं मम सहजशाऽन्ते खलु हरे
नयोराद्या त्वन्त्यां व्यथयति यदाच्छादयति च ।
तदेतद्वैजात्याद्भवतु तव दृक्श्यामकदृशं
न कुर्यात्साजात्यात्कथमिव विबाधां द्युति (रुचि) मतीम् ॥ २१

रुगत्यन्तं शान्तामपि मम दृशं दूषयति याऽ-
न्त्यजाया रुतस्यास्साप्रकृतिरनिवार्या खलु हरे ।

दृगेषा तेऽम्रीया दृशमुपहतां शोधयतु मे
स्त्रियश्शुद्धाः स्त्रीणां विपदि ननु साह्यं विदधते ॥ २२

अपाकृत्य क्षिप्रं पटलपटलक्ष्यां यवनिकां
कटाक्षस्तेऽब्जाक्ष स्फुटगुणघनोत्तालगरिमा ।
त्वदङ्गेऽसौ रङ्गे तव चरितसङ्गीतमधुरश्रिया
वाचा सख्या सह दृशमिमां नर्तयतु मे ॥ २३

रुजा कृत्तां भिन्द्याश्शुचमनघ मे त्वं नयनयो
रुचं चातन्वीथा यदि भवसि धन्वी रघुपते ।
ततश्चाहं सिद्धाश्रमविहृतिरस्तारिनिचयो
विधातुं शक्तस्स्यां नियम भवदिज्यामविकलाम् ॥ २४

दृगेषा मे पङ्काविलपटलसत्तामुपगता
न योग्या त्वत्पादद्वितयपरिचर्यादिषु हरे ।
कृपासारैर्धौतां विशदरुचिमत्यन्तमसृणां
शुकान्तां सेवायां तव नियमयैनामविरतम् ॥ २५

दुराच्छादं क्षुद्रं पटलमवधूयोपरिपत
त्तृणप्रायं प्राप्तस्वभवनतयाऽथातिसुभगा ।
त्वया दत्तश्रीका तदनु भवतो धाम रुचिरं
समासाद्य स्वैरं विहरतु दृगत्रैव सुचिरम् ॥ २६

कचित्संसर्गोद्यद्विकृतिरुपतापैरुपहत
स्वभावैतावन्तं समयमधुना त्वत्करुणया ।
निवृत्ताज्ञानार्चिस्सरणिमुपसद्यातिविमल
स्वरूपाविर्भावादनुभवं दृक्तां मम विभो ॥ २७

गदोऽयं चक्षुर्मे भवदवरजन्मा व्यधि(स्थगि)तवान्
गदाग्रीयश्शौरे त्वमिति निगदाम्येष भवते ।
निगृह्णीष्वैनं त्वं यदि मयि कृपास्तीह कृपणे
खलो निग्राह्यत्वं व्रजति हि कनीयानपि सताम् ॥ २८

समष्टिं व्यष्टिं वाऽच्युत भुवनसृष्टिं कलयितुं
सधृष्टिं दृष्टिं मय्यमृतमयवृष्टिं वितनुया' ।
सुमृष्टिं दृष्टिं तां विसरदुरुघृष्टिं दधदहं
सुपुष्टिं चेष्टिं ते कलितबहुतुष्टिं वितनवै ॥ २९

दयाधारैः स्मेरैरसुकृतविदूरैरघुपते
महोदारैः स्फारैरिपुहृदयदारैर्मम भवान् ।
सुगम्भीरैर्धीरैरवितनतवारैर्दृशमिमां
दृगासारैस्सारैरनुपधिविसारैस्सुखयताम् ॥ ३०

दृगेषा सम्मूढाऽमयरचितमायावृतिवशा
दशक्ता द्रष्टुं त्वद्वपुरनघमत्युज्वलतमम् ।
कियत्येषा ते स्यात्त्रिगुणमयमायावशयितु
स्तव श्रीमन् कुर्यास्तदपसरणाय प्रयतनम् ॥ ३१

भजेयं त्वां सर्वादितितनयनव्याऽधिकरणं
व्रजेयं स्तुत्यै ते शमितनयनव्याधि करणम् ।
वदेयं प्रीत्यै ते निगमनयनव्याविकरणं
त्वयि न्यस्तं मेन्तस्त्वमपनय न व्याधि करणम् ॥ ३२

अपाङ्गैरुत्तुङ्गैः कलितभवभङ्गैर्दृशमिमां
कृपाङ्गैश्श्रीरङ्गैर्जनितशुभसङ्गैस्स्नपय मे ।

अथैषा निर्दोषा विलगदभिलाषा तव पदे
विशेषात्सत्तोषाऽच्युत सहमनीषा विहरताम् ॥ ३३

इदनीमक्ष्णोर्मे यदुपनतमासीत्पृथुलग
द्गदत्वं नाथ त्वं तदपहरसे चेन्न कृपया ।
अशक्तस्तर्हि त्वद्गुणनुतिविधाने पृथुलग
द्गदः कण्ठेपि स्यां तव किमिदमिष्टं प्रियनुतेः ॥ ३४

गदाघातः क्वायं क्व मम मृदुलं नेत्रयुगलं
कथं सोढव्यं वा कमलनयनाऽलोचय मनाक् ।
परित्रातर्यत्र प्रभवति भवत्युद्धृतगदेऽ
प्ययं चेदुद्दामा निगद सुदमः केन भविता ॥ ३५

रुचाराहु (स्वभूच्छाया) ग्रासक्षपितसहजालोकविभवं
जगच्चक्षुस्सर्वं तिमिरमयमेवाकलयति ।
त्वदीक्षातश्शुद्धं भवतु च तमोमोक्षवशतः
सपर्यां ते कुर्यां त्वदनघकृपाप्लावविमलः ॥ ३६

दृगेषा मे दुश्शासनघनरुगाच्छादनहठा
त्कृतिक्षोभात्कृष्णार्जुनरुचिघना साश्रुवलना ।
अपश्यन्ती नाथं कमपि कृपणा क्लिश्यतितमा
मिमां त्रायेथास्त्वं विपदपनयात्कृष्ण कृपया ॥ ३७

विदीना सीतैषाऽऽविलपटलसत्तातिमलिना
त्वदीक्षाविश्लेषादनघ दृगतीवाश्रुललिता ।
अपारक्षोभामाकलितशुचमेनां त्वमवशां
न चेत्राता को वा तदसि शरणं त्वं रघुपते ॥ ६८

सरूपं सच्चापं तपनकुलदीपं धृतमहा
कलापं दुष्प्रापं चलमतिमिरापन्निरसनम् ।
अवापं त्वां श्रीपं शरणमनुरूपं रघुपते
विलोपं साटोपं नय दृगुपतापं मम विभो ॥ ३९

न भूयानायासो मुरहर भवेन्नेत्रपटलं
ममैकं हर्तुं ते यदिह भगवन्नन्दतनय ।
अहार्षीर्भूयिष्ठं व्रजमृगदृशां नेत्रपटलं
क्रिया भूयोऽभ्यस्ता न भवति हि कस्याप्यसुकरा ॥ ४०

जगत्यां ये वृद्धाः करणपटुतात्यर्थविधुराः
पुनर्बालास्तेमी इति न वितथं शास्त्रगदितम् ।
यदेष प्राप्तोऽहं जरसमधुनोन्मिष्य नयने ।
पुनस्स्वामिन् वर्णग्रहणपठने चाप्यभिलषे ॥ ४१

सदादित्वं शान्तत्वमपि खलु नौ तुल्यमुभयोः
स्वरे किञ्चिद्भेदो यदि भवतु तौल्यं तु बहुलम् ।
तदेषालीदृङ्मे तिमिरपिहितेऽतीव सकला
दिगप्यासीन्नष्टाऽच्युत विमलयैते करुणया ॥ ४२

शुभावासं प्रावृड्जलदनिभभासं हृतनम
द्विपत्रासं त्वां श्रीसख रुचिरहासं चरणयोः ।
प्रपद्याऽसंधैर्योदितविशदतासंचितमति
र्दृगुल्लासं कुर्या धुतरुगवभासं मम विभो ॥ ४३

रुगेषा चान्तास्तादृशी मम पुरा याऽत्र सहजा
रुगेषाचान्तास्तात्सुभृशमधुना या तु सहजा ।

इहैकस्याप्यभ्यर्थन इतरत्सिध्यति तथा
प्यतीवाशासेऽहं चपलमतिरेतद्द्वयमपि ॥ ४४

महाभव्याधीशो दृशि वितनुया निग्रहमथो
महाभिव्याधीशश्शुभकलनयाऽनुग्रहमपि ।
भवेत्कोवा कर्तुं सुशुभमशुभं हर्तुमपि वा
समर्थोऽन्यस्त्वत्तो जगति जगतां नाथ वद मे ॥ ४५

पुमानप्येषोऽहं हरिणनयनत्वं गदवशा
दगायास्तामेतत्परमुपनतं क्लैब्यमपि मे ।
समाधातुं चैतत्परमपुरुष त्वं प्रभविता
न चेत्स्त्रीप्रायं त्वत्सकलमितरत्किं प्रभवति ॥ ४६

सितैषा मे दृष्टिः प्रचुरतरवल्गामयगुणै ।
स्समायातु स्वैरं स्वविषयमशक्ता विलुठति ।
कटाक्षैस्तादृक्षैः कलितनतमोक्षैस्त्वमसि ता
मिमां संतन्वन् स्वं गमय विषयं श्रीसख विभो ॥ ४७

त्वदर्चाप्रत्यूहं बलिधरणिदाने रचयतः
कवेरेकं नेत्रं व्यरचि भवता वामन हृतम् ।
सदा निर्विघ्नां ते रिरचयिषतोऽर्चां मम कवेः
हृतं चेद्दैत्यारे नयनयुगमेतत्किमुचितम् ॥ ४८

व्यातारीस्त्वं कस्मै च न यदुशिशो गोदशशतीं
स तावत्त्वद्गोवर्धनयजनविघ्ने प्रववृते ।
चिकीर्षोर्मे गोवर्धनयजनमव्याहतमिह
प्रदातुं गोयुग्मं कियदवधि चिन्तां कलयसे ॥ ४९

सहस्रं गाः कस्मै चन पटुतरास्संप्रवितर
ञ्छ्रिया तं तादृश्या युतमनघ भास्वन्तमतनोः ।
श्रमो भूयान्माभूत्तव यदि तु मे पुष्यसि जर
द्दवीमेकां भास्वानहमपि लभेय श्रियमिमाम् ॥　　५०

मुकुन्दं गोविन्दं सकलशुभकन्दं त्वदितर
द्विनिन्दन्सानन्दं भवदहनकन्दं ननु विभो ।
अमन्दं त्वाऽविन्दं मृदुपदरविन्दं रुजमिमां
विभिन्दन्निस्पन्दं त्वयि घटय मन्दं मम दृशम् ॥　　५१

दवीयोदर्शित्वं यदिहसहजं तद्धनगद
प्रकृत्या प्रत्यूढं प्रथयसि यथावद्यदि विभो ।
तदा सर्वं हेति श्रुतमखिलपश्यत्वमपि मे
प्रकृत्या प्रत्यूढं ज्वलयसि किलैनां विघटयन् ॥　　५२

सहस्राक्षत्वेन श्रुतिषु विदितोऽसि त्वमनघ
स्स्वपर्यङ्के शेषं द्विगुणितसहस्राक्षमकरोः ।
सहस्रांशन्यूनेऽच्युत मयि ततोऽपेक्षणयुग
प्रकाशं शेषेऽस्मिन्नपि वितरितुं चिन्तयसि किम् ॥　　५३

फणीन्द्रक्षोणीभृद्वरमकुटमाणिक्य तव दृक्छलाका
भिन्नायाः पटलनिभशुक्त्या विहृतयः ।
अतिस्वच्छा मुक्ता दधतु मम दृग्वृत्तिवपुषो
भवत्पादाम्भोजे सततमिह पुष्पाञ्जलिदशाम् ॥　　५४

दृगेषा भृङ्गी मे घनपटलरुक्कैतकरजः
परिध्वस्ता स्वैरं विचरितुमनीशा विलुठति ।

रजो निर्धूय त्वत्सदयनयनस्पर्शनवशा-
न्मरन्दं पादाब्जे तव सपदि सिस्वादयिषति ॥ ५५

नितान्तं तीव्रोष्मागमतपनरुग्व्याहततया
दृगेषा दिङ्मूढा न किमपि विजानाति तदिमाम् ।
तव ज्योत्स्नासारैरमृतशिशिरैरञ्जय विधो
ततः पश्यत्वेषा विगतपरितापा तव तनुम् ॥ ५६

अहो दैवात्त्वत्तः परिणमनकाले विदलिता-
त्फणीशानाद्रीन्दो पटलनिभकोशाद्विगलिताः ।
दृशो मे खञ्जन्यास्तरलगतयो वृत्तिशिशव-
स्त्वया स्वामिन्पाल्यास्तव चरणनीडे विनिहिताः ॥ ५७

इदं चक्षुर्ध्वस्ते तव करुणया गाढपटले
विभिन्ने ब्रह्माण्डे विधिरिव समाविष्कृतवपुः ।
प्रकाश्येदं विश्वं भुवनमरविन्दाक्ष सततं
त्वदाज्ञाकैङ्कर्यं सकलमपि निर्वर्तयतु मे ॥ ५८

विधायालं स्थूलं पटलमतिमालिन्यजटिलं
वसाना सत्पक्ष्मांशुकमतितरामुज्ज्वलदशम् ।
त्वदीक्षासौभाग्यं चिरविरहितं प्राप्य भगवं-
स्त्वदाश्लेषायैषा विलसदभिलाषा दृगिह मे ॥ ५९

फणिक्ष्माभृद्भास्वन्नयनवलनैरंशुविसरै-
र्व्युदस्यन्निश्शेषं पटलतुहिनं गाढमलिनम् ।
नयन्नुत्फुल्लत्वं नयननलिनं दर्शय तत-
स्स्वयं प्रादुर्भूतां श्रियममलमात्मानमनिशम् ॥ ६०

असारं संसारं दुरधिगमसारं प्रविशतः
सुदूरं कान्तारं व्यसनशतघोरं मम हरे ।
उदारं निस्तारं भवत इह धीरं न कलये
विकारं रुग्द्वारं क्षपय कृपयारं नयनयोः ॥ ६१

गतं चक्षुर्मेस्तान्न खलु मम बाह्येक्षणरुचि
स्त्वया या दत्तां तद्दृगियमनया तेस्त्वनुभवः ।
अथापि श्रीश त्वद्गुणकवनलेखार्चनकथा
न्तरायात्खिद्ये तद्बहिरपिच दृष्टिं प्रथय मे ॥ ६२

न नाथे नाथ त्वां न तव महिलां लोकजननीं
दृशोरुल्लाघार्थेऽच्युत तव दृशावेव कलये ।
इमे ते साजात्याद्विपदपनये संपदि तथा
वितन्वाते मन्ये सहजमुपकारं मम दृशोः ॥ ६३

विलग्नं रुग्जाले दुरितमयवैसारिकतते
दृगात्मानं मीनं विचरितुमनीशं तत इतः ।
विमोच्यास्मादेनं शुभदय परित्रातुमुचितं
त्वमासीर्मीनात्मा ननु भुवनमाविश्य विहरन् ॥ ६४

अमन्दं निर्भिन्दन्पटलमयकोशं प्रविततं
समादायाखेदात्सुभृशमासितां दृष्ट्यसिलतां ।
भवद्वीक्षाशाणक्षतबहुकलङ्कां रिपुजया
द्यते त्वाऽऽहत्य श्रीरमण परमात्मानमवितुम् ॥ ६४

रमालीलाधीनं रचितवरदानं नततते
स्सुपर्वाधीशानं सुभगमहिमानं श्रितवतः ।

# उदन्तसन्दोहः

---

## सनातनधर्मसभा.

बालिकोद्वाहविरोधिनियमप्रतिरोधनाय महाकलाशालायां विद्वद्वरदेवशिखामणिरामानुजाचार्याधिनायकतायां प्रचण्डा काचित्परिषत्सनातनधर्मसभातः प्रादुरभूत् ॥

## विद्यार्थिपारितोषिकवितरणमहोत्सवः.

महाकलाशालायां वार्षिकविनेयबहुमानविनियोगमहोत्सवः महासमारम्भेण निरवर्ति । तत्र च श्री श्री कूडलीमठाधिपाः अध्यक्षपदवीमध्यरुक्षन् । श्रीयुता रामरायाः, श्रीनिवासाचार्याः, शामशास्त्रिणः, अन्ये च माननीयाः सादरमाहूताः सभामलञ्चक्रुः । तदात्वे आस्थानसङ्गीतविद्वद्देवेन्द्रप्पस्य गायनेन, रामरावमहोदयस्य वंशीनिनादेन, वेङ्कटेशदेवरस्य मृदङ्गवादेन च सभ्यास्सर्वेऽपि चित्रार्पितारम्भा इवावतस्थिरे । तदनु कलाशालाध्यक्षा अतीतवार्षिकोदन्तादिकमधिकृत्य निवेदनपत्रिकामपठन् । अग्रासनमलंकृतवन्त श्रीस्वामिनः विद्यार्थिनां समुद्यमं सामोदमभिनन्द्य पाठशालाया उत्तरोत्तरामभिवृद्धिमाशंसमानाः विनेयेभ्यो यथार्हं पारितोषिकाणि अनुजगृहुः ॥

## अधिकारिपरिवर्तनम्.

वत्सरे चास्मिन्नस्मत्कलाशालायामध्यक्षपरिवर्तनमभूत् । प्रागेतत्कलाशालाध्यक्षपदवीं समलङ्कृताः श्री हेच्. योगनरसिंहार्य एम्.ए. महाभागा विद्याशाखीयसंस्कृतपाठशालापर्यवेक्षकपदव्यां विनियुक्ताः प्रतस्थिरे । तत्स्थानीमधिकृता एस्. वि. कृष्णमूर्ति एम्.ए. महोदया

एतच्छालाधिपपदमध्यासीना विराजन्ते । आशास्महे चैतेषां समागतानां, तेषां च निवृत्तानां नैकविधान्धन्यवादान् ॥

### महनीयसमागमः.

मद्रपुरीतस्समागताः विश्रान्तन्यायाधीशाः माननीयाः श्रीनिवासय्यङ्गार्याः महापाठशालावलोकनायाययुः । तत्सभाजनाय सभा काचन सममिलत् । तत्र शालीयविनेयानां पदवाक्यप्रमाणशास्त्रेषु सुमहान्वाक्यार्थः प्राचलयत् । तदेतद्वाक्यार्थजातं श्रावंश्रावमय्यङ्गार्यमहोदयाः प्रभूतानन्दनिर्भरास्संवृत्ताः । तदनु च ते विनेयानुद्दिश्य समुचितवचनान्युदगिरन् । अथ च सर्वैस्सम्मानिताः सर्वानप्यभिनन्द्य निजनिकेतनं ययुः ॥

### शालीयकविताप्रेक्षणादिशक्तिपरीक्षा.

श्रीमन्महीशूरपुरवरनरपालस्य श्रीमत्तुर्यकृष्णराजेन्द्रसार्वभौमस्य द्विपञ्चाशत्तमजन्मदिनमहोत्सवमुद्दिश्य, निर्दिष्टासु कविताप्रेक्षणादिस्पर्धासु उत्तीर्णानां छात्राणां पारितोषिकप्रदानाय सुमहती काचन सभा विहिता । तत्र च श्रीयुतः श्रीनिवासय्यङ्गार्यमहोदय अध्यक्षपदमध्यास्त । माननीयाः वि. सुब्रह्मण्यार्यमहाभागाः इतरे च महनीयास्समागताः । तत्र कलाशालीयैश्छात्रैर्योगासनानि प्रादर्शिषत । अनन्तरमुत्तीर्णनामन्तेवासिनां पारितोषिकाणि वितीर्य काश्चित्सूक्तीरुदगिरदध्यक्षमहोदयः ॥

### श्रीमन्महाराजानां जन्मदिनमहोत्सवः.

श्रीमत्तुर्यकृष्णराजेन्द्रसार्वभौमानां द्विपञ्चाशत्तमजन्मदिनमहोत्सवः कलाशालायां महासमारम्भेणाकारि । तदनेहसि प्रातः भगवतश्शालीयगजाननस्य मङ्गलनीराजनसमनन्तरं, महाप्रभो मङ्गलाशीर्वादांश्चक्रुः पण्डितपुङ्गवाः ॥

## उपन्यासः.

मद्रपुरीतस्समायाताः ब्र. श्री. गणेशशास्त्रिवरेण्याः वैदिकमतमिति विषयमधिकृत्यास्मत्कलाशालायां उपन्यस्यन्तः "हिंदुमतमिति भारतीयमतस्य न प्राचीनं नामधेयं, परन्तु अर्वाचीनैरुद्भावितं, नापि तत्संस्कृतं, अतो भारतीयमतस्य वैदिकमतमित्येव साधु नामधेयं, अस्पृश्या अपि वैदिकमतीया एव, तेपि वैदिकैर्यथाधिकारमवश्यं शिक्षणीया एवे"त्यादि सरभसमभाषन्त ॥

## भारतीयप्राच्यविद्याविपश्चित्सम्मेलनम्.

एतद्वत्सरीयडिसम्बरमासस्य २९, ३०, ३१ तमदिवसेषु भारतीयप्राच्यविद्याविपश्चित्सम्मेलनस्य अष्टममाधिवेशनं अस्यां कल्याणपुर्यां श्रीमत्कर्नाटकरत्नसिंहासनाधीश्वरतुर्यश्रीमत्कृष्णराजेन्द्रनरपालैः परिपाल्यमानं प्रचलिष्यति ॥

१. निम्ननिर्दिष्टान्यस्य सम्मेलनस्य विशिष्टान्युद्देश्यानि---

(क) प्रत्नविद्याप्रणयिनां भारतीयानामन्येषां चान्योन्यदर्शनसंपादनेन तैर्विहितानां प्राच्यविद्यातत्त्वविमर्शनानामेकत्र सङ्ग्रहसम्पादनम्,

(ख) प्राच्यविद्यानामध्ययने तत्त्वानुसन्धाने च विशेषतः परस्परसाहाय्याभिवर्धनम्,

(ग) भिन्नविद्यासु परिश्राम्यतां विदुषां स्वानुसंहितविषयेषु स्वमतप्रकाशनाय, विशेषतस्तत्तद्विद्याभ्यासङ्गवेलयामनुभूतानामभिप्रायविशेषाणामाविष्करणायावसरप्रदानम्,

(घ) प्राच्यविदुषां समाजमूलकस्य पाण्डित्यमूलकस्य च परस्परसंसर्गस्याभिवर्धनम्,

(ङ) परस्परागतायाः अध्ययनतत्त्वानुसन्धानयोः परिपाट्याः समुन्नयनम्,

२. इदं च सम्मेलनं अधोनिर्दिष्टरीत्या चतुर्दशधा विभक्तमास्ते—

(क) वैदिकतदितरसंस्कृतवाङ्मये, (ख) भाषाशास्त्रे, (ग) अरविक्, पर्सियन्, भाषयोः, (घ) पुरातनानामाचारेषु, कथासु, (ङ) दर्शनेषु, सम्प्रदायेषु, (च) इतिहासे, कालनिर्णये, (छ) पुरातनपदार्थतत्त्वसंशोधनशास्त्रे, चिरन्तनलेखनतत्त्वशास्त्रे, तथा मुद्राविद्यायाम्, (ज) ललितकलासु, शिल्पमूर्तिशास्त्रयोः, (झ) कर्नाटक, (ञ) हिन्दी, (ट) ऊर्दु, (ठ) गुजराती, (ड) मराटी, आन्ध्र, तमिळ, मलयाळ, (ढ) ऐरेयन्भाषातत्साहित्येष्विति ॥

३. प्रतिविभागमेकोऽध्यक्षः कार्यदर्शी च भवेताम् ॥

४. सम्मेलनकार्यक्रमश्च प्राधान्येन तत्तद्विभागेषु विद्वद्भिः प्रहितानां प्रबन्धानां वाचनविमर्शने, पण्डितपरिषदं, सङ्गीतकं, द्रुतकवित्वनिरीक्षणं नाटकाभिनयनं चाधिकरोति ॥

५. यदि च पण्डितधौरेयाः वैदिकं दार्शनिकं सामाजिकधर्मसम्बन्धिनं वा विषयमधिकृत्य वाचनार्हतया लिखितान् निबन्धान् विषयसङ्ग्रहविभागसूचकपत्रिकासचिवान्, सेप्टेम्बरमासादर्वागेव कार्यदर्शिनां सविधं प्रेषयेयुस्तर्हि त एव वाचनानुसन्धाननिर्णयाय पण्डितपरिषदि परिगृह्येरन् ॥

## कर्नाटकसाहित्यसम्मेळनम्.

आगामिनि डिसम्बरमासे प्रचलिष्यमाणं कर्नाटकसाहित्यसम्मेलनं प्रायशः दशसहस्रपरिमितकर्नाटकमानवाकीर्णे मोहमयीनामके (Bombay) महानगरे कर्नाटकसाहितीविस्ताराय कारयितुकामैस्तत्रत्यैर्महाशयैराङ्ग्लेयविद्याशालासचिवानां श्रीमतां दिवान् बहद्दूर एस्. टि.

कम्बलीमहोदयानामधिनायकत्वे काचन महती सभा निरमायि । तत्र बहुमतानुरोधं कर्नाटकसाहितीकार्यनिर्वाहकमण्डली आकार्येति निरणायि । मण्डली तु तदाह्वानं सभक्त्युन्मेषं सकृतज्ञं चाङ्गयकार्षीत् । तदर्थं सैव समितिः अतिथीनां समागतानां समुचितोपचाराय सम्मेलनयशस्वितायै च कांचन स्वागतमण्डलीं निर्ममे । तत्र च सम्मेळने कविसम्मेळनं, संशोधकसम्मेलनं, ईप्सितमितरसम्मेलनमिति त्रेधा सम्मेलनं प्रचाल्यते । तस्मादिदंप्रथमतया मोहमर्यानगरे प्रवर्तमानामेतां महतीं सभां कर्णाटभाषाभिमानिनस्सर्वेपि प्रत्यागच्छेयुरिति परिषत्सविनयमावेदयति ॥

श्रीपूर्णबोधः—एषा कर्नाटकभाषामयी मासपत्रिका महीशूरनगरादचिरादेव प्रचरिष्यति । अस्यां च द्वैताद्यनेकदार्शनिकधार्मिकप्रमुखा विषयाः प्रकाशयिष्यन्ते । सम्पादकस्तु संस्कृतमहापाठशालान्यायशास्त्राध्यापकः आस्थानविद्वान्, काशीप्राणेशाचार्यमहोदयः । पत्रिकाथामस्यां श्रीमन्महीशूरनरपालमहास्थानमहाविदुषां, श्रीमन्महाराजसंस्कृताङ्ग्लेयकलाशालादिपण्डितप्रकाण्डानां च समुचिताः लेखाः प्रकटीकारिष्यन्ते ॥

## विद्यार्थिसङ्घः

अयं विद्यार्थिसङ्घः श्रीमतां चिरपरिचित एव। तस्मिंश्च सङ्घेऽद्य यन्त्रसौकर्यमधिकृत्य काचन चर्चा, संस्कृतसाहित्यविषये कश्चन उपन्यासश्च प्राचलत्। तद्विषये साहाय्यमाचरतां पण्डितानां विद्यार्थिनां च विषये सङ्घः कृतज्ञतां प्रकाशयते । अस्य सङ्घस्य चतुर्थो वार्षिकोत्सवः विश्वविद्यालयीयसंस्कृतशाखोपाध्यक्षाणां C. R. नरसिंहशास्त्रिमहाभागानामध्यक्षतायां ससम्भ्रमं निरवर्ति । तदात्वे सङ्घः

संस्कृतकवितामुखविशेषकस्य श्रीमतो बाणभट्टस्य यशःपुञ्जमयीमिव तदीयकृतिविमर्शरुचिरैर्दशभिः कर्नाटकलेखनैः, षड्भिः संस्कृतलेखनैश्च भरितां काञ्चनोभयभाषामयी हस्तलिखितां विशेषसञ्चिकां प्रकाशयामास । किञ्च तदानीमास्थानविद्वांसः राळ्ळपल्ली, अनन्तकृष्णशर्माणः सकलहृद्यसंवननेन निजकण्ठनिस्सृतनिरुपमगायनेन रमणीयां सभां रमणीयतरां चक्रुः । अध्यक्षमहाशयाः बाणभट्टकीर्तिपरिपूतेन सरसभाषणेन सभां समधिकमानन्दयामासुः । ततः कार्यदर्शिकृतवन्दनार्पणेन विद्यागणपतेरार्तिक्यमङ्गलेन च सभा विरराम ॥

## सम्पादकभूमिः

---

### पत्रिकापरिचयः

'संस्कृतपद्यवाणी'—इयं पत्रिका प्रसिद्धविपश्चित्कालीपदतर्काचार्यसंम्पादकत्वे कलिकातानगरीतः प्रतिमासं प्रचार्यमाणा नाम्ना पद्यवाण्यपि गद्यप्रचुरैव विराजते । अत्र च नवीनन्यायशास्त्रेषु अतिजटिलतया व्यवहृतानां पारिभाषिकपदानां सरलार्थनिरूपणपरः पारिभाषिकपदार्थविवृतिनामको लेखः निखिलनयाध्यायिनामपि विनेयानामतीवोपकारकः । प्रसिद्धनवन्यासलेखकबङ्किमचन्द्रमहोदयस्य युगलाङ्गुरीयनामकवङ्गभाषामयस्य प्रबन्धस्य गीर्वाणवाण्या परिवर्तनं निखिलरसिकमनोहारि विद्योतते । आधुनिकशिक्षाप्रसाराभिधानो लेखः परमवश्यं विनेयैस्सादरं पठनीयः । तत्र च ग्रन्थकारचरितेषु नातीवादरः कर्तव्य इति प्रबन्धुरभिसन्धिस्तु नास्मभ्यं रोचते । हिन्दुशब्दव्युत्पत्तिरपि निबन्धकस्यातिचातुरीं प्रकाशयति । इतरपद्यनिकरैस्समस्यासार्थैश्चेयं पत्रिकातिसुषुमामाहन्ती रसिकतल्लजानाह्लादयति ॥

'सूर्योदयः'—अयं चाखिलभारतवर्षीयसंस्कृतविश्वविद्यालयतः श्रीमदन्नदाचरणतर्कचूडामणिमहोदयसम्पादकतायामुदितस्सर्वत्र निरर्गलपदप्रचारभासुरः समेषां मनांसि विकासयति । अत्र हि बहवो विषयाः दार्शनिकाः, धार्मिकाः, वैज्ञानिकाश्च प्रचार्यन्ते । सम्पादकीयाभिप्रायेषु आस्तिकदर्शनशास्त्राणीत्ययमंश अतीवोपकारकश्छात्राणां दर्शनाध्येतॄणां तदनुरागिणां च । उपयुक्तक्रियाक्रमिकसङ्कलनमपि सुरभारतीलेखकानां समधिकप्रयोजनकारि । दिव्यागीर्वाणभारतीनामको लेख अमरवाण्या अत्यादरणीयतां प्रकाशयति । शिक्षासमीक्षा च मृदुमधुरपदभासुरा समुल्लसति । कर्ममीमांसादर्शनमिति प्राचीनः प्रबन्धस्त्वतीव हृदयङ्गमः । चण्डलाद्यस्पृश्यताप्रमाणसङ्ग्रहः निबन्धकस्य नैकाकरवेत्तृतामवगमयति । वेदान्तभाष्यभूमिकेति लेखनं सुलभया शैल्या वेदान्तप्रमेयान्बोधयितुमुद्युङ्क्ते ॥

'मञ्जूषा'—इयं हि कलिकतानगरीत एवाविर्भवति । श्रीक्षितीशचन्द्रचट्टोपाध्याय एवास्याः सम्पादकः । अयं च सम्पादकमहोदय आङ्ग्लसंस्कृतादिभाषास्वनेकाः पत्रिकाः प्रकाशयति । तत्र Calcutta Oriental Journal नाम्नी पत्रिका आङ्ग्लभाषामयी सर्वत्र समादृतप्रचारा बहुविधप्रत्नविषयैस्समङ्कृता पाश्चात्यानां मनांस्यपि समाहरति । अपरा च गैर्वाणी संस्कृतसाहित्यपरिषत्पत्रिका बहो कालादपि बहिराविर्भवन्ती सुन्दरविषयैरतिसुषुमामयी चकास्ति । इयमपि मञ्जूषा निखिलविषयमञ्जूषेव समधिकमञ्जुला पण्डितपुञ्जानाह्लादयति । अत्रचोपक्रमे विद्यमानः प्रसिद्धविद्वदग्रेसरस्य राशीवडेकरआप्पाशर्मविद्यावाचस्पतिमहोदयस्य 'हा धिक्दौर्भाग्यं संस्कृतभाषायाः' इत्ययं विषयः कस्य वा सचेतनस्य न मनः समाहरति? वनदेवीनामको लेखः कथाछलेन फलवृक्षादीनां शाखादिभञ्जनमतीव खेदकारीति निरूपयति ।

पत्रिका चेयं बहुमानदानादिना सर्वत्र गीर्वाणवाणीप्ररोचनं कर्तुं प्रयतते इति सर्वथास्याः जनयितां क्षितीशमहाशयः समधिकधन्यवादमर्हति। अपरमिदं प्रमोदनिदानं, यत्किल कलिकातापुरीत एव एकस्मात् मञ्जूषा, साहित्यपरिषत्पत्रिका, संस्कृतपद्यवाणीति पत्रिकात्रयं देवभाषामयं प्रादुर्भवतीति। इदं चावसन्नाया गैर्वाण्यास्संमुत्तेजकं कारणमिति वयं प्रतीमः॥

'श्रीः'—एतन्नाम्नी त्रैमासिकी पत्रिका श्रीनगरीतः चैत्राषाढाश्विनपौषमासेषु बहिरात्मानमाविष्करोति। अस्याश्च सम्पादकौ प. नित्यानन्दशास्त्री, प. कुलभूषणश्च। अत्र च पत्रिकायां महाराणाप्रतापः, पिता धर्मः पिता कामः, भोटदेशे बौद्धधर्म इत्यादय अनुपमा विषयाः सरसाश्च कविताः सरलया वाण्या प्रकाश्यन्ते॥

'भाट्टचिन्तामणि' इति समाख्यया समुल्लिख्यमाना सेयं भाट्टदीपिकाया व्यख्या—'१७८०' तमे हूणाब्दे चोळदेशेषु लब्धजन्मना '१८६०' तमहूणाब्दपर्यन्तं भारतभूमिमलंकृतवता सुधीमणिना वाञ्छेश्वरयज्वना विरचिता। अस्यां च व्याख्यायां तत्र तत्र प्रदेशविशेषेषु निरूपिताः कतिपयेऽर्थविशेषाः तन्त्रवार्तिकन्यायसुधादिप्राचीनग्रन्थकाराणां, प्रभावलीभाट्टचन्द्रिकादिव्याख्याकाराणां चानभिमताः अत एव मीमांसकसिद्धान्तविरुद्धा इव यद्यपि प्रतिभान्ति अथापि भाट्टदीपिकाया यथाश्रुतं मूलार्थं जिज्ञासूनां छात्राणां महान्तमुपकारमादधातीति दृढं विश्वसिम॥

———

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

# सम्पादकीयसमितिः

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए., विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचलशास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानोपाध्यायाः

६. महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः, महापाठशालासाहित्यप्रधानोपाध्यायाः

७. महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

८. श्रीमन्तः एस्. बि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

## विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञापयामः—संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (*3s.*) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

संपादकः,

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः विनिमयरूपाः पत्रिकाः

---

1. संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगरम्
2. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता.
3 उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. संस्कृतरत्नाकरः. जयपुरम्.
7. संस्कृतपद्यवाणी, कल्कत्ता.
8 मञ्जूषा, कल्कत्ता.
9. अच्युतः, काशी.
10. कल्याणम्, गोरखपुरम्.
11 The Mythic Society Journal, Bangalore.
12. Annals of the Bhandarkar Oriental Research Institute, Poona.
13. Review of Philosophy and Religion, Poona.
14. Journal of Oriental Research, Madras.
15 The Law College Magazine, Madras
16. The Literary and Educational Supplement to "The Hindu," Madras.
17. The Aryan Path, Bombay.
18. The Theosophical Movement, Bombay
19. The Philosophical Quarterly, Calcutta.
20. Karnataka Historical Review, Dharwar.
21. Ardra, Ceylon.
22. "Yoga," Bulsar.
23. The Vaitarini, Chowdwar.

24. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ.
25. ಭಾರತೀ, ಮದ್ರಾಸು,
26. ಸನಾತನಮತಪ್ರಚಾರಿಣೀ, ಛಟ್ನವಲ್ಲಿ
27. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ
28 ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ.
29 ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು
30. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು
31. ಅಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಬೆಂಗಳೂರು.
32. ರಂಗಭೂಮಿ, ಬೆಂಗಳೂರು
33. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು.
34. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ.
35. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು
36 ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು.
37. ಪೂರ್ಣಬೋಧ, ಮೈಸೂರು

---

## ग्राहकमहाशयेषु विज्ञप्तिः.

---

गतमासे अस्यामेव राजधान्यां प्रवर्तितस्याखिलभारतीयप्राच्य-विद्याविपश्चित्सम्मेलनस्याष्टमाधिवेशनस्यानुबन्धिषु मुद्रणकार्येषु मुद्रा-यन्त्रस्य व्यापृततया अन्तरायान्तरेण च त्रैमासिकपत्रिका यथासमयं न प्रकाशितेति ग्राहकमहाशयेषु क्षमां प्रार्थयामहे। प्रयतिष्यामहे च अचिरादेव न्यूनतामिमां पराकर्तुमिति शम् ॥

---

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः"

(ईशोपनिषत्)

सम्पुटम् ११]  एप्रिल्, जुलै १९३५  [सञ्चिका २--३

## मासावतरणिका.

विरिञ्चिदयितापाङ्गतरङ्गितमहोदयाः ।
जयन्ति प्रतिभाः पुण्याः सतां सारस्यवेदिनाम् ॥ १

माल्यानि कुन्दकुसुमानि मधुव्रतानां
मल्लीसुमानि च तथा समवेत्य रागम् ।
यस्यां मुदा व्यतिहसन्ति विभातु सेयम्
माघस्य सम्पदनुकम्पितमाधवश्रीः ॥ २

विचकिलसहकारप्रौढपुष्पाभिरामा
रमयतु मधुमाद्यत्कोकिलालापशीला ।
असमशरसहायैराहितानन्दतायैः
युवजनसमवायैर्मानिता माधवश्रीः ॥ ३

## सुभाषितानि.

हर्तुं कुम्भे विनिहितकरः स्वादु हय्यङ्गवीनं
दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम् ।
पायादीषत्प्रचलितपदो नापगच्छन्नतिष्ठन्
मिथ्यागोपः सपदि नयने मीलयन् विश्वगोप्ता ॥ ४

कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे
रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलावपि ।
याः कर्णे विकचोत्पलन्ति कुचयोरङ्के च कालागुरु
स्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः ॥ ५

अतुल्या कल्याणीप्रकृतिरनघं वल्गु च वचः
मनीषा निर्दोषा महितमविगीतं च चरितम् ।
अदूष्यं वैदुष्यं हृदयमपि येषामुरुदयम्
ध्रुवं तेषामेषामिह परिचितिरीषापि शुभदा ॥ ६

प्रसक्ते श्रीलेशे परिचितनृणामप्यगणनम्
प्रयत्नैरस्तोकैरपि परफलाप्तेर्विघटनम् ।
वचश्च प्रत्यक्षे सति मधु परोक्षे खलु विषम्
बुधौघे वैमुख्यं पुरुषमविनीतं कथयति ॥ ७

विद्या दुष्यत्यविनयतया वित्तवत्ता च लोभैः
आचारश्रीः खलपरिचयादाभिजात्यं कुवृत्त्या ।
काव्यं भव्येतरविषयतः कर्म कामानुबन्धैः
दाक्ष्यं दीनप्रभुभजनतो दानमस्वादुवाचा ॥ ८

हृदयमस्मरणेन रमापतेश्चरितमप्यनुपासनतस्सताम् ।
धनमनर्पणतोऽर्थिषु देहिनां मुखमनध्ययनेन च दूष्यते ॥ ९

निरस्तनिगमाक्षरं ननु निरस्यमास्यं नृणाम्
सरित्क्षरणवर्जिता स्फुरणमेति न ग्रामता ।
पुरस्करणतो विना पुनरनर्थकं स्पर्शनम्
हरिस्मरणवर्जितं हतमवेहि जन्म क्षितौ ॥ १०

---

योगाचारवादे दीक्षितस्सन् महायानं प्रविवेश । प्रसिद्धबौद्धनैयायिको दिङ्नागश्चास्यैव प्रधानः छात्रः। अयमपि हि आदौ नागदत्तस्य शिष्यतामुपगम्य हीनयानप्रविष्ट एवासीत् । ततो वसुबन्धोः पाण्डित्यादिप्रभावेण यदा महायानसम्प्रदायस्यापूर्व अभ्युदयोऽभूत् तदा दिङ्नागोऽपि तच्छात्रतामाश्रित्य विज्ञानवादसमर्थनप्रचारकार्येषु व्रती अभवत् । हीनसम्प्रदायमास्थिताः सौत्रान्तिका वैभाषिकाश्च विज्ञानभिन्नं बाह्यं वस्तु समर्थयन्तः बाह्यपदार्थसार्थान्परमाणुसञ्चयरूपानगादिषु । तदा वसुबन्धुर्विंशतिकारिकाद्वारा विज्ञानवादं समर्थ्य परमाणूनिराचकर । एवं पुरतोऽपि त्रिंशिकाविज्ञप्तिकारिकाद्वारा विज्ञानवादं द्रढयामास । बौद्धाचार्यस्थिरमति तस्य भाष्यं प्रणीय सुविशदं विज्ञानवादं टिटीके । वैभाषिकसम्प्रदायस्थैस्साकं वसुबन्धुप्रमुखानां प्रबलो विवादस्तदात्वे समासीदिति तद्ग्रन्थसन्दोहैरवगम्यते। वसुबन्धुर्बाह्यपदार्थखण्डनवेलाया मेवमवादीत् "बाह्या विषया वैशेषिकादिनयानुसारेण एकेऽवयविरूपा इति निरूपयितुं न शक्यते ; अनेके परमाणव इत्यपि वक्तुं न पार्यते ; संहता पुञ्जीभूता परमाणुसन्दोहा इत्यपि गदितुं न प्रभूयते । कुतः ? परमाणव एव विचारकोटिं न सहन्त" इत्यादि। तदुपर्येव तत्र हेतुतया 'षट्केन युगपद्योगात्' इत्यादिभिर्निरवयपरमाणोरसिद्धिमुद्घोषयामास । हीनयानसंरक्षकाः काश्मीरीयवैभाषिका परमाणुसंघातस्य संयोगमङ्गीकुर्वाणा स्वीयमतं समर्थयांबभूवुः । तन्मतमपि निराचिकीर्षु 'परमाणो, रसंयोग' इत्यादि जगाद । यदा परमाणूनामेवान्योन्यं योग असम्भावितः, तदा तदीयसंघातेऽपि संयोगो नोत्पत्तुमर्हः । कुतः ? उक्तमते संघातस्समष्टिर्वा निरवयपरमाणुभ्यो नातिरिक्तः इति तदर्थः । पुरतोऽपि वसुबन्धुः 'दिग्भागभेदो यस्यास्ति- इत्यादिना परमाणोरेकत्वं न सम्भवति, एवं परमाणोर्निरवयवत्वे छायावरणयोरसम्भवापत्तिरित्यप्यूचिवान् । स्पष्टीभविष्यति चेदमुपरिष्टात् । अत्र वसुबन्धुनिबन्धस्सवृत्तिक एवं वर्तते,—

"न तदेकं नचानेकं विषय परमाणुशः ।
न च ते संहता यस्मात्परमाणुर्न सिध्यति ॥११॥

षट्केन युगपद्योगात्परमाणोः षडंशता ।
षण्णां समानदेशत्वात्पिण्डस्स्यादणुमात्रकः ॥१२॥

परमाणोरसंयोगे तत्संघातोऽस्ति कस्य सः ।
न चानवयवत्वेन तत्संयोगो न सिध्यति ॥१३॥

दिग्भागभेदो यस्यास्ति तस्यैकत्वं न युज्यते ।

छायावृती कथं वान्यो न पिण्डश्चेन्न तस्य ते ॥१४॥
(वसुबन्धुकृतविंशतिकाकारिका)

षड्भ्यो दिग्भ्यः षड्भिः परमाणुभिर्युगपद्योगे सति परमाणोष्षडंशता प्राप्नोति। एकस्य यो देशस्तत्रान्यस्यासम्भवात्। अथ चैकस्य परमाणोर्देशस्स एव षण्णाम्— तेन सर्वेषां समानदेशत्वात्सर्वः पिण्डः परमाणुमात्रं स्यात्। परस्पराव्यतिरेकादिति न कश्चित्पिण्डो दृश्यस्स्यात्। नैव हि परमाणवस्संयुज्यन्ते। निरवयवत्वात् ॥१३॥

मा भूदेषदोषप्रसङ्ग, संहतास्तु परस्परं संयुज्यन्त इति काश्मीरवैभाषिकास्तु इदं प्रष्टव्याः, यः परमाणूनां संघातो न स तेभ्योऽर्थान्तरमिति परमाणोरसंयोगे 'तत्संयोगोस्ति कस्य सः' संयोग इति वर्तते। 'न चानवयवत्वेन तत्संयोगो न सिध्यति' (१३) अथ संघाता अप्यन्योन्यं संयुज्यन्ते, न तर्हि परमाणूनां निरवयवत्वात्संयोगो न सिध्यति इति वक्तव्यम्। सावयवस्यापि संघातस्य संयोगानभ्युपगमात्। तस्मात्परमाणुरेकं द्रव्यं न सिध्यति, यदि च परमाणोस्संयोग इष्यते, यदि वा नेष्यते ॥ १३ ॥

'दिग्भागभेदो यस्यास्ति तस्यैकत्वं न युज्यते'। अन्योऽहि परमाणोः पूर्वदिग्भागो यावदधोदिग्भाग इति। दिग्भागभेदे सति कथं तदात्मकस्य परमाणोरेकत्वं योक्ष्यते। 'छायावृती कथं वा'—यद्येकस्य परमाणोर्दिग्भागभेदो न स्यादादित्योदये कथमन्यत्र छाया भवत्यन्यत्रातपः। न हि तस्यान्यः प्रदेशोऽस्ति यत्रातपो न स्यात्। आवरणञ्च कथं भवति परमाणोः परमाण्वन्तरेण, यदि दिग्भागभेदो नेष्यते। न हि कश्चिदपि परमाणोः परभागोऽस्ति, यत्रागमनादन्येनान्यस्य प्रतीघातस्स्यात्। असति च प्रतीघाते सर्वेषां समानदेशत्वात्सर्वस्संघातः परमाणुमात्रस्स्यादित्युक्तम्। किमेव पिण्डस्य ते छायावृती न, परमाणोरिति,—किं खलु परमाणुभ्योऽन्यः पिण्ड इष्यते, यस्य ते स्याताम्, नेत्याह 'अन्यो न पिण्डश्चेन्न तस्य ते"। यदि नान्यः परमाणुभ्यः पिण्ड इष्यते, न ते तस्येति सिद्धं भवति" इत्यादिवृत्तिः (प्यारिसूनगरे लेविसाहेबेन सम्पादितायां विज्ञप्तिमात्रतासिद्धावेतत्सर्वं द्रष्टव्यम्)

वसुबन्धोरनन्तरमष्टमशताब्द्यां तत्सम्प्रदायरक्षको विज्ञानवादी बौद्धाचार्यश्शान्तरक्षितोऽपि (८०० A.D) "तत्त्वसङ्ग्रह" नामकमहानिबन्धे परमाणुखण्डनावसरे वसुबन्धूक्तयुक्तिमेव सुविशदं व्यातेने—

"संयुक्तं दूरदेशस्थं नैरन्तर्यव्यवस्थितम्।
एकाण्वभिमुखं रूपं यदणोर्मध्यवर्तिनः॥"

अण्वन्तराभिमुख्येन तदेव यदि कल्प्यते ।
प्रचयो भूधरादीनामेवं सति न युज्यते ॥
अण्वन्तराभिमुख्येन रूपश्चेदन्यादिष्यते ।
कथं नाम भवेदेकः परमाणुस्तथा सति ॥" ५५६ प.

"तत्त्वसङ्ग्रहे" गायकवाड ओरियण्टल्सिरिज् )

स एव यद्वि एकस्वभावशून्यमनेकस्वभावशून्यं वा यदेकमपि न अनेकमपि भवितुं नार्हति, तत्तु सद्वस्तु न भवदेव । किन्तु असदेव, यथा वियदब्जम् । तथा परमाणुरपि एकानेकस्वभावशून्य:, तस्मादसन्नेव । परमाणुवादिना मते कश्चिदपि परमाणुरेकानेकस्वभावशून्य इति समर्थ्य परं वसुबन्धुरिव प्रत्येकमपि परमाणोरूर्ध्वाधः प्रभृतिदेशास्सन्ति, तस्मादेकत्वं कथमपि न शक्यवचनमिति जगाद । शान्तरक्षित-स्यान्तेवासी कमलशीलोऽपि तत्त्वसङ्ग्रहव्याख्यानपञ्जिकया निपुणं तदुक्तयुक्तिं व्यक्तय-करोत् । तत्र परमाणुवादिना वैभाषिकाना मध्ये मतत्रयं प्रकटीचकार, (i) परमाणुनिकर: परस्परं संयुक्त एवास्त इत्येकेषा मत, (ii) परमाणुनिचयस्सततं सान्तर एव वर्तते, कोऽपि परमाणु नान्यं परमाणुं स्पृशतीत्यपरेषा मतं, (iii) परमाणुसमूहो यदा निरन्तरो भवति । तेषां मध्ये व्यवधानं न विद्यते, तदा तेषा "स्पृष्ट" इति सञ्ज्ञा भवतीत्यन्येषां मतं । एतेषां मध्ये भदन्तशुभगुप्तः प्रथमोक्तमतस्य प्रवर्तकः । परमाणूनामन्योन्यं सन्निधानेऽपि संयोगो नोत्पद्यत इति द्वितीयं मतन्तु कस्येति न विद्म । कमलशीलोपि न व्यक्तं किमप्यूचे । सर्वतन्त्रपारदृश्वान. तर्कवागीशमहोदया अपि न जानीम इत्येवं वदन्ति । तृतीयमपि नाद्यगेव । परन्तु मतत्रयेपि मध्यवर्ती परमाणु. निकटवर्तिपरमाणुभिर्यदा परिवेष्टितो भवति, तदा तस्य दिग्भागेन भेदोऽवश्यमास्थेय एव । नोचेत्प्रचय. स्थूलता वा न भवति । किं कारणम् ? परमाणुवादिनां मते हि परमाणोरंश अवयवो वा नाभ्युपेयते । शान्तरक्षितकारिकाव्याख्याव्याजेन कमलशील. वसुबन्धो: 'दिग्भागभेदो यस्यास्ति' इत्यादिकारिकार्थमपि उदाहार्षीत् । पूर्वं हि उक्तविषये भदन्तशुभगुप्तस्य समाधानं विलिख्यापि तन्निराचकार । अथ अतिसूक्ष्मप्रदेश एव परमाणु: तस्यावयवाकलने हि तादृशस्सर्वोप्यवयव. परमसूक्ष्म एव भवेत्, अनवस्थायामपि न क्षति: इत्येतन्मतमप्युदाहृत्य शांतरक्षितकारिकया तदुन्मूलयामास । अनुसन्धित्सवस्तदीयापूर्वप्रबन्धावलोकनेवं जानन्ति, यद्वैभाषिका कियत्प्रकारेण परमाणोरस्तित्वं साधयितुं मयतन्त, तैस्सह विज्ञानवादिनां कियद्दीर्घकालपर्यन्तं विवादस्समजनि, एवं नाना-

तद्विवेचनम्.

I. अत्रोच्यते । यावच्च संयुज्यते, तत्सर्वं सावयवमिति व्याप्तिर्नास्ति । तथा व्याप्त्यङ्गीकारे परमाणोरवयवस्तस्याप्यवयवस्तस्याप्येवमिति रीत्या अनवस्थादोष अनिवार्यो भवति । अनवस्था हि प्रामाणिकी चेन्न बीजाङ्कुरादिवद्दोषता*मर्हति । नास्यामनवस्थायां किञ्चिदपि प्रमाणमस्ति ॥

अत्राहुः । न वयं विभागमनन्तं ब्रूमः । नोक्तदोषः प्रादुर्भवेत् । परन्तु अनन्त—प्रलयन्त—परमाण्वन्तरूपपक्षेषु प्रलयान्तपक्षमेव कक्षीकुर्मः । जन्यद्रव्यस्य विभागपरम्परा सर्वस्यापि वस्तुनो निवृत्तौ स्वयमपि निवर्तते । सत्येवं, अनवस्था कथं भवतीति ॥

नैतद्युक्तम् । यस्य हि विभागस्तादृशविभज्यमानद्रव्यस्याविद्यमानतायां चरमो विभागः कमवलम्ब्य तिष्ठेत् ? तस्माद्विभागस्वीकारे तदाधारद्रव्यमपि स्वीकरणीयमिति तस्य सावयवतायामनवस्थादोषो दुर्वार एवेति ॥

अयमत्र निर्गलितार्थः । प्रोक्तपक्षत्रये न तावदादिमः पक्षः, अनवस्थादोषापातात् । नापि द्वितीयः, विभज्यमानद्रव्यस्याप्यभावेन विभागस्यनाधारत्वापत्तेः । तस्मात्परमाण्वन्तपक्ष एव समीचीनः, परमाणावेव विभागस्य निवृत्तिरास्थेया । परमाणुः पुनर्न विभाज्यः । तस्मात्तस्यावयवो नैव साधयितुं शक्यते । कुतः ? निरवयवपरमाणु-

---

दिग्भ्यः नानाप्रकारेण सर्वास्तिवादस्य प्रबलप्रतिवादेन क्रमशो हीनयानं कथं हीनमभूदिति ॥

* नव्यनैय्यायिको जगदीश· "अनवस्था पुनरप्रामाणिकानन्तप्रवाहमूलः प्रसङ्गः । यथा घटत्वं यदि यावद्घटाजन्यवृत्ति न स्यादि" त्येवं तर्कजागदीश्यां प्रामाणिकानस्थाया अनवस्थात्वमेव नानुमनुते ॥

मुररीकृत्य तस्य पुनस्सावयवतासाधने व्याहतेर्जागरूकत्वात् । परमाणुस्सावयवः इत्युक्तौ हि परमाणुः कार्यविशेष इत्युक्त भवति । तच्च न सम्भवति, परमाणुत्वकार्यत्वयोरेकत्रावर्तमानत्वात । प्रत्येकमपि परमाणुस्तत्पूर्वजातपरमाण्वन्तरकार्यः, प्रतिक्षणमपि एकस्मात्परमाणोरपरपरमाणुरुत्पद्यते इत्युक्तावपि परमाणोस्सावयवता न सेत्स्यति, यस्य ह्यवयवा अनेके, स एव सावयवपदभाग्भवति । परमाणोः कार्यत्वमेवास्मत्सिषाधायिषितं, परमाणुजन्यत्वमेव च हेतुरित्युक्तिरपि न साधीयसी, एकस्मादेव कारणात्कार्यस्य कुत्राप्यजननात् । तथाङ्गीकारे च परमाणुकारणस्य सत्वात्सततं तत्कार्यपरमाण्वन्तरस्योत्पादप्रसङ्गः । सत्येवं, तदीयप्रागभावः कदापि न तिष्ठेत् । तदीयप्रागभावाभावे च तदुत्पत्तिरसम्भाविनी । तस्मात्परमाणोः कथमपि कार्यत्वं न सिध्यति ॥

यदि एकः परमाणुरेव परमाणोः कारणं, स एव च जायमानस्यावययव इत्युच्यते, तदा क्षणभङ्गभङ्गः, सावयव इत्यस्यावयवसहित इति क्लिार्थः । अवयवश्च जनकीभूतप्राक्क्षणावच्छिन्नपरमाणुः । तस्य परक्षणवर्तिजन्यपरमाणोश्च कथं साहित्यं सम्भवति? परमाणोरुत्पत्तिक्षणे तदीयावयवपरमाणोर्विनष्टत्वादिति कथमपि परमाणोस्सावयवतासाधनं न सम्भवति ॥

II एवं षट्केन युगपद्योगोपि न परमाणोरवयसाधनायालम् । युगपद्योगस्थले प्रतिपरमाणुद्वयमादाय विचारे क्रियमाणे मध्यस्थपरमाणोः पूर्वस्थपरमाणुना साकं यस्संयोगो जायते, स केवलं तत्परमाणुद्वय एव जायते । पश्चिमस्थपरमाणौ नोत्पद्यते । एवं मध्यवर्तिपरमाणोः पश्चिमस्थपरमाणुना सह जायमानोऽपि योगस्तद्द्वय एव जायते नान्यत्र । एवमेव प्रोक्तस्थले निखिलसंयोगा विभिन्नदेशस्था भवन्तीति विज्ञायते । सत्येवं, कथमेते समानदेशस्था भवन्ति? यद्यत्र मध्यस्थपरमाणावेव

सर्वसंयोग अङ्गीक्रियते, तथासत्यपि तन्मध्यवर्तिपरमाणोर्विभिन्नदेशा अवयवा वा न सेद्धुमर्हन्ति। यत एकस्मिन्परमाणावेव षट्परमाणूनां संयोगा एकस्मिन्नेव स्थाने स्वीकर्तुं शक्यन्ते। तत्र तेषां संयोगानां समानदेशतोररीकरणेपि परमाणुनिकरस्य समानदेशत्वं न सिध्यतीति न पूर्वोक्तदोषापातः ॥

वस्तुतो यस्यां दिशि परमाणौ अपरपरमाणोर्योगो जायते, तां दिशमेव परमाणोः प्रदेश इति कल्पयन्ति। परमाणोरवयवाभावा-त्तस्य वास्तविकः कोऽपि प्रदेशो नास्त्येव। जन्यद्रव्यस्योपादानकारण-मेवावयवद्रव्यं 'प्रदेश' शब्दस्य मुख्योऽर्थः। महर्षिर्गोतमः 'कारण-द्रव्यस्य प्रदेशशब्देनाभिधाना' दिति (२-२-१७) विस्पष्टं वदति। तस्माद्युगपद्योगस्थले परमाणोर्योगे कल्पितप्रदेशमादाय तस्य सावयता दुस्साधैवेति ॥

एवं "दिग्देशभेदो* यस्यास्ति तस्यैकत्वं न युज्यत" इति वसुबन्धूक्तिरपि निर्युक्तिकैव, वयं हि परमाणोर्दिग्देशभेदं न स्वीकुर्मः। परमाणोः पूर्वस्यां दिशि एकः प्रदेशः, अपरस्यां दिशि अपरः प्रदेश इति इत्येवं रूपेण परमाणौ दिग्देशभेदो नास्ति। दिशा सह परमाणो-स्संयोगो वर्तत इति परमाणोर्दिग्देशभेदः कल्पनाप्रसूत एव। परन्तु मुख्यतस्तस्य स नास्त्येव। दिशा साकमणोर्योगस्य विद्यमानताया मपि तस्य सावयवता न सिध्यति। यतस्तस्य संयोगस्यावयवापेक्षा नास्तीति ॥

---

* प्रोक्तवसुबन्धुकारिकायां "दिग्भागभेदो यस्यास्ति" इत्येव पाठो वर्तते। एतत्पाठाभिप्रायस्तूपरिष्टात् स्फुटीकरिष्यते। उद्योतकरतात्पर्यटीकाकारौ पाठद्वयमप्य-नूद्य तन्मतं निराचक्रतुः ॥

उदयनाचार्य आत्मतत्त्वविवेके* षट्केन युगपद्योगादिना न परमाणोस्सावयवतासाधनं सम्भवतीत्याह—तत्र टीकाकारो रघुनाथशिरोमणिस्तदभिप्रायमेवं निरूपयामास। यस्मिन्द्रव्ये संयोगो जायते, तदेव द्रव्यं स्वरूपतस्तत्संयोगस्य समवायिकारणं भवति। तदीयावयवो अंशो वा वा तस्य कारणमेव न भवति। तस्मात्संयोगो द्रव्यस्यावयवमंशं वा नापेक्षते। सत्येवं निरवयवे परमाणावपि संयोग उत्पत्तुमर्हति। युगपदनेकमूर्तद्रव्यसंयोगोऽपि भिन्नभिन्नदिग्विशेषे भवितुमर्हतीति। अत्रेदं तात्पर्यं। संयोगमात्रमव्याप्यवृत्तीत्येतत्सत्यम्। किंतु तत्रावयवस्य स्तोकमपि नापेक्षा। यस्मिन्दिग्विशेषे परमाणुद्वयस्य योगो जायते, तादृशदिग्विशेषावच्छिन्नो भवति, तस्मादेव च तस्याव्याप्यवृत्तिता निर्वहति। अवयवविशेषानवच्छिन्नो भवतीत्येतावता संयोगो व्याप्यवृत्तिर्भवतीति न वक्तुं शक्यते। किञ्च निरवयवे संयोगो नोत्पत्तुमर्हतीति केन प्रमाणेनोच्यते? सावयवे संयोगस्सर्वत्रापि अवयवविशेषावच्छिन्न इत्येतावता संयोगमात्रस्य तथानुमातुं न शक्यते। निरवयात्ममनसोस्संयोगाङ्गीकृतेः। तस्मान्निरवयवद्रव्ययोरप्यन्योन्यं संयोग आस्थेय एव। तत्र न किमप्यस्ति बाधकम्। तत्संयोगः स्वाश्रयीभूतपरमाण्वादेरवयवाभावान्नावयवविशेषावच्छिन्नो भवितुमर्हति। किन्तु दिग्विशेषावच्छिन्न इति भवत्यव्याप्यवृत्तिरिति। वृत्तिकारविश्वनाथोऽप्यत्रैवमेवाभ्यधात्। †रघुनाथशिरोमणिरन्ते परमाणुषु प्राच्यप्रतीच्यप्रभृतिव्यवहारानप्युपपाद्य दिग्देशभेदो नावयववैशिष्ट्यं साधयतीति वर्णितवान्। नन्वे

---

* "संयोगव्यवस्थापनेनैव षट्केण युगपद्योगाद्दिग्देशभेदाच्छायावृतिभ्यामित्यादयो निरस्ताः"॥

† "षट्केण युगपद्योगात्परमाणोष्षडंशता।
दिग्देशभेदतश्छायावृतिभ्याञ्चास्य सांशता"॥

तन्नोपपद्यते, परमाणोः दिग्भागभेदाभावे सूर्योदये सति कथमेकत्र छाया अपरत्र चातपो भवेत्? कुतः? परमाणोरन्यप्रदेशाभावात्। एवं दिग्भागभेदाभावे एकस्य परमाणोरपरमाणुद्वारा आवरणमपि न स्यात्। कुतः? परमाणोः कोऽप्यपरो भागो न यदि तिष्ठेत् तद्भागे अपरपरमाणोस्संयोगेन प्रतिघातो न स्यात्। प्रतिघाताभावे च निखिलपरमाणूनामपि समानदेशत्वात्समस्तोऽपि परमाणुसंघातः परमाणुमात्रमेव भवेत्। स च स्थूलपिण्डो न भवितुमर्हः। तस्माद्दिग्भागभेदस्स्वीकरणीयः। तथाच सति षड्दिक्संयोगात्परमाणोर्व्यक्तिभेदः स्वीकर्तव्यः इत्येवं एकस्मिपरमाणोः षडंशा अङ्गीकृता एव भवेयुरिति चेत्॥

अत्रोच्यते। छायावरणयोः प्रामाणिकत्वे मूर्तत्वस्पर्शवत्वाभ्यामेव परमाणोस्ते उपपद्येते। तत्र न परमाणुभागस्यापेक्षा, स्पर्शविशिष्टद्रव्यमेवान्यद्रव्यमावृणोतीत्येतद्विश्वजनीनम्। भागस्यावयवस्य वा तत्र न प्रयोजकता। कस्मिंश्चिद्द्रव्ये अपरद्रव्यस्य सम्बन्धप्रतिषेधकरणमेव 'आवरण' शब्दार्थः। यत्राल्पसंख्यतैजसपरमाणोरावरणं भवति, तत्र छाया पतति। तत्रापि न भागस्यापेक्षा। उद्योतकरतात्पर्यटीकाकारोदयनशिरोमणिप्रभृतयस्तु छायावरणे परमाणोस्सावयवतासाधकपरतयापि योजयामासुः॥

---

तदेतन्निरस्यति "संयोगस्येति"। स्वरूपनिबन्धनं संयोगित्वं नांशमपेक्षते युगपदनेकमूर्त्तसंयोगित्वञ्चानेकदिगवच्छेदेनाविरुद्धम्। प्राच्यादिव्यपदेशोऽपि प्रतीच्याद्यसंयोगित्वे सति प्राच्यादिसंयोगित्वात्। सावयवेपि दीर्घदण्डादौ मध्यवर्तिनमपेक्ष्य प्राच्यादिव्यवहारविरहात्। छायापि यदि प्रामाणिकी, तदा तेजोगतिप्रतिबन्धकसंयोगभेदात्। एतेनावरणं व्याख्यातम्।—"आत्मतत्त्वविवेक" दीधितिः। अत्र शिरोमणि. पद्योदाहरणे दिग्देशभेदछायावरणान्यपि परमाणोस्सावयवतासाधकतया योजयामास। तेन तत्काले कोपि विज्ञानवादी सर्वानपि हेतून्क्रोडीकृत्य पद्यमेतन्निर्ममे। तदेव शिरोमणिरप्युदाजहारेत्यवगम्यते॥

उद्योतकरः "यत्राल्पीयांसस्तेजःपदार्थास्सन्ति सर्वतस्सम्पूर्णरूपेणालोकाभावो न तिष्ठति, तत्स्थानीयद्रव्यगुणकर्माणि 'छाया' इति कथ्यन्ते। एवं यत्र तेजः पदार्थस्सर्वतो निवृत्तः—प्रत्यक्षयोग्यविशिष्टालोकः कुत्रापि नास्ति, तत्स्थानीयद्रव्यगुणकर्माणि 'अन्धकार' इति गीयन्ते इत्येवं" जगाद। अत्र प्रोक्तप्रकारेण द्रव्यगुणकर्माण्येव लोका छायेति, अन्धकार इति वदन्ति इत्येव तात्पर्यं वार्त्तिककारस्य। न पुनः स्वमतेपि तद्रूपत्वं तयोः। प्रथमाध्याये द्वितीयाह्निके अष्टमसूत्रव्याख्याने भाष्यकारेणैव स्वयमपि छाया न द्रव्यमपि त्वभाव एवेति कण्ठरवेणैवोक्तेः। तात्पर्यटीकाकृदपि 'अन्धकारो भावपदार्थे नान्तर्भवति, परन्तु तेजसोऽभावरूप, इति विस्पष्टमाचष्टे। तथाच, दिग्देशभेदछायावरणादिहेतुभिः परमाणोस्सावयवत्वं साधयितुं न पार्यत इति फलितम्॥

वैशेषिकदर्शने 'अविद्या' (४-१-५) इत्येतत्सूत्रोपस्कारे शङ्करमिश्रोऽपि परमाणोस्सावयवतासाधने छायावत्वात्' 'आवृतिमत्त्वात्', इत्येवं हेतुद्वयं पूर्वपक्षतया जग्राह। अत्रोपस्कारव्याख्यानेपरिष्कारनामके 'आवृत्तिमत्त्वादि' ति पाठं गृहीत्त्वा 'आवृत्तिः स्पन्दनभेदः' इत्येवमुक्तिर्विभ्रमतिबन्धनैव॥

## ४. छायावरणयोर्हेतुत्वनिरासः.

एवं छायावरणे अपि नावयववत्तां साधयतः। अत्र दीधितिकार आत्मतत्त्वविवेकव्याख्यावसरे एवमगादीत् "यदि कुत्रचित्परमाणुप्रयुक्ता छाया प्रमाणतस्सिद्धा, अथवा यदि परमाणौ छागा प्रामाणिकी, तदा परमाणौ तेजःप्रतिबन्धककिञ्चित्संयोगविशेषप्रयोज्यैव सा भवति। एवमावरणमपि तत्प्रयुक्तमेव भवति। नात्र परमाण्ववयवस्य न किञ्चिदप्यपेक्षा। तस्माच्छायावरणे परमाण्ववयवसाधके न भवत इति॥

उद्योतकरस्त्वन्तएवमवोचत्—पूर्वपक्षिणः पूर्वोक्तं वस्तुजातं प्रमाणासिद्धमिति न जानन्ति चेत्तेषां मते प्रोक्तपदार्थसार्थस्य सत्ताया एवाभावात्ते परमतपराचिकीर्षया तानर्थान्किमर्थं परिगृह्णन्ति? यद्वस्तु स्वोपलब्धिगोचरो न भवति, तद्धि खण्डनायापि न गृहीतुं पार्यते। यदि ते तानप्यर्थान्प्रमाणिकान्मन्वते, परं प्रतिपादनार्थमेव परिगृह्णन्ति, तथा सति तेऽप्यर्थास्स्वमतसिद्धा एव भवेयुः। न पुनस्ते परपक्षसिद्धा इति गदितुं ते प्रभवेयुः। विज्ञानवादिनश्शून्यवादिनो वा परपक्षसिद्धं प्रमाणादिवस्तुजातमवलम्ब्यैव विचारं कुर्वन्ति, निजं मतं समर्थयन्ति च। तेषां मते प्रमाणादि न किमपि वास्तवं, सुमेरुसर्षपयोर्वैषमपरिमाणत्वादिव्यवहारा अपि काल्पनिका एव। अनादिमिथ्यासंस्कारवैचित्र्यवशत एव जगति विचित्रमिथ्याव्यवहारादिकं चलदास्ते। तस्मात्परमाण्वादिपदार्थास्तन्मते सेद्धुं नार्हन्ति। सत्येवं प्रागुक्तदोषान्नैव ते मुक्ताः भवेयुरिति॥

निरवयवपरमाणुवाद्युक्तयुक्तिसारसङ्कलनमेतत्। प्रमाणसत्तां व्यतीत्य न कोऽपि सिद्धान्तः स्थापनीयो भवति, कुतः? विना प्रामाणेन विपरीतोऽपि पक्षस्सिध्येत्। तस्मात्प्रमाणसत्ता सर्वैरप्येष्टव्या। सत्येवं प्रमाणेनैव निरवयवपरमाणोस्सिद्धौ तस्य संयोगोऽपि सिध्यति। कुतः? जन्यद्रव्यस्यमुहुर्मुहुर्विभागो भवति खलु, तस्य कुत्रचिन्निवृत्तिरास्थेया। तस्य विभागस्य यत्र निवृत्तिस्स एव परमाणुः तत्र संयोगो यदि न सम्भावितः स्यात्तर्हि तत्र विभागो नैव वर्तेत। यस्य द्रव्यद्वयस्य संयोगो नोत्पन्नस्तस्य कीदृशो विभागः? तस्मात्परमाणुद्वयस्य संयोगस्तावदङ्गीकरणीयः। सोऽयं संयोगः प्रदेशानवच्छिन्नोऽपि दिग्विशेषावच्छिन्न इति भवत्यव्याप्यवृत्तिः। संयोगमात्रमव्याप्यवृत्तीत्येतत्सत्यम्। तच्च प्रदेशविशेषावच्छेदेनैवेति नास्ति नियमः। निरवयवात्ममनसोरपि संयोगा-

ङ्गीकारात् । कस्यचित्परमाणोश्चतुष्पार्श्वतः ऊर्ध्वाधोदेशाभ्याञ्च षड्भिः परमाणुभिस्सह संयोगे सम्भावितेपि स संयोगो दिग्विशेषावच्छिन्न एव भवति । तद्द्वारा परमाणोष्षडवयववत्ता न सिध्यति । वस्तुतोऽत्र परमाणुरेकयोगान्न किमपि द्रव्यं जायते । बहवः परमाणवः कस्यापि द्रव्यस्य कारणतां न भजन्त इति प्रागवोचाम, तत्रैव वाचस्पतिमिश्रोक्ता युक्तिरप्यस्माभिः प्रादर्शि । तस्मा 'त्पिण्डस्यादणुमात्रकः' इति वसुबन्धूक्तिर्निरर्थिकैव । द्व्यणुकत्रयसंयोगाज्जायमानत्रसरेणौ यन्महत्वं जायते, तत्र द्व्यणुकत्रयगतबहुत्व कारणम् । उपादानगतबहुत्वसङ्ख्याया अपि उपादेयगतमहत्परिमाणं प्रति कुत्रचित्कारणत्वात् । परमाणुद्वययोगादुत्पन्नद्व्यणुके महत्परिमाणकारणाभावान्न तदुत्पद्यते । अतो द्व्यणुकमपि अण्वेव भवति । प्रत्येकमप्यणोर्दिग्देशभेदो विद्यते, अतोऽपि कोऽपि परमाणुरेको न भवतीत्यप्यमूलकम्, प्रत्येकं परमाणोस्सम्बन्धे षण्णां दिशां सत्वेपि तस्य भेदो न भवितुमर्हः । तस्मात्परमाणुरेकोऽपि न अनेकोऽपि नेति गगनकमलवदलीक एवेत्युक्तिर्निर्युक्तिकैवेत्यास्तां तावत् ॥

### अत्रास्तिकानां वादः.

अत्रास्तिकसम्प्रदायमध्य एव केचिदेवमाक्षिपन्ति, "नाणुनित्यता तत्कार्यत्वश्रुतेः" (५-८१) इति सांख्यसूत्रे परमाणोः कार्यत्वस्य श्रुतिसिद्धत्वोक्तेरनित्यत्वमेव सम्यक् । यद्धि श्रुतिसिद्धं तत्तर्कद्वारापह्नोतुमशक्यमिति ॥

### तद्विवेचनम्.

अत्रैवमभिधीयते । परमाणोः कार्यत्वबोधकश्रुतिः न कुत्राप्युपलभ्यते । साङ्ख्यसूत्रवृत्तिकारानिरुद्धभट्टोद्धृतं 'प्रकृतिपुरुषादन्यत्सर्वमनित्य'मिति वाक्यं श्रुतिरित्यत्र नास्ति किमपि मानम् । तत्सूत्रभाष्यकारो विज्ञानभिक्षुरपि परमाणुजन्यत्वबोधकश्रुतिं कामपि नोदाजहार । परन्तु स तत्सूत्रभाष्ये 'यद्यपि कालवशेन लोपादृयं श्रतिं दर्शयितुं न प्रभवामः

तथापि कपिलोक्तसूत्रान्मनुस्मृतितश्च सा श्रुतिरनुमेयैव। स्मृतिस्तु 'अण्व्यो मात्रा विनाशिन्यो दशार्द्धानाञ्च याः स्मृताः' (१-२७) इतीत्यवोचत्। अत्रैतद्वक्तव्यं, प्रोक्तस्मृतौ 'मात्रा" शब्दद्वारा साङ्ख्यादिवर्णितपञ्च-तन्मात्राया एव विनाशित्वमुक्तम्। न पुनः परमाणोः। एवं प्रथमे मात्राया एव विशेषणतया 'अण्वी'ति शब्दं प्रयुज्य अणुपरिमाणार्थम-भिप्रैति। अत्र परमाणुबोधतात्पर्येणाणुशब्दो न प्रयुक्तः। 'लघ्वी-मात्रा' इत्यादिप्रयोग इव 'अण्वीमात्रा' इति प्रयोगे गुणवाचक-शब्दमेवं स्त्रीलिङ्गतया प्रायुङ्क्त स्मृतिकारः। तस्मादेतद्वाक्याद्व्यात्म-कपरमाणोः कार्यत्वविनाशित्वे नैव सिध्यतः॥

किञ्च विज्ञानभिक्षुः प्रथमं यद्वाक्यादेतादृशी श्रुतिमनुमेने, तद्वाक्यं कपिलोच्चरितमित्यत्रैवास्ति महाविवादः। यदि कपिलवाक्यात्तादृशी श्रुतिरनुमीयते, तर्हि 'नाणुनित्यत्वात्' (२-२-२४) इत्यादिमहर्षि गोतमोच्चरितवाक्यात् महर्षिकणादोच्चरितच्च 'सदकारणवन्नित्यं (४-१-१ इत्यादिवाक्यात् किमणोर्नित्यत्वबोधिका श्रुतिर्नानुमातुं शक्यते? वेद प्रामाण्यसमर्थकमहर्षिगोतमकणादौ निजबुद्धिमात्रकल्पिततर्कद्वारा प्रोक्ता-वैदिकसिद्धान्तं समर्थयामासतुरित्यत्र न किमपि प्रमाणमास्ते। परन्तु-गोतमः "श्रुतिप्रामाण्याच्च" (३-१-३१) इति सूत्राच्छ्रुतिविरुद्धानु-मानं प्रमाणमेव न भवतीति सिद्धान्तं सूचयामास। भाष्यकारवात्स्या यनप्रभृतयोऽपि श्रुतिविरुद्धानुमानस्याप्रामाण्यमेव अनुमन्यन्ते। अत एवोदयनाचार्यः न्यायकुसुमाञ्जलौ न्यायमतानुसारेणेश्वरविषयेऽनुमानं प्रदर्श्य तदनुमानं न श्रुति * विरुद्धं अपि तु श्रुतिसम्मतमिति दर्शयितुं श्रुतिमपि समनन्तरमुदाजहार॥

* विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वत' पात्।
स बाहुभ्यां धमति सम्पतत्रैर्द्यावीभूमा जनयन् देव एक.॥
(३-३. श्वेताश्वतरोपनिषत्.)

एवं स तां श्रुतिमेवं व्याचख्यौ । परमेश्वरस्सृष्टेः प्राक् नित्यपरमाणूनधिष्ठाय सृष्टेर्निमित्तं तेषां द्व्यणुकादिजनकमन्योन्यसंयोगमुत्पादयामासेति । अस्यां च श्रुतौ 'पतत्रैः' परमाणुभिस्सञ्जनयन्–समुत्पादयन्', "सन्धमति–संयोजयति' इत्येवं व्याख्यां समर्थयमानः * 'परमाणुसमूहः सततं गमनं कुर्वन्त्यतो गतिशीलाः । तस्मादेव 'पतन्ति गच्छन्ति' इत्यर्थे पतधातुनिष्पन्नः 'पतत्र' शब्दः परमाणुं बोधयति" इत्येवमूचिवान् ॥

एवंच उक्तश्रुतिद्वारा परमाणोर्नित्यत्वमपि सिद्धं भवतीति नित्यत्वानुमानं न श्रुतिविरुद्धं परन्तु श्रुतिसम्मतमेवेति सिध्यति ॥

यद्यपि प्रोक्तव्याख्यामन्ये न स्वीकुर्वन्ति । तथापि उदयनाचार्यो गोतममतस्य श्रुतिविरुद्धतां नानुमनुते, किन्तु श्रुतिसम्मततयैव तन्मतं जग्राहेत्येतत्सर्वेप्यङ्गीकुर्युः । श्रुतिव्याख्यायां हि मतभेदस्तावच्चिराय तिष्ठत्येव, उदयनाचार्यो यथा श्रुतिं स्वमतसमर्थनाय बलाद्व्याचख्यौ, तथा निजमतपोषणाय बहवो दार्शनिकाः श्रुतिस्थानेकशब्दद्वारा कष्टकल्पनया अप्रसिद्धानप्यर्थान्निरूपयन्ति । तन्मध्ये कोऽर्थस्समीचीनः, कश्चार्थः कल्पित इत्येतन्निर्णये भगवतो वेदपुरुषस्य परिपूर्णानुग्रह आवश्यकः । केवललौकिकी बुद्धिः लौकिको विचारश्च न निर्विवादनिर्णयायालमिति मद्गुरुभावफणिभूषणप्रणाली । एवञ्च आनुपलम्भिकमाध्यमिकविज्ञानवाद्युक्तानां बाधकानां निरासात् अनुमानागमरूपसाधकसत्वाच्च नित्यनिरवयवपरमाणुसिद्धिर्निष्प्रत्यूहैव । तद्व्यादि-

* 'षष्ठेन परमाणुरूप–प्रधानाधिष्ठेयत्वं,–ते हि गतिशीलत्वात्पतत्र व्यपदेश्याः—पतन्तीति । सं धमति सञ्जनयन्निति च व्यवहितोपसर्गसम्बन्धः । तेन संयोजयति समुत्पादयन्नित्यर्थः'—न्यायकु. पञ्चमस्त. तृतीयकारिकाव्याख्यायाश्चरमो भागः.

योगाद्व्यणुकादिजगत उत्पत्तिरिति वाद एवारम्भवादः योगवाद इत्यादि-शब्दैर्व्यपदिश्यते। तद्वादिनस्तु न्यायवैशेषिका एव। अतएव ते योग-पदबोध्या भवन्तीति सिद्धम् ॥

## ६. कालः.

सम्प्रति स योगशब्दः कं कालमारभ्य नैय्यायिकादौ प्रयुक्त इति चिन्तनीयम्। तत्र वात्स्यायनीयन्यायभाष्य एव तस्य प्रथममुपलब्धेस्तत्का-लाधिगतिरेवेदानीं शरणीकरणीया। सा च अद्यत्वे उपकरणाभावादतीव दुरवधारणा। वात्स्यायनवेलान्वेषणे प्रवृत्ताः बहवः प्राच्यपाश्चात्यपण्डिता अपि भिन्नभिन्नामेव सरणिं प्रतिपेदिरे। तेषु नरेन्द्रचन्द्रनामा प्राच्य-पाश्चात्यविपश्चिद्वरेण्यस्स्वीयासाधारणधीबलेन वात्स्यायनवेलां निर्णया-ञ्चक्रे। तत्सर्वमपि अनतिविस्तरं सविभागविवेचनमत्र प्रदर्श्यते ॥

I वेबरनामा (Weber) पाश्चात्यपण्डितकुलोत्तंसः* 'कावेल (Cowell) महाशयस्य कुसुमाञ्जलिभूमिकातः पक्षिलस्वामिभो वात्स्या-यनस्य वा टीका दिङ्नागाविर्भावतः प्रागेव निर्मिता। एतेन वात्स्यायनः क्रिस्तीयषष्ठशताब्द्याः प्रारम्भे भाष्यं लिलेखेति सूच्यत' इत्येवं ब्रवीति॥

II जेकबिमहाशय† (Dr. Herman Jacobi) श्चैव लिखति 'न्यायदर्शनं ब्रह्मसूत्रं च २०० आरभ्य ४५० क्रिस्तशताब्द्याः मध्ये

---

* "From Cowell's preface to his Edition of the Kusumanjali (1864), it appears that the commentary of Pakshilaswamin, whom he directly identifies with Vatsyayana, was composed prior to Din-naga that is to say, somewhere about the beginning of the sixth century" (History of Indian Literature, Weber—P. 245.)

† Nyaya-Darsana and Brahma-Sutra were com-posed between 200 and 450 A.D. During that period

## श्रीकृष्णराजजन्मोत्सवहर्षोद्गमः

---

श्रीमन्महीशूरनरपतितुर्यकृष्णराजेन्द्रसार्वभौमस्य द्विपञ्चाशत्तम-संवत्सरीयाभिजन्ममहोत्सवमुपलक्ष्य प्रवर्तितासु कवितास्पर्धासु वरणीय-तया अभ्युपगतानि संस्कृतकलाशालीयाविनेयवृन्दप्रणीतानि पद्यानि—

श्रीसर्वमङ्गळायाः सुतवर्योऽनन्यसव्यपेक्षस्त्वम् ।
सर्वाणि मङ्गळानि प्रदिश्य श्रीकृष्णराजमव नित्यम् ॥ १ ॥
(के. कृष्णजोयिसः)

प्रत्ययमुचितं शुद्धप्रकृतिषु संयोज्य शुद्धततररूपम् ।
व्यवहारमादधानो भूपोऽयं पाणिनिर्नूनम् ॥ २ ॥
(पि. विठ्ठलदासाचार्यः)

वृषाङ्कयोरीश्वरयोर्विभूति-
मुपेयुषोरेष परं विशेषः ।
राजोत्तमाङ्गे निहिताङ्घ्रिरेकः
तत्पादधन्यस्वशिरास्तदन्यः ॥ ३ ॥
(पि. गणपति आचार्यः)

वेदनयाश्लिष्टोऽसौ वेधा विष्णुर्गदान्वितो भूप ।
गौरीजानिश्शूली विषादनश्चापि कोऽस्ति ते तुल्यः ॥ ४ ॥

अबन्धि मुरवैरिणा सगरजैरदायुन्मदैः
अतारि कपिना मुहुः पुनरशासि दैत्यारिणा ।
अमन्थि सुरदैवतैः पुनरपायि तेनर्षिणा
सरित्पतिरयं क्व ते क्व च विभो! यशोवारिधिः ॥ ५ ॥

हंसालयोऽस्मि विलसन्मणिरञ्जितोऽस्मि
सन्मानसोऽस्मि सुमहीधरनायकोऽस्मि ।
इत्थं मुहुर्जड ! हिमालय ! मास्म दृप्यः
कृष्णक्षितीशसवितुः पुरतः कियांस्त्वम् ॥ ६ ॥

कर्त्री का साङ्ख्यशास्त्रे[1] खरकरतनयातीरलीलारतः कः[2]
व्योम्न्येवं यान्ति के[3] वा जलपतिगृहदिक्का[4] भवानीपतिः कः[5]॥
एषां वर्णैर्द्वितीयैर्घटितशुभतमं नाम यस्योरुशक्तेः
तं श्रीचामुण्डिकाम्बा गुणगणनिलयं पातु कृष्णक्षितीशम्॥७॥
(पि. पि. सुब्बरायोपाध्याय.)

श्रीकृष्णावनिपालको विजयतामाकल्पमुर्वीतले
सत्कारुण्यतरङ्गवर्धितमहाशाला च भूयाच्चिरम्
छात्रैस्साकमशेषपण्डितवराः पुण्णन्तु वाणीमिमाम्
श्रीविद्यागजवक्रपादयुगलं भव्यं सदा दाशतात् ॥ ८ ॥
(के. आर्. सुब्बरायशास्त्री)

---

[1] प्रकृतिः. [2] कृष्ण . [3] पक्षिणः. [4] प्रतीची. [5] ईशः.

वाक्यानां 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्; वैश्वानरं द्वादशकपालं निर्वपेत्।' इति क्रमाम्नातेष्वङ्गत्वं यथाक्रमपाठात् । नक्षत्रेष्टि-सन्निधिपठितोपहोमानां नक्षत्रेष्ट्यङ्गत्वं सन्निधिपाठात् । नक्षत्रेष्टेः प्राकृताङ्गैर्निराकांक्षत्वेन प्रकरणादङ्गत्वायोगादिति प्राचीनप्रवादः । स्व-स्वबोधकवाक्यान्यतरसमानदेशीयत्वसम्बन्धेन किञ्चित्पदार्थविशिष्टत्वं स्थानमिति निष्कर्षः । उक्तसम्बन्धेन तत्पदार्थविशिष्टत्वं तद्विनियोजक-क्रम इति यावत् । एतेन देशसमानत्वं प्राथम्यादिरूपसादृश्यमित्युक्तौ यथाक्रमपाठसङ्ग्रहेपि अभिन्नदेशतायामुपहोमाङ्गताप्रमाणभूतायामव्याप्तिः इति निरस्तम्। अन्यतरत्वादिना सम्बन्धानुगमसम्भवेन सम्बन्धाननुगम-स्यादोषतया उक्तनिरुक्तावव्याप्त्यसम्भवात् । यथाक्रमपाठस्थले याज्या-मन्त्राणामैन्द्राग्नादिषु, सान्नाय्यसन्निधिपठितस्य 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रस्य सान्नाय्ये च स्वबोधकवाक्यसमानदेशीयत्वसम्बन्धेन-वैशिष्ट्याभावादव्याप्तिरतः स्वेति । उपहोमबोधकवाक्यसमानदेशीयत्व-सम्बन्धेनोपहोमवैशिष्ट्यसङ्ग्रहाय स्वबोधकवाक्येति । न च विकृत्युप-होमयोरेकदेशानुष्ठेयत्वेन स्वसमानदेशीयत्वसम्बन्धेनोपहोमवैशिष्ट्यस्य विकृतौ क्रमत्वोपपत्तौ स्वबोधकवाक्यसमानदेशीयत्वस्यासङ्ग्रहेप्यदोष इति वाच्यं । विकृत्युपहोमयोरङ्गाङ्गित्वानवगतौ उपहोमानां विश्व-जिन्न्यायेन फलार्थत्वापत्त्या भिन्नदेशानुष्ठेयत्वापत्तेस्तयोरेकदेशानुष्ठेय-त्वस्याङ्गताबोधोत्तरकालीनत्वेनाङ्गत्वप्रमाणत्वानुपपत्तेरुपहोमबोधकवाक्य — समानदेशीयत्वस्यैवाङ्गत्वप्रमाणत्वावश्यकत्वे सङ्ग्राह्यत्वात् । उक्त-देशीयत्वञ्च उक्तदेशवृत्तित्वं । तच्च अनुष्ठेयत्वपठितत्वान्यतरसम्बन्धेन । तेन पशुधर्मबोधकवाक्यसमानदेशानुष्ठेयत्वस्य उपहोमबोधकवाक्यसमान-देशपठितत्वस्य च सङ्ग्रहः । उक्तसम्बन्धेन समिद्यागवैशिष्ट्यस्य च तनूनपादादौ सत्त्वेपि वक्ष्यमाणरीत्या प्रकरणप्राबल्याद्दर्शपूर्णमासाङ्गत्व-स्यैवावगतेर्न समिद्यागस्य तदङ्गत्वम् ॥

नव्यास्तु—इतिकर्तव्यतात्वेनायोग्यसम्बन्धयोर्वाक्यार्थयोः सान्निधिः क्रमः। इतिकर्तव्यतात्वेनायोग्यत्वञ्च द्वेधा। क्वचित्तदाकांक्षाविरहात्। यथा विकृतौ। क्वचिदव्यापारात्मकत्वात्। यथा अनुमन्त्रणजपादिमन्त्रादौ। एकवाक्योपात्तव्रीहियागादिसन्निधेरपि क्रमत्वापत्तेर्वाक्यार्थेत्युक्तं। प्रयाजाद्यङ्गवाक्यप्रधानवाक्यार्थयोः सन्निधौ स्थानत्वापत्तिनिरासायाद्यं विशेषणं। वाक्यार्थसन्निधेरुक्तत्वान्नानुष्ठानसादेश्यासङ्ग्रह इत्याहुः। अत्रोपहोमवाक्यार्थस्य व्यापाररूपत्वेनेतिकर्तव्यतात्वेनान्वययोग्यत्वात्। अन्यथोत्थाप्येतिकर्तव्यताकांक्षयापि तदन्वयानापत्तेस्तत्सन्निधावव्याप्तेः। सन्निधिपाठ-यथाक्रमपाठ-स्थलीयसन्निधित्वानिरुक्तेः। व्रीहियागसन्निधेः प्रयाजादिवाक्यप्रधानवाक्यार्थसन्निधेश्च सत्त्वेपि "प्रधानेन व्यपदेशा भवन्ती"तिन्यायेन तदङ्गाङ्गिभावस्य श्रौतप्राकरणिकत्वव्यवहारापपत्तेस्तद्वारकविशेषणद्वयवैयर्थ्यापाताच्चैतदुपेक्षितम् ॥

केचित्तु—देशसामान्यमित्यस्य प्रधानविपरिवृत्तिविशिष्टदेशवृत्तित्वमित्यर्थः। अतः सामान्यपदेन प्राथम्यादिसादृश्यविवक्षायामभिन्नदेशत्वासङ्ग्रह अभेदविवक्षायां सदृशदेशत्वासङ्ग्रह इति दूषणमनवकाशमित्याहुः। तन्न। देशे प्रधानविपरिवृत्तिवैशिष्ट्यानिरुक्तेः। उपहोमदेशे दर्शपूर्णमासविपरिवृत्तेरपि स्मृत्याद्यात्मिकायाः कदाचित्सत्त्वादुपहोमानां तदङ्गत्वापत्तेश्च। न च शास्त्रीयत्वं विपरिवृत्तौ विशेषणमतो नोक्तदोषः। दर्शपूर्णमासशास्त्रस्मृतिजन्यायाः शास्त्रीयदर्शपूर्णमासविपरिवृत्तेऽपि तत्र संभवात्। न च प्रधानविपरिवृत्तिविशिष्टदेशवृत्तित्वं स्वविनियोजकक्रमः, दर्शपूर्णमासयोरुपहोमप्रधानत्वाभावान्नदोष इति वाच्यं। अङ्गत्वज्ञानजनकक्रमशरीरेऽङ्गतानिरूपकत्वरूपप्राधान्यविशेषणेऽन्योन्याश्रयप्रसङ्गात्। अतोऽस्मदुक्त एव सादेश्यनिष्कर्षो गरीयान् ॥

अयं च द्विविधोऽपि क्रमः प्रत्येकमुभयाकांक्षयाऽन्यतराकांक्षया

च विनियोजक इत्यतः षड्विधः। तत्र प्रधानस्य विकृतित्वेऽनुष्ठानसादेश्यस्यान्यतराकांक्षया विनियोजकत्वं। यथा, उक्तपशुधर्मस्थलीयानुष्ठानसादेश्यस्य क्लृप्तोपकारप्राकृताङ्गनिराकांक्षतया प्रधानस्याऽऽकांक्षाभावात्। प्रधानस्य प्रकृत्यनिरूपकदर्विहोमादिरूपत्वे तु, अनुष्ठानसादेश्यस्योभयाकांक्षया विनियोजकत्वं। एवमैन्द्राग्नादिविकृतिक्रमपठितमन्त्राणामन्यतराकांक्षासहकृतयथाक्रमपाठात्तदङ्गत्वं। यद्यपि याज्यानुवाक्यामन्त्राणां लिङ्गविनियोज्यत्वेन यथाक्रमपाठस्य तत्रापूर्वविशेषसाधनत्वबोधकत्वमेव। न तद्विनियोजकत्वम्। तथापि विकृतिक्रमपठितलिङ्गविनियोज्यजपादिमन्त्राणां यथाक्रमपाठ एवान्यतरकांक्षासहकारेण विनियोजकोऽन्वेषणीयः। अत एव दर्विहोमाद्यङ्गभूतजपादिमन्त्राणां यथाक्रमपाठ एवोभयाकांक्षया विनियोजकोदाहरणम्। एवमुपहोमीयिविकृतिसान्निधिपाठोऽन्यतराकांक्षासहकृतस्तदुदाहरणम्। शुन्धनमन्त्रस्य सान्नाय्यपात्रप्रोक्षणे लिङ्गादेव विनियोगात्तस्य सान्नाय्यसन्निधिपाठः साक्षादविनियोजकोऽपि; अपूर्वविशेषसाधनत्वोपस्थापकत्वेन विनियोगप्रयोजकत्वादुभयाकांक्षासहकृतसन्निध्युदाहरणं संभवति। प्रकृतित्वानिरूपकप्रधानसान्निधिपठितारादुपकारकस्य प्रकरणविनियोज्यत्वात्। अत्राऽन्यतराकांक्षासहकृतक्रममात्रस्येतिकर्तव्यताकांक्षोत्थापकतया प्रकरणाद्दुर्बलत्वं स्पष्टम्। उभयाकांक्षासहकृतयथाक्रमपाठानुष्ठानसादेश्ययोर्विधिसन्निधिघटितप्रकरणाद्दुर्बलत्वमपि॥

एवं विनियोजकप्रकरणसहकृतपाठसन्निधेस्तु स्वतोऽविनियोजकत्वादपि दुर्बलत्वं। प्रकरणापेक्षया क्रमस्य दुर्बलत्वादेव चेष्टिपशुसोमयागात्मकराजसूयान्तर्गताभिषेचनीयसन्निधिसमाम्नातविदेवनादीनामन्यतराकांक्षासहकृतसन्निधिपाठादभिषेचनीयमात्राङ्गत्वप्रसक्तौ राजसूयमहाप्रकरणाद्राजसूयाङ्गत्वमित्युक्तं बलाबलाधिकरणे। न च राजसूयस्यापि

विकृतिसमुदायात्मकत्वेन प्राकृताङ्गैरेव निराकांक्षत्वात्प्रकरणासम्भवः । प्रत्येकजन्यपरमापूर्वाणां प्राकृताङ्गैर्नैराकांक्ष्येऽपि सर्वयागजन्यपरमापूर्वस्य साकांक्षत्वेन तदनुकूलप्रत्येकपरमापूर्वनिष्ठयोग्यताजनकत्वेन प्रकरणग्राह्य त्वोपत्तेः । न च सर्वयागजन्यैकपरमापूर्वे मानाभावः । दर्शपूर्णमासयोः समुदितसाधनताश्रवणस्य समुदायापूर्व इव सर्वयागसमुदायात्मकराजसूयत्वावच्छिन्नसाधनताश्रवणस्यैव तत्र मानत्वात् । तदनङ्गीकारेऽपि वा पवित्रादारभ्य क्षत्रस्य धृतिं यावदङ्गविधिषु 'राजसूयाय ह्येना उत्पुनाति' इत्यनेनोपक्रमात् 'राजसूयेनेजानः सर्वमायुरेति' इत्युपसंहाराद्वाचनिकाङ्गसन्दंशेन राजसूयत्वेन रूपेण सर्वेषामाकांक्षायाः उत्तेजनात्तत्प्रकरणोपपत्तेश्च । एवमन्यविधक्रमस्यापि प्राबल्यदौर्बल्ये उदाहरणानि सुधीभिर्यथासम्भवमूह्यानि ॥

इति स्थाननिरूपणम्.

---

### अथ समाख्या निरूप्यते.

समाख्या यौगिकः शब्द इति प्राञ्चः । परस्परार्थान्वयतात्पर्यकपदघटितयौगिकशब्दत्वं समाख्यानमिति तु निष्कर्षः । स्वघटकपदार्थनिरूपितस्वघटकपदार्थनिष्ठाङ्गत्वबोधके द्वंद्वेऽतिव्याप्तिवारणाय घटितान्तं । 'धेनुर्दक्षिणा' इत्यादिवाक्येऽतिव्याप्तिवारणाय यौगिकशब्देति ॥

अथ यौगिकत्वं नानेकपदघटितत्वं । 'धेनुर्दक्षिणा' 'शुक्लो घट' इत्यादिव्यस्तवाक्यसाधारणत्वात् । अत एव न विग्रहवत्त्वं । स्वसमानार्थकवाक्यान्तरकत्वरूपस्य तस्य गौर्भृतिः, श्वेतः कलशः, इत्यादिवाक्यान्तरमादायोक्तव्यस्तवाक्येऽपि सत्त्वात् । न च स्वघटकपदघटितविग्रहकत्वस्य तत्त्वान्नोक्तदोषः । 'गौर्दक्षिणा,' 'श्वेतो घट' इत्यादिवाक्यमादायोक्तदोषात् । स्वघटकयावत्पदघटितविग्रहकत्वं, 'आध्वर्यव'मित्याद्य-

स्वपदविग्रहकसमाख्यास्वव्याप्तमिति चेन्न । आनुशासनिकानुपूर्वीकपद-घटितत्वस्य प्रकृते यौगिकत्वरूपत्वात् । कृदन्ततद्धिताद्यानुपूर्वी, आनु-शासनिकीति न दोषः । अत्र 'यजेते' त्यादिपदश्रुतावतिव्याप्तिवारणाय सुबन्तत्वं परस्परार्थान्वयतात्पर्यकपदविशेषणं बोध्य । 'आध्वर्यव'मित्यादौ सुबन्तादेव तद्धितोत्पत्तेः । 'होतृचमस' इत्यादौ 'सुप्सुपे' त्यनेन सुबन्तयोरेव समासविधानादस्ति सुबन्तपदघटितत्वं । 'यजेते'त्यादौ न तदिति न दोषः ॥

वस्तुतस्तु—परस्परार्थान्वयतात्पर्यकपदघटितत्वे सति सुबन्तत्वं समाख्यात्वं । 'कृत्तद्धितसमासाश्च' इत्यनेन कृदन्ततद्धितान्तसमासेषु प्रातिपदिकसञ्ज्ञावगमात्तेषां सुप्प्रकृतित्वरूपसुबन्तत्वमिति लक्षणसमन्वयः। सुबन्तसोमादिपदं द्वंदे चातिव्याप्तेर्घटितान्तम् । 'सोमेन यजेत' इति सुप्तिङ्घटितसमुदायेऽतिव्याप्तेः सुबन्तेति । 'अर्थवदधातुरप्रत्ययः प्राति-पदिकं' इति सूत्रेऽप्रत्ययपदस्य प्रत्ययतदन्तान्यपरतया सुप्तिङ्घटितसमुदा-यस्य प्रातिपदिकसञ्ज्ञाभावेन तदुत्तरं सुपोऽनुत्पत्तेः । 'धेनुर्दक्षिणा' इत्यत्र दक्षिणाप्रतिपादिकस्य सुप्प्रकृतित्वेऽपि धेनुर्दक्षिणापदघटितसमुदा-यस्यातत्त्वान्नातिव्याप्तिरिति न तद्वारकतया यौगिकत्वनिवेश इति तत्त्वम् ॥

सा च द्विविधा वैदिकी लौकिकी चेति । याजुर्वेदिकपदार्थेषु आध्वर्यवमिति आर्ग्वेदिकेषु हौत्रमिति । सामवेदिकेषु औद्गात्रमिति । तथा होतृचमस इति पात्रविशेषे । पौरोडाशिकमिति दार्शपूर्णमासिक-पदार्थेषु या समाख्या सा, आध्वर्यवमधीयत इत्यादिवेदप्रयुक्तत्वाद्वैदिकी । सोमचमस इत्याद्या याज्ञिकप्रयुक्ता लौकिकी । अत्र विशेष्यविशेषण-सम्बन्धस्य सिद्धवन्निर्देशात्तदन्यथानुपपत्त्याऽवयवार्थसंबन्धबोधकं वाक्य-माकांक्षायोग्यतादिबलेन कल्पयित्वा कर्तृत्वादिरूपः सम्बन्धः प्रतीयत

इति सा विशेषणस्य विशेष्याङ्गतायां प्रमाणं । उक्ताङ्गत्वस्य च प्रमाणान्तरागम्यत्वात्समाख्यानिकत्वं । अत एव यत्र वाक्यादिप्रमाणन्तरेण समाख्याघटकीभूतपदार्थस्याङ्गत्वावगमस्तत्र न समाख्यानिको विनियोगः। यथा, 'निर्मन्थ्येनेष्टकाः पचंति' 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहंति' इत्यादौ मन्थनप्रोक्षणादेः । तत्र मन्थनकर्मभूताग्नेः, प्रोक्षितोलूखलमुसलयोश्च विध्यन्वयेऽपि प्राप्ताप्राप्तविवेकेन मन्थनप्रोक्षणयोरेव विधितात्पर्येण विनियोगस्य वाक्यीयत्वात् । 'आध्वर्यवमधीयते' इत्यादौ त्वध्वर्य्यादेर्विधितात्पर्यविषयत्वात्समाख्याविनियोज्यत्वमेव ॥

अत्र च समाख्याघटकीभूतपदार्थयोः संसर्गविधादिना सम्बन्धे बुद्धे तन्निर्देशान्यथानुपपत्त्या न स्वतन्त्रो विधिः कल्प्यते अध्वर्युगुणान्वाधानादि कर्तव्यमिति, गौरवात् । अपि तु 'अध्वर्युं वृणीते' इत्यध्वर्युवाक्यस्यान्वाधानादिवाक्यस्य चैकवाक्यतासंपादकपदमात्रं 'अध्वर्युं वृणीते सोऽग्नीनन्वादधाति' इति । तच्च द्वयोर्विध्योरेकबुद्धिस्थतारूपस्थानकल्पनां विना न सभवतीति कल्पयित्वा, अध्वर्य्वादेश्च व्यापारविषयतया इतिकर्तव्यतात्वं प्रकल्प्य तदाकाङ्क्षारूपप्रकरणकल्पनया द्वयोर्विध्योर्महावाक्यैकदेशत्वरूपपारिभाषिकपदत्वाक्रान्तयोः सन्निधिरूपं वाक्यं कल्प्यते । ततश्चाध्वर्युनिष्ठयोग्यतारूपलिङ्गं प्रकल्प्यैकवाक्यतासंपादकपदरूपश्रुतिकल्पनात्समाख्याया विनियोजकत्वम् ॥

अत एव पञ्चान्तरितप्रामाण्यकत्वेन समाख्यायाश्चतुरन्तरितप्रामाण्यकस्थानापेक्षया दुर्बलत्वं । अत एव पौराडाशिकसमाख्याते काण्डे समाम्नातस्य 'शुन्धध्वं' इति मन्त्रस्य समाख्यया पुरोडाशसाध्याग्नेयादियागीयपात्रप्रोक्षणाङ्गत्वे प्रसक्ते सान्नाय्यसन्निध्याख्यस्थानात्साय्यपात्रप्रोक्षणाङ्गत्वमित्युक्तं बलाबलाधिकरणे। यद्यप्यत्र लिङ्गस्य विनियोजकत्वेन स्थानसमाख्ययोरपूर्वविशेषसाधनत्वबोधकत्वमेव, तथाऽपि विनियोगप्र-

माणसहकारित्वादुदाहरणत्वोपपत्तिः । तयोरेव विनियोजकत्वोदाहरणन्तु मृग्यमित्यनवद्यं श्रुत्यादिप्रमाणकमङ्गत्वम् ।

इति समाख्यानिरूपणम्.

---

श्रीजैमिनीयाभिमताङ्गताया-
स्तत्तन्निबन्धेष्वपि तन्निबन्धे ।
अनुग्रहं सुग्रहमत्र कर्तुं
मुरारिरेतामकरोन्निरुक्तिम् ॥
मुरारिर्निर्मिता न्यायमीमांसावासितात्मनाम् ।
तोषाय विदुषामेषा कण्ठभूषा प्रकल्प्यताम् ॥

इति श्रीमन्न्यायमीमांसापारावारपारीणमुरारिमिश्रविरचिता षट्प्रमाण-
काङ्गत्वनिरुक्तिः समाप्ता.

---

भवन्तं भूमानं कमपि दयमानं मम विभो
व्यपोह्योद्दामानं पटलगदमानन्दय दृशौ ॥ ६६

असौ मे दृष्ट्यात्मा कलुषपटलाच्छादितघन
स्स्वतस्सिद्धज्योत्स्नो मणिरिव लुठत्यत्र विवशः ।
निरस्ते मालिन्येऽच्युत तव दृशाऽर्चिस्स्रुतिमय
न्ननावृत्या भायात्त्वदनुभवजानन्दविवशः ॥ ६७

अहो मेऽक्षिद्वन्द्वं पटलपटवेश्मावृतिवशा
न्नितान्तं दूष्यान्तर्गतमिदमपाङ्गामृतझरैः ।
अदूष्यं निर्णिक्तं यदि रचयितास्यच्युत विभो
जुगुप्स्यं न स्यात् त्वत्परिचरणयोग्यं च भविता ॥ ६८

इदं चक्षुश्शस्यं त्वदनघकृपास्पर्शनवशा
द्भृशं पूतं भूयात्तुषपटलविक्षेपविशदम् ।
इतस्संसिद्धार्था ललितपरिपाकास्सुरुचय-
स्स्वदन्तां भुक्त्यैते सहपरिकरव्यञ्जनमिह ॥ ६९

इदं नेत्रद्वन्द्वं भवतु मम क्लृप्तप्रसदनं
बृहद्धामेति त्वामविरतमुपासेऽखिलविभो ।
इहैवैतत्सिद्धं यदि भवति मे तत्क्रतुनयात्
परत्राप्येवं स्यात्सकलमिति नैवास्ति विशयः ॥ ७०

कटाक्षस्पर्शात्ते सपदि विदलत्कञ्चुकतया
विविक्तव्यक्ताङ्गीमथ च विगलत्स्वांशुकतया ।
त्वदेकान्तां कान्तामनघतरसुस्पर्शविषयां
दृशं स्वामिन्नेतां कलय परिरम्भप्रमुदिताम् ॥ ७१

इदं तावत्स्वामिन् जटिलपटलाम्भोधिमथनात्
प्रकाश्यातिस्वच्छं मम नयनरत्नं द्युतिघनम् ।
विदध्यास्त्वं हृद्यं जलधितनयाकान्त तदिदं
श्रिया लाल्यं च स्यादिह सहजवात्सल्यघनया । ७२

इदं चक्षुः कृष्णं स्वमिव नयनाद्याहिदलना-
न्निगीर्णं तेन त्वं क्षतिविरहितं दर्शयसि चेत् ।
प्रतीतो नन्दस्स्यात्त्वदधिकवने गोप्रसरणा-
न्निरातङ्कान्मोदस्तव च ननु गोविन्द भविता ॥ ७३

नतानाचिन्वन्तं दुरितमपचिन्वन्तमखिलं
रिपूनुच्चिन्वन्तं कुशलमुपचिन्वन्तममितम् ।
भजे त्वां श्रीमन्तं भवदवतटित्वन्तमनिशं
दुरन्तामत्यन्तं नयनरुचिमन्तं नय हरे ॥ ७४

अमन्दं भिन्दाना तिमिरपटलं त्वत्करुणया
दृगेका भास्वत्त्वं भजतु मम राजत्वमितरा ।
इहैव त्वत्साम्यं बत दधदथाहं तव कृते
जगद्व्यापारं च प्रथयितुमपेक्षे ननु हरे ॥ ७५

त्वमेवेदं प्रादाः करणमखिलं मे सहवपु
स्त्वदर्चायै श्रीमन्निह करणमेकं तु विकलम् ।
समाधातुं चिन्तां यदि कलयसे कः प्रभविता
जगत्कल्यं शक्तः कलयितुमिनात्कोत्र वद मे ॥ ७६

हरे पद्मोल्लासप्रद तव शुभालोकविशदं
पुरः कल्यं चक्षुस्सुखदमिदमाविर्भवतु मे ।

प्रतीचीनः कालं क्षपयसि यदि त्वं च भगवन्
प्रणष्टप्रायास्स्युः ककुभ इह गाढान्धतमसैः ॥ ७७

फणाभृच्छैलेन्दो शिशिरतरमूर्तेक्षणदया
समाश्लिष्टः पूर्णो घनशितिरुचिः पश्यसि यदि ।
दृशोराच्छादं संतमसमलसं तन्नधुनुयाः
कथं वा स्यात्किं वा सदृश उपतापः पुनरपि ॥ ७८

इयं कर्मव्याधप्रततपटलोन्माथकुहरे
निमग्नाः संविघ्नास्खलितचरणा दृष्टिहरिणे ।
विमोच्यास्माद्बन्धाज्झटिति हरिणाश्लेषिततया
त्वया नेया धाम स्फुरितवनमालं ननु विभो ॥ ७९

समुद्धाख्योद्गाढं पटलनिभकोशं गमय भो
मुकुन्दं स्वं श्रीमन् वरनयननीलं शुभनिधे ।
तवैवेदं स्वं स्यान्नतु तव सहावस्थितिजुषोऽ-
प्यलं सख्युश्चाप्यात्मन इतरशीलस्य भगवन् ॥ ८०

नितान्तं तप्तस्याऽच्युत भवदवाप्त्याऽखिलविभो
रुजाऽक्षिप्रान्तस्था मम दुरपनोदा भवति या ।
असौ (हो)निर्विण्णस्यानघ भवदवाप्तयैव सुतरां
रुजाऽक्षिप्रान्तस्थाऽस्त्विति यदभिलष्येऽद्भुतमिदम् ॥ ८१

रुजाच्छादापाण्डुं यदि दृशमिमां मेचकयसे
घनश्रीमन् कृष्ण प्रविगलितबाष्पाम्बुशिशिरः ।
मुदाहं नृत्येयं विततपरिबर्हस्तवपुर
स्तदा मां पश्यन्तस्समभिदधते केकिनामिह ॥ ८२

स्वतस्सिद्धं श्रीमन् पृथुलपटलाच्छादनवशात्
  दृगेका दाक्षिण्यं त्यजति खलु वामत्वमितरा ।
यथार्हे द्वे एते अपि ननु भजे तां पृथगिमे ।
  सकृद्वाऽवैषम्यादविषम यथेष्टं कुरु कृपाम् ॥ ८३

इयं नीला सश्रीरपि च सरसा दृग्विरहित
  त्वदीक्षासंप्राप्ता रुचिरललितालङ्करणताम् ।
परिग्लानामेनां पटलककवाटं विघटय
  न्नपाङ्गेनान्तस्थां कृतरुचि समाश्वासय विभो ॥ ८४

विभो भास्वच्छायापटलमुषितच्छायकनया
  विवर्णा श्यामाऽन्यादृगिह सुदृशां सादृतिपदम् ।
विधून्वन्वैवर्ण्यं विरचय सुवर्णाकृतिमिमां
  ततस्सेवेय त्वां शुभगुणतयालङ्कृतमुखः ॥ ८५

अहो श्यामा मे दृक् तिमिरपटलाच्छादकलुषा
  दिशो मे नश्यन्ति प्रदिश इति यास्ता अपि तथा ।
प्रसादं निर्बाधं भृशमिह विधेया ननु विधो
  ततः पश्येयं त्वां जगदखिलमात्मानमपि च ॥ ८६

रुजालूतातन्तुप्रविततवितानस्थगनभा-
  ग्भवद्धामाक्षीदं ननु रचय पूत्कारविमलम् ।
श्रिया सार्धं स्वामिन्निह कलय सान्निध्यमनिशं
  हतो मे पाप्मायं यदपहतपाप्माऽसि भगवन् ॥ ८७

सुदुर्दर्शं गूढं मणिमिव गुहान्तस्थमधुना
  यदध्यात्मं योगस्तदधिगमतः कृष्णमनघम् ।

श्रिया भास्वन्नेत्रं परमभिदिदृक्षे कुरु कृपां
प्रहर्षश्शोको वा क इव भवदीक्षां श्रितवतः ॥ ८८

तवाक्षीदं स्थानं तव मम च यद्दक्षिणमहो
तथाऽपि स्वाक्ष्ण्येव स्फुरति तव दाक्षिण्यमिति मे ।
तमोग्रासं तस्य क्षपयसि जवान्नास्यतु तथा
समस्सर्वेषां त्वं किमिह तव वैषम्यमुचितम् ॥ ८९

शुभाङ्कूरावालं शुचिरुचिरशीलं ननु विभो
विधुश्रीमत्फालं विनतभयकूलङ्कषदयम् ।
भवन्तं श्रीलोलं भवजलधिकूलं शरणये
विदध्यास्त्वं नीलं मम नयनमालम्बितरुचि ॥ ९०

अयं हीयत्कालं विविधविषयार्थापहरणा
पराधौघान्नीतः पटलमयकारानिवसतिम् ।
इदानीं दीनात्मा मम नयनचारोऽखिलविभो
विमोच्य स्थाप्यस्त्वच्चरणयुगकैङ्कर्यनियतः ॥ ९१

बृहद्भानुज्योतिःपटलमयधामावृतिवशा-
दसत्कल्पं स्वल्पद्युति भवति लीनं क्वचिदिदम् ।
धमन्याभिध्मातं ननु तव दृशा निष्कलुषितं
भवद्रूपं श्रीमन् प्रकटयतु मे ध्वस्ततिमिरम् ॥ ९२

न्यरौत्सीन्नामैतत्पटलमिहपाटच्चरदशां
प्रपन्नं सम्पन्नां वसुभिरनिशं मामकदृशम् ।
इदं भिन्दन्नेतत्प्रमुषितनिजार्थाहरणत(र्थोपहरणा)-
श्शुचा(च्छुचा)दीनामेतां सकरुण समुल्लासय विभो ॥ ९३

इदं चक्षुश्छन्नं विषमविषयप्रान्तरगतौ
गतक्षोभक्षुण्णप्रततपटलच्छन्नरजसा ।
फणाभृच्छैलेन्दो क्षपय कृपया दिव्यसरिता
त्वमेतन्मालिन्यं ननु वितनु धन्यं च तदिदम् ॥ ९४

दृगेषा कालिन्दी पटलमयफेनापनयना-
द्दशा ते संक्लप्तात्सपदि गमिताशुद्धिममिताम् ।
मरीचीवीचीभिः स्फुटतरमनीचीभिरनघां(रुचितां)
सपर्यां पर्याप्तामुपहरतु पाद्यार्घ्यकलनात् ॥ ९५

अधश्शुभ्रं नीलं तदुपरि च नेत्रं मम पुरा
मुरारातेऽद्यत्वे पुनरतितरां पाटलमिदम्(महो) ।
फणीशक्षोणीभृद्रमण बहुधा धूसरमभू-
द्विचित्रा ते शक्तिर्विशदय तदेतत्करुणया ॥ ९६

अरिष्टं यद्दृष्ट्यामिदमुपनतं पाटलमभू-
दमुष्मिन् श्रीजाने यदि लवभिदां त्वं वितनुयाः ।
तदा स्यादेतस्या नियतमुदितं पाटवमथ
त्वदालोकायैषा प्रभवति किमस्त्यर्गलमिह ॥ ९७

इयं सासक्तिश्चेद्भवति गुणहीनैव दृगिति
प्रकामं प्रब्रूतां फणिगिरिपते शाब्दिकमुनिः ।
इयं सासक्तिर्मे भवति तव दृष्ट्या गुणवती
स्वतन्त्रः किं किं न प्रभवति विधातुं प्रभुरिह ॥ ९८

हरे प्रत्यग्ज्योतिः प्रगुणिततमस्फूर्तिरनिशं
दिवादोषान्धानामपि विरचयस्यक्ष्णि पटुताम् ।

महाभोगे लोकोत्तरशिखरिणि प्राप्तनिलयो
विचित्रस्त्वं भास्वान् रचय नयनोल्लासमिह मे ॥ ९९

कृशोल्लाघाफुल्लोप्यलमनुपसर्गात्पदकृता
निपात्यन्ते शब्दप्रथिततरभूम्ना तु भवता ।
कृशं प्रागुल्लाघं नयनमथफुल्लं च सुतरां
परित्रातं सम्यक्प्रचितमुपसर्गादपिपरम् ॥ १०० 

शतेनेष्ट्वा यज्ञैरलभत वृषाऽक्ष्णां दशशतीं
शतेनाहं पद्यैः किमिति न लभेयाऽक्षियुगलम् ।
इति प्रत्येत्य त्वामयजमधुना वाङ्मयमखै
रमीभिः प्रीतस्त्वं सदय नयनोल्लाघमतनोः ॥ १०१

इमां मूर्तिं श्रीमन् वदनकरपादादिकलितां
मदर्थे शेषाद्रीश्वर निरममीथाः करुणया ।
प्रतिष्ठास्याः कार्या सपदि नयनोन्मीलनविधे-
र्भवेद्दिव्या सैषा परिचरणयोग्या च भविता ॥ १०२

अमुं नाथादीनां महति जनने मामजनयः
पदे चाचार्याणां विरचितभरन्यासमतनोः ।
त्वदिज्याप्रत्यूहं नयनपटलं च व्यगमयः
किमन्यत्कैङ्कर्यं तव विजयतां मेऽच्युत सदा ॥ १०३

श्रीवासब्रह्मतन्त्रादिमपदकलिजिद्देशिकेन्द्रानघाङ्घ्रि-
द्वन्द्वाब्जानुग्रहात्तप्रातिपदविविधग्रन्थनिर्माणशक्तिः ।
श्रीकृष्णब्रह्मतन्त्रादिमपदकलिजित्संयमी श्रीहयास्य-
प्रीत्यै स्तोत्रं व्यतानीत्स्वदृशमनघयल्लोचनोल्लासमेतत् ॥ १०४

श्लोकशतच्छदनामिदं स्तवकोकनदं ममावलोकनदम् ।
भवतो भगवन् भवतादवलोकपदं निरस्तशोकपदम् ॥ १०५

श्रोत्रानन्दं भवतस्स्तोत्रारम्भेण विहितवानमुना ।
नेत्रानन्दविधात्रा नेत्रा भवताऽभवं परित्रातः ॥ १०६

(चलदप) १८३६ संख्यासम्मितशके प्रमाद्याह्व(दीच)शरदि
मार्गसिते ।
ग्रथितश्श्रीसखतुष्ट्यै ग्रन्थोऽयं जयतु लोचनोल्लासः ॥ १०७

इति श्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्राणां कृतिषु समाप्तोऽयं लोचनोल्लासः ॥



# चेतःप्रसादः

आसीद्व्यासादिमुनिभिरन्यूनशमदमादिः प्रशान्तपावनचारित्रभूमिः निखिलभूतग्राममैत्रीप्रसन्नचेताः श्रीशृङ्गगिरिजगद्गुरुपट्टभद्रसाच्चिदानन्द शिवाभिनवनृसिंहभारत्याभिधानः स्मरणीयदिव्यमहिमा यमिसार्वभौमः यश्च प्राभाकरसंप्रदायानुयायिनि प्राधीतसाङ्गयजुषि समाहितसप्तार्चिषि, आजानपावने महत्यान्ध्रकुले सुगृहीतनामधेयाभ्यां लक्ष्म्यंबारामशास्त्र्यभिधानाभ्यां जायापतिभ्यां जगन्मङ्गळं जन्म जग्राह। धर्माभ्युदयहेतुना यस्य जन्मना एकाशीत्युत्तरसप्तशताधिकसहस्रपरिमितशालिवाहनशकपैङ्गळाब्दफाल्गुनकृष्णैकादशीजयन्तीवजगदानन्दसन्दायिनी पप्रथे। येन चाधीतनिखिलाम्नायदर्शनेन सर्वतन्त्रस्वतन्त्रेण परिगृहीतपारिव्रज्येन समधिष्ठितं श्रीमज्जगद्गुरुसिंहासनं नितरां समुल्लास। यस्माच्च भारते वर्षे आचप्रालेयाचलादाचकन्याकुमारी महोदधिवेलं सर्वतो वर्णाश्रमधर्मा निराबाधं प्रववृतिरे। यस्य च दिव्यानुभावेन श्रीजगद्गुरुसिंहासनं समग्रसम्पदां च यशसां च परां कोटिमध्यास्ते। स हि महानुभावो महिम्ना समग्रशक्तेः परमेश्वरस्य तृतीयोऽवतार इति मनीषिभिर्ज्योघुष्यते। अत्रेयमाख्यायिकाश्रुतपूर्वा मया केरळेषु संचरता कदाचित् परमार्थमित्रं गोपालसामिनायर् इति समासादितं। स च विबुधवरः काव्यमार्गपथिकः, कर्ता सरसकाव्यनाटकानां, स च निरूढस्नेहो मयि विस्रम्भकथासु स्वदेशचरितमेवमभ्यधात्। श्रौतमार्गोद्धाराय धरण्यामवतीर्णः शङ्करः स्वमात्रे प्रतिश्रुतचरमसंस्काराय प्रवर्तमानो बन्धून् प्रतिबध्नतः अविशेषज्ञान् (युष्मद्देशे न्यासिनां वरिवस्या न प्रचलेदिति) शशाप। समनन्तरं स्वं दक्षिणं बाहुमुन्मथ्य वह्निमाधाय यथाविधि मातरं

संचस्कार । कृतापराधान् प्रणमतो बन्धून् प्रार्थयतः करुणया परस्सहस्त्रवत्सरान्ते स्वयमवतीर्य सन्यासिनां सपर्यामस्मिन् देशे प्रवर्तयामीत्यभाणीत् । एषु च दिवसेषु न सन्यासिनामत्रागमनं वा, भिक्षाग्रहणं वा, निवृत्तम् । प्रतिज्ञातार्थनिर्वहणाय स एव भगवान् शृङ्गगिरिजगद्गुरुरूपेणावतीर्य कालव्यग्रहारे महोत्सवनिर्वहणव्याजेन, पुनः प्रवर्तयामास, यतिजनसपर्यामत्र । एवमाख्यायिकास्मद्देशे सार्वजनकीति । तदेतदेवपरमार्थं । सत्यमिति विदांकुर्वन्तु मनीषिणः । तस्य दिव्यानुभावस्यापन्नार्तिहरस्य चरित्रवर्णनं निखिलश्रेयोऽभ्युदयनिदानं । सकलकलुषविध्वंसि चेत्यनुसंधाय निबबंधे सरसः प्रबन्धः । इदमत्र विज्ञापनीयं अत्रस्यन्महामणयोपि परिशीलयितुरकौशलेन वा, अनभिज्ञजननिकारेण वा निपातिता अपि न निजामनर्घतां जहति । तेनैन गुणविशेषेण भूपालमौळिषु चकासते । स्यादेतन्नाम । अथवा तस्यैव विनेतुर्भूयादयं श्रमरहितः प्रबंधकुसुमोपहारो गुरुदक्षिणा । तदनुग्रहसंपादितामोघविजयास्यादियं कृतिः । सुब्रह्मण्यशर्मणः शिवमोग्गाभिजनस्य विबुधविधेयस्य इति शिवम् ॥

अकृतजनुषां वाचां प्रसवित्री सर्वलोकजनयित्री ।
सरसिजभवावलम्बा जगदम्बा जयतु काव्यजीवातुः ॥ १ ॥

जाड्यं धुनोति जगतां शुभमातनोति
चेतः प्रसादयति मोहमपाकरोति ।
प्रज्ञां ददाति जनिमृत्युभयं निहन्ति
किं किं न साधयति सद्गुरुसेवनं नः ॥ २ ॥

पुण्येन लभ्यमपि कोटिभवार्जितेन
प्रेमप्रसन्नमनसा गुरुणा वितीर्णम् ।

पादाङ्कमेतदकुतोभयमूर्जितं च
सव्यं तदन्यदिति कोशयुगं ममास्ति ॥ ३ ॥

तुङ्गातटान्तरभिदेळिमपुष्पराशि
सौरभ्यविभ्रमधरः पवनो यतीन्द्रम् ।
कुञ्जे क्वचिन्मृदुळसैकतसन्निविष्टं
ध्यायन्तमात्मनि परं कृतिनं सिषेवे ॥ ४ ॥

तुङ्गातरङ्गशिशिरीकृतसैकतान्त
राविश्य शिष्यपरिमण्डलमध्यवर्ती ।
संश्रावयन् निगममौळिविनिश्चितार्थं
कालं व्यनीनयदसौ यमिसार्वभौमः ॥ ५ ॥

ततः कदाचिद्यतिसार्वभौमो
जागृत्समाधाविव पश्यति स्म ।
तां कालटीं शङ्करबाललीला
विहारभूमिं तटिनीं च पूर्णाम् ॥ ६ ॥

स्वप्ने निशान्तोपनते च काञ्चित्
तपस्विनीं प्रावृतशुक्लचीराम् ।
आगच्छ साधो भवनं मदीय
मितीरयन्तीं सहसा ददर्श ॥ ७ ॥

कासि त्वमम्ब क्व नु ते निवासः
किमर्थमभ्यागमकारणं ते ।
इतीरिताऽशोकनिवासिनीं मा-
मवेहि विद्वन्निति सा तिरोभूत् ॥ ८ ॥

किमेतदित्याकुलमानसेन
क्षणं निदध्यौ परिभावितार्थः ।
ननन्द सङ्कल्पितकार्यसिद्धिः
गुरोस्सवित्र्याप्यभिनन्दितेति ॥ ९ ॥

अनुग्रहप्रत्यभिनान्दितात्मा
संभारसज्जीकरणाय भृत्यान् ।
समादिशच्छङ्करबाललीला
विहारभूमिं सहसाधिगन्तुम् ॥ १० ॥

तदनन्तरं समन्ततो निरंतराळसंचितकुसुमसंततिपरागदंतुरितकाननांतरपरिश्रांतशकुंतकुलतंतन्यमानकाकलीनिनादसमुदञ्चितेव संतसमयागमे मदंमंदमतिक्रांतेषु शैशिरवासरेषु, चञ्चच्चन्द्रमासि समुत्कंठितयुवमनसि, प्रकाशितनिखिलसुमनसि, अभिनंदितचैत्रमासि, उन्मस्तकप्रमोदमेदुरांतकरणविवशैः, ससंभ्रमप्रधाननासंख्यपरिजनैः, श्रीजगद्गुरुसमाज्ञप्तैः, सज्जीकृतेषु सज्जीक्रियमाणेषु, आरोपितेष्वारोप्यमाणेषु सन्नद्धेषु, सन्नह्यमाणेषु च प्रास्थानिकग्रन्थिभारेषु ताड्यमाने, हस्तिगणमस्तकन्यस्तडिण्डिमयुगळे, भगवान् यतीन्द्रः सानन्दमाह्निककरणाय निर्वर्तिताभिषेकः, जपन्नघविध्वंसिप्रणवाक्षरं द्विजवरैः परीवृतः, समासाद्य देवसदनं कनत्कनकहीरनीलमणिगणखचिते, परिमळपरिभ्रमद्भ्रमरीवरीवृतकुसुममञ्जरीपिञ्जरीभूतदिगन्तरे समुच्चलितरश्मिमालिकाभिः प्रदीपकलिकाभिः स्फुरन्मण्डले, नागराजफणाभरणबन्धुरे महारजतमहोक्षसुन्दरे महति रत्नमण्डपे, प्रतिष्ठाप्य किमप्यनुपमं, क्षीरवाराशिफेनधवळं, शिरोविराजमानशशिकलं शाम्भवं लिङ्गं, समभिषिच्य शतरुद्रीयानुवाकैः समभ्यर्च्य सिताक्षतबिल्वदळैः अलङ्कृत्य

सुरभिकुसुमदामभिः समाराध्य धूपदीपबलिभिः प्रदक्षिणीकृत्य साङ्गं सावरणं सायुधं सपरिवारं महेश्वरं स्तुत्वा च वैराजिशाक्करमुखैः सामभिः नमस्कृत्य शतकृत्वः, अनुसन्धाय दहराकाशमध्ये भगवन्तमुमाकान्तं प्रसन्नचेताः परिगृह्य पारमेश्वरं प्रसादं प्रस्थाय पुरतः श्रीचक्रराजाश्रितः त्रैलोक्यजननीं शारदाम्बामभिवन्द्य भक्तिभरसन्नकण्ठस्तुतिभिरर्थ्याभिरभिष्टूय प्रसादितां शेषां मूर्ध्नि कुर्वन् प्रास्थानिकमङ्गळान्यभिमृश्य, परिगृहीतोपास्यदेवतासम्पुटः परिजनावेदितेन पथा भूषणमण्टपिकामभिचक्राम ॥

परिजनकरोपनीतं रुचिरतरानर्घरत्नसंवलितम् ।
मुक्ताकलापमञ्जुळमुकुटं समधत्त शिरसि यतिराजः ॥ ११ ॥

बालार्कभासुरोज्वलतपनीयारचितहंसकोदारं ।
स्पर्शानुमेयमार्दवरुचिरं प्रावारमंशुकं समधात् ॥ १२ ॥

हीरमणीगणतरळस्फारपरिस्फुरिततारकाकारं ।
ऊरीचकार हारं चामीकरकलितमौक्तिकोदारम् ॥ १३ ॥

शरणागतशुभवितरणचणचरणाक्रान्तिशोणरमणीयं ।
आचकलच्चरणाभ्यां रत्नाङ्कितकनकपादुकायुगळम् ॥ १४ ॥

सौवर्णसूत्रललितां मुक्ताफलजालविद्रुमाकलितां ।
विमलां स्फाटिकमालामाचकलत्करतले रुचिराम् ॥ १५ ॥

यतिसार्वभौमपदवीसमुचितवेषादरोपि न स्वार्थः ।
आचारपालनं तद्भक्तयनुरोधो गरीयसां सर्गः ॥ १६ ॥

तपनीयपञ्चकलशीं मुक्ताफलजालझल्लरीरुचिरां ।
पट्टोपधानगण्डकमृदुळामान्दोलिकामुपारूढः ॥ १७ ॥

आरक्तकञ्चुकावृतगात्राः सौवर्णरेखिकोष्णीषाः ।
उपतस्थिरे समन्तान्नानाबिरुदावळीपरीवाराः ॥ १८ ॥

तपनीयदण्डघटितं पूर्णसुधासूतिमण्डलाकारं ।
मौक्तिकजालककलितं छत्रयुगं मूर्ध्नि राजतेभ्यधिकम् ॥ १९ ॥

साधुप्रसन्नमानससमुत्सुकेनेव हंसमिथुनेन ।
रत्नाङ्कहेमवलिना चामरयुगलेन वीजयामासुः ॥ २० ॥

बर्हिणबर्हाकलितैः सुरभिळलामज्जदण्डिकाघटितैः ।
माहेन्द्रचापरुचिरैर्व्यजनैर्मोदेन वीजयामासुः ॥ २१ ॥

धवलरुचिशङ्खयुगलं मकररत्नाङ्कतोरणंरुचिरं ।
पञ्चप्रदीपशाखाप्रमुखास्संरेजिरे पुरोबिरुदाः ॥ २२ ॥

अनितरसुलभैरन्यैर्बिरुदैः क्षितिपालशतकसम्मान्यैः ।
यतिसार्वभौमपुरतः प्रचकाशे चित्रकान्तिसंवलितैः ॥ २३ ॥

तदनन्तरमेव समन्तादाक्रांतश्रीमज्जगद्गुरुपट्टभद्रशुभागमनवृत्तान्तप्रमुदितांतःकरणंततन्यमानसेवाहेवाकेभावारम्भसंभ्रमोच्चलितनागारिकजनाविरचितनवनवकुसुमफलभराकिसलयानिचयकवचितमञ्जुलमण्टापिकासहस्रैः उद्धूयमानकदळिकासमूहैः आबद्धकिंकिणिजालकैः उपरिवलमानवन्दनमालिकाभिः सुरभिजलसमृष्टराजमार्गैः कुमारीजनविराचिताविचित्ररङ्गवल्लीभिः उद्धूप्यमानधूपवर्तिभिः विकीर्यमाणलाजाक्षतकुसुमैः आघट्यमानपणवानकैः आरप्स्यमानतौर्यत्रिकैः प्रतिपाल्यमानसेवावसरसमुत्कण्ठितमहाजनैः परिगृहीतभद्रकलशमुकुरनिराजनपाणिभिः पौरपुरन्ध्रीभिः समाकीर्णे राजमार्गे पटुतरपटहयुगळघटितचटुलतरघोटकेषु पुरस्तादाटीकमानेषु तदनु पदं कनत्कनककुथास्तरणलम्भमानघण्टाद्वयघणात्कार-

मुखरितदिशामण्डलेषु मत्तशुण्डालेषु मन्दमन्दमाढौकितेषु तत्पश्चात् खरतरखलीनाकर्षणविषामितसपताकशल्यपल्लवसमंकिरणचपलसादिगणस-मारूढेषु रयविजितविहङ्गमेषु तुरङ्गमेषु व्यावल्गत्सु तदनु पराक्रमैकशर-णेषु विधृतारुणवारबाणेषु गृहीतरुचिरवेषेषु निष्कोशनिस्त्रिंशभूषेषु शौर्यो-द्भटेषु राजभटेषु समसमुत्क्षेपविक्षेपचरणरमणीयं प्रसर्पत्सु तदनुपदं यथा-क्रमं मण्डलीकृतवन्दिसन्दोहैस्तारतरमाघोष्यमाणेषु श्रीमत्परमहंसपरिव्रा-जकाचार्यवर्य अद्वैतब्रह्मविद्याव्याख्यानसिंहासनाधीश्वर पदवाक्यप्रमाण-पारावारपारीणसर्वतन्त्रस्वतन्त्रेत्यादिनिजापदानेषु स भगवान् जगद्गुरु-सार्वभौमः तिर्यक्प्रसारितादोलिकया मन्दमन्दमभिचङ्क्रममाणः, तत्पूर्व-मेव श्रीशृङ्गशैलनगराज्जगद्गुरुसार्वभौमस्सर्वजनाननुजिघृक्षुरागच्छति मह-तापरिच्छदेन कालटीसमाख्यमग्रहारमभियियासुः । तत्सर्वैरपि खेट-खर्वटग्रामनगराध्यक्षैः समीकृतक्षितितलं समुन्मूलितगुल्मकण्टकं, संशोधितगिरिसंकटकाननांतराळपथं, आप्रातरासायमपि यामावस्थितैः प्रजविभिरारक्षिभिरप्रमत्तैर्गृहीतशस्त्रैः स्थाने स्थाने रक्षितराजमार्गं, यथाभिलषितं स्थानमावसतां श्रीमज्जगद्गुरुपरिच्छदानां, समीहितसर्वसा मग्रीसज्जीकरणेन यथा न किमपि परिहीयते नगरनिवाससौख्यं कांता-रेऽपि तथा व्यवस्थापितसर्वसन्नहनैर्भाव्यमिति श्रीमन्महिशूरदिव्यरत्न-सिंहासनासीनेन नृपकुलललामेन नैसर्गिकगुरुभक्तिशीलेन श्रीमत्कृष्ण-राजेन्द्रभूपालेनास्खलितशासनेन समाज्ञप्तैः राजपुरुषैर्विहितसमुपचितो-पचारैराबद्धपरिकरैः, करकलितवेत्रलतासमुत्सारितमार्गावरोधिजनजाले-रानम्रमूर्तिभिः आवेद्यमानमार्गो नगरोपशल्य एव संधीभूय प्रति-पालयद्भिर्नैगमैः नीरंध्रेपथि पदात्पदमपि चलितुमशक्नुवाने, महाजने कथंकथमपि गुरुसविधमासाद्य यथामर्यादं समर्पितोपायनैरधिकारिगणैः प्रणम्यमानः सभक्तिप्रकर्षं प्रणतानयमयमेवेति विजानानोपि केवल-

माचार इत्यावेद्यमानो मागधैर्निर्व्याजवत्सलतया तानभिनन्द्य शुभाशिषा समुपचरितः पन्थानमतिक्रम्य क्रमादुपससार केरळेन्द्रराजधानीं नयनानन्दसंदायिनीं सुखसम्पदभिवर्धिनीं —

पथि पथि जनवृन्दैर्वन्द्यमानो यतीन्द्रः
समुचितवरिवस्याजातसम्मोदसान्द्रः ।
सपदि समनुकम्प्य प्रार्थनासिद्धिदान-
प्रसितनिजकटाक्षै केरळानाससाद ॥ २४ ॥

सुकृतोपचितैरनल्पवित्तैः
प्रसवित्रीं पुरतस्तु सम्पदाम् ।
कुशलाः प्रविधाय पादपूजां
जनिसाफल्यमवापुरंजसा ॥ २५ ॥

इति प्रस्थानं नाम पटलः प्रथमः.

---

॥ श्रीशारदाम्बायैनमः ॥

ततो द्विजाग्र्यैर्निगमोच्चनाना-
शाखाश्रितैरात्तफलप्रसूतिः ।
अभीष्टविश्राणनलब्धवर्ण-
श्चचार भूकल्पतरुर्यतीन्द्रः ॥ १ ॥

सांसारिकायासनितांततप्त-
लोकस्य विश्रान्तिकृते यतीन्द्रः ।
स दक्षिणां सस्यसमृद्धिरम्या-
मगाहतादित्य इव प्रवर्षन् ॥ २ ॥

क्रमेण तीर्थस्य स तीर्थपाद-
स्समर्थयन्तीर्थपदोपलब्धिम् ।
रम्योपशल्यान्नवनारिकेळै-
स्सकेरळान् प्राप फलावनम्रान् ॥ ३ ॥

दृष्टिप्रपातावधिसस्यमाला
तांबूलवल्लीश्रितपूगजाला ।
स्वच्छाम्बुसंपूर्णशिलालवाला
विद्योतते यत्र निकुञ्जशाला ॥ ४ ॥

झङ्कारिणीनां गिरिवाहिनीनां
कोलाहलोद्भ्रांतशकुन्तपोताः ।
पडीय संडीय विलीय भीत्या
विशन्ति नीडं प्रतिपत्तिशून्या. ॥ ५ ॥

गुल्मावृता बन्धुरभूमिभागा
जिंह्मप्रवृत्ता सरणिर्विगाढा ।
शार्दूलविक्रीडितकाननान्ता
क्षितिर्जनानां भयमादधाति ॥ ६ ॥

प्रवर्षुकाम्बोधरमेदुराणि
शैलाग्रशृङ्गाणि महोन्नतानि ।
अधःप्रपाताः सुतळावगाढा
विभान्ति यस्मिन्मलेनाडुकल्पे ॥ ७ ॥

नक्तंदिवं तापपरीतदेहाः
जलावगाहानभिकामयन्ते ।

पिबन्ति नित्यं हिमकांजिकानि
लामज्जकेलारससंस्कृतानि ॥ ८ ॥

विप्राः स्ववर्णाश्रमधर्मनिष्ठा
वर्णत्रयीभिः समुपास्यमानाः ।
प्रकामहृर्षाः विनिवृत्ततर्षाः
विभान्ति यस्मिन्विगताभ्यमर्षाः ॥ ९ ॥

प्रसन्ननीरोभयकूलरूढ-
तालीवना पाण्डुरसैकतश्रीः ।
पूर्णाभिधाना तटिनी चकास्ति
पीयूषधारामधुरा वहन्ती ॥ १० ॥

प्रसूनपातैस्सपरागपीतै-
र्व्यालोलभृङ्गैर्नवरागरङ्गैः ।
चलत्समीरैस्सुरभिप्रचारैः
स्फुटारविन्दैर्विगळन्मरन्दैः ॥ ११ ॥

बीजाकृतानि हरितानि फलोद्गमानि
शंबाकृतानि सलिलैः परिपूरितानि ।
क्षेत्राणि शालिकदळीक्षुमुखानि यत्र
विस्मापयन्ति पथिकान्नयनोत्सवानि ॥ १२ ॥

सपद्मनाभा सरसीव यत्र
संदृश्यते केरळराजधानी ।
श्रियस्समृद्धिं प्रसमीक्ष्य यस्या-
मनन्तशय्यां न जहौ मुरारिः ॥ १३ ॥

भक्तिप्रकर्षार्पितरत्नराशि-
स्सकेरळक्ष्माकमनोमहेच्छः ।
आनर्च पूर्वार्जितपुण्यराशि-
फलायमानं पदयुग्ममस्य ॥ १४ ॥

प्रकामवर्षान् मनसः प्रहर्षा-
नुद्वीक्ष्य तांस्तान्रुचिरप्रदेशान् ।
प्रशान्तपूतं विबुधाग्रहारं
कालट्यभिख्यं मुदितोऽभ्ययासीत् ॥ १५॥

वेदिप्ररूढा विरुजो जटालाः
सत्वाश्रया विप्रसवाभिरामाः ।
यस्मिन्परार्थैकफला विभान्ति
द्रुमा मुनीन्द्रा इव सातिथेयाः ॥ १६ ॥

श्रेयोनिदानं निगमान्तगोप्ता
यत्राविरासीद्भुवि शङ्करार्यः ।
समुत्सुकस्तं प्रसमीक्ष्य चित्ते
सस्मार पूर्वाचरितं यतीन्द्रः ॥ १७ ॥

ऋतम्भराख्येन समाधिनासौ
समीक्ष्य तत्तच्चारितानि तस्य ।
विस्मापनानि प्रथितानि लोके
निरूपयामास मुदा श्रवेभ्यः ॥ १८ ॥

अत्रैव धर्माभयदक्षिणार्थं
श्रीचन्द्रमौळिस्स्वयमाविरासीत् ।

पित्रोर्मुदं सञ्जनयन् जगाद
स्मेराननाब्जः कलभाषितानि ॥ १९ ॥

अत्राशितं पीतमिहैव बाल्ये
विक्रीडितं शङ्करदेशिकेन ।
इहोपनीतो विधिवत्पपाठ
साङ्गान् समग्रान् सरहस्यवेदान् ॥ २० ॥

द्विजेन्द्रदारिद्र्यनिबर्हणाय
हिरण्मयीं वृष्टिमिहैव लेभे ।
नेदीयसी शैवलिनी विभाति
तेनानुनीता जननी हिताय ॥ २१ ॥

तृणाय मेनेऽत्र सकेरळेन्द्र-
वितीर्णरत्नानि गुरुर्यतात्मा ।
अत्रैव सार्धं मुनिभिः पुराणै-
श्चिकीर्षितं स्वं विममर्श बाल्ये ॥ २२ ॥

क्षेमाय लोकस्य तुरीयमत्र
स चाश्रमं सञ्जगृहे मुनीन्द्रः ।
स वत्सलां मातरमत्र सम्य-
गापृच्छ्य लोकानुजिघृक्षुरासीत् ॥ २३ ॥

इतीव तत्तच्चिरसंस्तुतानि
प्रज्ञायमानानि निरूप्य तोषात् ।
परामृशन् तच्चरितं ननन्द
जगाद भूयो जगदेकवन्द्यः ॥ २४ ॥

दया च मैत्री स्थिरजङ्गमेषु
श्रद्धा च भक्तिर्निगमे शिवे च ।
ज्ञानं तितिक्षेति शुभाय पुंसां
मतं तदेतत् खलु शङ्करस्य ॥ २५ ॥

न हेतुवादाय दुराग्रहो वा
न च प्रतिष्ठार्थममुष्य लिप्सा ।
श्रमो हि लोकाभ्युदयाय तस्य
नैसर्गिकी वत्सलता जनेषु ॥ २६ ॥

कृता निबन्धा भवतापशान्त्यै
श्रुतेर्यथार्थो निरणायि तेन ।
कृता हविर्भागजुषः सुरेन्द्राः
विप्रास्स्ववर्णाश्रमधर्मनिष्ठाः ॥ २७ ॥

अन्योन्यमैत्रीमुदितान्तरङ्गा
यदैहिकामुष्मिकधर्मभाजः ।
कृताः समस्ता इति तत्र हेतुः
श्रीशङ्करस्तं खलु वन्दिषीय ॥ २८ ॥

आक्रान्ते वसुधातले श्रुतिमतप्रद्वेषिभिर्दर्शनै-
राम्नाये कृशतामुपेयुषि जने नास्तिक्यमासेदुषि ।
पश्यंस्तामनवस्थितिं करुणया दैत्यारिमुख्यामरै-
र्विज्ञप्तोऽवततार शङ्करगुरुस्सद्रक्षणाय स्वयम् ॥ २९ ॥

धूर्तैः कैश्चन निह्नुतं तदितरैर्नास्तीति सम्भावितं
तत्स्वातन्त्र्यमहारि कैश्चन परैर्द्वेधा विभक्तं बुधैः ।

इत्थं व्याहतबुद्धिभिः श्रुतिशिरोरत्ने विसंवादिते
दुस्तन्त्राणि समूलघातमवधीत् सद्युक्तिभिः शङ्करः ॥ ३० ॥
व्यासोद्दालकशौनकप्रभृतिभिर्यत्तत्त्वमूरीकृतं
यन्नारायणपद्मविष्टरमुखोपज्ञं बुधा मन्वते ।
तत्त्वं तत्प्रकटीचकार जगतां क्षेमाय यः शङ्करः
चित्रं तस्य चारित्रमत्र भुवने पारेगिरं गाहते ॥ २१ ॥

एवं भगवतः श्रीशङ्करस्य परमाद्भुतानि दिव्यचरितानि सुधामधुरया गिरा निर्वर्ण्य यतिसार्वभौमः पुरस्तादाज्ञाप्रतीक्षोत्कंठान् श्रीकण्ठशास्त्रिप्रमुखान्नियोगिनः प्रसादमधुरया दृशा समभिवीक्ष्य, प्रतिष्ठासामो वयमत्र श्रीबालशङ्करचरणतलनिक्षेपपवित्रीकृतधारित्रीतले तरुणसमीरधूयमानश्रीताळनारिकेळद्राक्षालवङ्गकदलीक्रमुकप्रमुखफलकुसुमभारावनम्रतरुलतावितानबन्धुरे, तटरुहविकीर्यमाणविकचविचकिलकुसुमावळीपरागपाळीधवळीकृतरिङ्गत्तरङ्गविकीर्णजलबिंदुसन्दोहमन्दीकृतदिनकरतापनन्दितजनबृन्दवन्द्यमानमहिमापूर्णपूर्णातटिनीपरीवृतप्रन्तरसुन्दरे, वसुधासीमन्तिनीसीमन्तललन्तिकायमाने, प्रशान्तावग्रहे, महत्यस्मिन् कालटीसमाख्ये द्विजाग्रहारे श्रीशाङ्करकीर्तिस्तम्भपताकायमानां सुललितां शाङ्करी प्रतिमां भारतवर्षीयनिखिलास्तिकजनकृतज्ञताप्रदर्शनाय तदाराधनसुकृतोपचयफलितामिव निखिलाभीष्टवितरणकल्पवल्लरीं समग्रविद्यातिसर्जनविशारदां शारदां च समुद्दिधीर्षामः कलिमलिनवर्णाश्रमधर्मान् सिषाधयिषामः समस्तजनहितं विवर्धयिषामः त्रयीश्रद्धालुतां जनस्य तदस्मिन्नभियोगे प्रज्ञापुरुषकाराभ्यां समाधीयतां समुचितकरणीयेषु महानध्यवसायः विधीयतां सर्वसम्भारसज्जीकरणाय महान् प्रयत्नः आहूयन्तां आसेतुसीताचलसीमान्तरं महाजनाः प्रेष्यन्ताम् सुपथीनास्सोपस्कराः त्वरितगामिनः स्यन्दनप्रवेकाः

सन्निवेश्यन्तां सर्वसामग्रीहृद्यानिषद्याः सम्मेल्यन्तां क्रायिकविक्रायिकसमवायाः उत्क्षिप्यन्तां पटगृहाणि निबध्यन्तां विहितवियदुपरोधाः सौधाः विरच्यन्तां विशालाः विविधशालाः सम्भान्यन्तां निर्विशेषमशेषलोकाः संध्रियन्तामभ्यवहारसामग्र्यः समग्राः नियोज्यन्तां यामिकास्सर्वतो रक्षणाय सङ्घशो मिळितेषु जनसमवायेषु अनुद्धृतमृत्कोटो वा सुरभिजलासमृष्टो वा अनुन्मीलितपिष्टातको वा अनुदञ्चितकेतनो वा असमीकृततोरणो वा अप्रसाधितकायमानो वा अकीर्णकुसुमावसरो वा असंयोजितमङ्गळप्रसाधनो वा अनुल्लसितप्रदीपो वा नाङ्गुलमात्रोप्यवशिष्यते भगवदुत्सवारम्भसम्भावनीयः प्रदेशावकाशस्तथा प्रमत्तैर्भाव्यमिति समादिशन्नुच्चावचेष्वपि करणीयेषु स्वयमपि सर्वाङ्गीणविलोचनः प्रवर्तयामास भगवदुत्सवारम्भसंभ्रममनुल्लङ्घितक्रमम् ॥

अत्रान्तरे श्रुतमहोत्सवदर्शनार्थ-
मुन्मस्तकप्रमदसंभृतकौतुकेन ।
उत्सेकिनी परिगृहीतपरिच्छदा च
दिग्भ्यो निमन्त्रितजनावळिरभ्ययासीत् ॥ ३२ ॥

आगच्छद्भिर्द्विजाग्र्यैः सितवसनदृढग्रन्थिसंलग्नकक्षैः
स्विद्यत्फालप्रदेशस्थपुटितभसितोद्दामतिर्यक्त्रिपुण्ड्रैः ।
छात्रैरन्वीयमानैः श्रुतिमुखरमुखैरेधमानाग्निकल्पै-
राकीर्णं ब्रह्मविद्यासदनमिव तदा कालटीक्षेत्रमासीत् ॥ ३३

साङ्गाम्नायविदः कलासु कुशलाः षड्दर्शिनीपारगाः
काव्याख्यानकथानकादिचतुरा ज्योतिर्विदो वाग्मिनः ।
शैलूषाः परिहासपेशलमुखास्तौर्यत्रिकाजीवनाः
तत्तत्कौशलमादरात् प्रथयितुं तूर्णं समभ्याययुः ॥ ३४ ॥

आस्तीर्णक्षितिमण्डले विपणिषु स्थालीबलीयाः क्वचि-
त्संभाराः क्वचिदब्धिफेनरुचिरा राशीकृतास्तण्डुलाः ।
पर्यस्ताः क्वचिदुद्धृताः क्वचिदुपक्षिप्ताः क्वचित्प्रेङ्खिता
गोणीभ्यः प्रविगालिता विदधिरे वस्तूत्करा श्रेष्ठिभिः ॥ ३५

उत्कार्यमाणचणकाढकमुद्गमाषा-
ण्यागाल्यमानघृततैलकुतूशतानि ।
विक्रीयमाणकनकाञ्चितराङ्कवानि
सोपस्कराणि विपणिस्थगृहाणि भान्ति ॥ ३६ ॥

कस्त्वं कोवास्मि किं ते द्रुतगतिरधुना कुत्र गन्ता प्रयाणे
मैवं ब्रूयाः किमर्थं विरम जडमते कस्तवात्राधिकारः ।
जल्पाक ब्रूहि मार्गं कथयतु भवतो जन्म मूर्खस्य मार्गः
सत्यं वैतण्डिकोसीत्यनुसरणि तदा पान्थवादो जजृम्भे ॥

कालट्यामुत्सवः किं ननु भवति पितः कस्य वा शङ्करस्य
कः श्रीमान् शङ्करार्यः स हि भुवनगुरुः धर्मकोशस्य गोप्ता ।
सोयं मे ज्ञातपूर्वः कथमिव स गुरुः शृङ्गशैलेधुनास्ते
श्रुत्वैनां पुत्रवाणीं प्रमुदितमनसा साधुवत्सेत्यवादीत् ॥३८॥

यैरेषा वसुधा समुद्ररशना राजन्वती राजते
येषां वैदिकधर्मपालनयशः शीतांशुबिम्बायते ।
ते भक्त्या यतिसार्वभौमचरणाम्भोजं समभ्यर्चितुं
भूपालास्सपरिच्छदा धृतमहोत्साहास्समभ्याययुः ॥ ३९ ॥

धुर्यानपेक्षैः श्वसनोरुवेगैः
विकीर्णधूळीभरमस्पृशद्भिः ।

रथैरनुद्धातसुखैस्सरावै-
यंयुर्मुदा पुण्यकृतो महीशाः ॥ ४० ॥

विस्फारिछत्रद्वयवाहितूर्यैः
पश्चादनुह्रादिरवान् निशम्य ।
स्खलत्पदास्साध्वसभिन्नमार्गाः
पार्श्वद्वयेपि प्रचला वलन्ते ॥ ४१ ॥

अद्राक्षुरतिमहता कुतूहलेन सुकृतिनस्समवरुह्य बाष्पवाहिस्यंदनादङ्गमालीपरिसरे, समंततो नानादेशसमागतभाषावेषविशेषितजनवृन्दसम्बाधराजपथे कथंकथमपि लब्धावसरा मन्दमन्दमधिगत्य सविधं श्रीमज्जगद्गुरुसार्वभौमसमाज्ञप्तेर्नियोगिभिरपरिचितानपि चिरपरिचितानिव कुशलानुयोगपुरस्सरं समुपचर्य समारोप्य रथतुरङ्गमशकटादिकं प्रहितैः सत्वरं परापतद्भिरनुक्षणमापूर्यमाणनिखिळावकाशं अन्तरान्तरातिगहन विपिनान्तराळं प्रवहज्जलद्रोणीतटोपान्तसंरूढतरुषण्डशाड्वलहरिशायमानदिङ्मण्डलं उभयतोराजमार्गमध्वखेदापनयनचणच्छायाप्रधानतरुराजिराराजितं प्रतिपदमुपवेशितैः, हरिततोरणावर्जितैरायतैः कायमानैरुपशोभितप्रपामण्टपं, दूरादेव विभाव्यमानगोपुराट्टालकशतसङ्कुलं यथानुकूलमुपराचितैर्भिषङ्मन्दिरैः, पत्रासादनगृहैर्यामिकोदवसितैः पथिकसद्मभिः, न्यायनिर्णयास्थानैः, तन्त्रीवृत्तान्तनिशान्तैर्यन्त्रावेशनैस्सपीतिजग्धिभवनैः मन्दुरालानगोष्ठारिष्टैश्शाखानगरमुखैरुपेतं क्रायिकविक्रायिकजनसम्मर्दकोलाहलविहस्तितलेखकप्रमादसङ्गृहीताधिकसोपस्करविपणिपथं क्वचिदुन्मस्तकप्रमोदजनसङ्घसङ्घटितमध्यमण्डलैश्चर्चरीनिस्साणताररसितावेशभुजास्फोटसाटोपवाचाटमल्लसमवायैसमारब्धनियुद्धंक्वचिदाहितुण्डिककल्पितेन्द्रजालप्रमूढवटुनिकरपटुतररटितापूरितदिङ्मण्डलं क्व-

चित्परिहासपेतलकोणङ्गीमुखविकृतिसन्त्रस्तग्रामीणवधूनिकुरम्बं क्वचिद्भि-क्षुकलक्षयाञ्चाक्षरबधिरीकृतकर्णकुहरचेटकारब्धविशृङ्खलचरितं क्वचि-दुद्गायद्भिरुन्नदद्भिरुच्छृङ्खलैरन्योन्यकराञ्चलघटितकराञ्चलैरतिचञ्चलैर्युवस-ञ्चयैः प्रपञ्चितकिलिकिञ्चितं महाधार्मिकत्वविख्यातश्रीमज्जगद्गुरुसमा-ज्ञाप्रवर्तितान्नसत्रेषु समागच्छद्भिरुपविशद्भिर्भुञ्जानैर्भुक्तोत्थितैं मृष्टान्न-सन्तुष्टैर्महाजनैराप्रातरानिशीथमपि नीरन्ध्रितमहाशालं क्वचित्सिद्धै-स्साध्यमानैरन्नकूटैः क्वचित्पक्कैः पच्यमानैः खाद्यराशिभिः, क्वचित् क्वथितैः क्वाथ्यमानैश्च पेयरसैः क्वचिद्भर्जितैर्भज्यमनैश्चोपदंशकैः क्वचि-दुपसम्पन्नैः सम्पाद्यमानैश्च कूर्चिकारसालाद्यैराघ्रातमात्रैरपि प्रफुल्लयद्भि-र्नासापुटं द्रवयद्भिर्जिह्वां चतुर्विधैरभ्यवहार्यैः परीवृतप्रान्तरपाकस्थानं सर्वत्रापि स्वयगृहीतसौविदल्लाधिकारै. जनहिताचरणधुरीणैस्सौजन्य-प्रवणैः, तरुणैस्संम्भावितसर्वारम्भसम्भ्रमाभिरामं योगेश्वरमहाप्रभावसं-स्तम्भितसकलेतिबाधं, श्रीमज्जगद्गुरुसङ्कल्पितमात्रसंसिद्धनिखिलवस्तु-जातं निखिलधरामण्डलेनेव निरवशेषमुपायनीकृतसमग्रसम्भारं अपारि-च्छेद्यं वाङ्मनसयोर्दूरेदृशमभागदेयानां केवलमनुभूयमाननिस्सीमरसा-भिनिवेश कालटीक्षेत्रकल्पिताभिनवनगरं ह्वेपितामरपुरम् ॥

वन्दामहे निखिळविघ्ननिवारणैक-
हेतुं यतीन्द्रकरपङ्कजपूजिताङ्घ्रिम् ।
अश्वत्थमूलमणिविष्टरसन्निविष्ट-
मिष्टार्थदानसलिलार्द्रकरं गजास्यम् ॥ ४२ ॥

श्रीशङ्करेणजननीपरितोषहेतो-
रानीय सद्मसविधे कृतसन्निवेशम् ।
गोपालमम्बुधिसुताकमनं तमाल-
नीलं नमामि सकलागमसारमूलं ॥ ४३ ॥

पुत्रानुशिष्टमति रास्थितराजयोगा
चित्ते निवेश्य यदुपुङ्गवपादपद्मम् ।
तत्याज यत्र भवबन्धममुष्यमाता
क्षेमं कृषीष्टगुरुमातृसमाधिभूमिः ॥ ४४ ॥

ब्राह्मयादिसप्तमातृभिराश्रितगेहाग्रकोणरमणीयम् ।
श्रीचक्रसदृशरूपं भवनं देव्यास्तनोतु भद्राणि ॥ ४५ ॥

सोपानराजिमञ्जुलपूर्णातटिनीतटान्तसंरूढः ।
चलदळवृक्षः श्रीमान् दळयतु दुरितानि कोमलच्छायः ॥ ४६ ॥

भृङ्गारुरुचिरशृङ्गं कलशीवाराशिफेनसदृशाङ्गम् ।
मसृणितशिलाविभङ्गं शङ्करभवनाङ्गणं शुभं दिशतात् ॥ ४७ ॥

कौसुमपरागवाही पूर्णातटिनीतरङ्गकणशिशिरः ।
मलयजमारुतपोतस्सुखयतु गुरुचरणसङ्गपरिपूतः ॥ ४८ ॥

श्रीचक्राकृतिसुन्दरे सुमहति प्रासादमध्ये स्थितां
ब्रह्माणीवशनीमुखाभिरभितः श्रीमातृकाभिर्वृताम् ।
मुक्ताक्षोदसमानकान्तिरुचिरामाधारपद्मे स्थितां
श्रीमद्वाग्भवमन्त्रमूर्तिमानशं ध्यायामि हृत्पङ्कजे ॥ ४९ ॥

दुष्टग्रहादिशमनाय यतीश्वरेण
संस्थापितौ पुनरशोकमहीजमूले ।
श्रीवायुसूनुकृतवीर्यतनूभवौ नः
क्षमं सदैव दिशतां स्मृतिसन्निधानौ ॥ ५० ॥

रत्नप्रवेकानुरुहारयष्टीः
सुवर्णनिष्काणि दुकूलराशीन् ।

उपायनीकृत्य यमीन्द्रपाद-
युग्मांबुजातं शतशः प्रणेमुः ॥ ५१ ॥

यत्र द्विजा दैन्यनिबर्हणाय
हिरण्मयीं वृष्टिमुपानयत्पुरा ।
तत्रैव तत्कोटिगुणां यतीन्द्रो
लेभेऽधुना प्राक्सुकृतं नमोघम् ॥ ५२ ॥

एवमहरहरुपचीयमानजनसमवायसमारब्धकोलाहलाध्मातरोदोन्तराले समुन्मिषति भगवत्सेवाहेवाकीभावारम्भसम्भ्रमोच्चलितनिस्सीमरसाभिनिवेशे, कालटीपरिसरप्रकल्पितसन्निवेशे, श्रीमज्जगद्गुरुसार्वभौमसमज्ञापितैश्चतुरशिल्पकलामार्मिकैर्निर्मापितं, अभ्यर्णप्रवहत्पूर्णातरङ्गिणीकल्लोलमालास्फालनविकीर्यमाणशीकरासारसप्लावितानेकभूमिरुह निकराभोगमध्यसङ्घटितमूलशिलासन्निवेशं, समोन्नतचतुरश्रकुट्टिमदृढाङ्गणप्रेणीळिताविहारवितर्दिकाबहिर्द्वारमण्टपितादिरुचिरतरतत्तत्सन्निवेशं, महानीलशिलालवालमध्यसञ्जातकुसुमपल्लमनोहरमहोदग्रपारिजातमहीजातमिव लोचनासेचनकं, मन्दमारुतान्दोळितासितपताकावळिभिस्सनिर्झरोद्गारमिव कैलासमहामहीधरं, प्रतिभित्तिविलिखितानेकेतिहासाख्यानपरिचायकोलख्यसन्दर्शितसुरासुरसङ्ग्रामसंरम्भजानकीपरिणयादिरमणीयचारितं, शैशवमिव रक्षाम्नमन्त्रकुशलोच्चाटितदुष्टग्रहोपप्लवं, समुपनीतमिव त्रिगुणीकृतरक्षामेखलापरिणद्धं, समारब्धाध्ययनमिव ब्राह्मणब्रह्मघोषप्रीतश्रुन्मुखरीदब्भण्डलं शमादिषट्कसम्पन्नमिवाद्वैतब्रह्मविद्याधिगमनिवासार्हं, श्रीमच्छङ्करभगवत्पादपरिचरणायेव हस्तामलकीकृतं, उदयाचलमिवानन्तरत्नरुचिनिचयकवचितदशदिशाभोगं, प्रमदावनमिव सान्द्रसुमनोवृन्दसेवितं, नळकूबरचरितमिव संविहितरंभावनं, शङ्कराङ्गमिवाविनाभूतसर्वमङ्गळास्पदं,

सर्वाश्चर्यनिदानं. तिरस्कृतमणिविमानं, सम्पादितजनमनःप्रसादं, शारदा-
शङ्करप्रसादमभिवीक्ष्य प्रमुदितमनाः श्रीमज्जगद्गुरुवरः करिष्यमाणप्रतिष्ठा-
ङ्गदेवतासमाराधनाय समादिदेशब्राह्मणानतिमात्रश्रद्धाकरणान् ॥

आज्ञप्ता यतिपुङ्गवेन शुचयोऽनानागमज्ञा द्विजाः
प्रारम्भेषु यथाक्रमं विदधिरे गृह्योक्तमन्त्रक्रियाः ।
केचित्तत्र नवग्रहान् कतिचन क्षेत्रेशदिक्पालकान्
केचिद्विष्णुमुखामरेन्द्रनिवहानानर्चुरत्यादरात् ॥ ५३ ॥

शालान्तरालनिचितैः कुशपञ्चगव्य-
मूलत्वगङ्कुरफलावळिपूर्णकुम्भैः ।
लाजाक्षतप्रकरपूरितपालिकाभि-
र्व्याकीर्णयज्ञकरकैस्सदनञ्चकाशे ॥ ५४ ॥

ऋक्सामसूक्तैर्यजुषोनुवाकै
रथर्वमन्त्रैर्विधिसम्प्रयुक्तैः ।
आस्तीर्यवेदिं जुहुवुर्द्विजेन्द्राः
प्रदक्षिणार्चिष्यनले हवींषि ॥ ५५ ॥

व्याघूर्णितांबुधितरङ्गगभीरनादि
स्वाहावषट्कृतिरवैस्सहसोपहूताः ।
शक्रादयस्सुरगणाः प्रतिगृह्य भागान्
व्यातेनिरे शतगुणाधिककर्मसिद्धिम् ॥ ५६ ॥

अनुसवनममीषां ब्रह्मघोषैरशेष-
क्षपितकलुषबृन्दैः हूयमानाज्यगन्धैः ।
श्रुतिमुखरमुखानां पावनैस्सामगानै-
र्व्यपगततमसस्ते सत्वसारा इवासन् ॥ ५७ ॥

प्रज्ञापराधमधिगच्छति तत्र कोऽवा
शास्त्रोदिते सवनकर्मणि संशयं वा ।
जागर्ति यत्र जगतां गुरुरेव साक्षात्
सर्वागमान्तविवृतौ भुवि यस्स्वतंत्रः ॥ ५८ ॥

इति विविधविधानैर्यायजूका यथाव-
द्विधिसमुदिततत्तद्देवतास्तर्पयित्वा ।
जुहुवुरमृतकल्पानध्वराग्नौ हवींषि
श्रुतिमहितवचोभिस्तुष्टुवुः कर्मसिद्ध्यै ॥ ५९ ॥

एवं समतिक्रामत्सु कतिपयवासरेषु, समर्चितासु सांगावरणासु प्रधानदेवतासु, परिसमाप्तेषु तत्तदधिवासनेत्रोन्मीलनगोरोचनातिलकादि मूर्तिप्रतिष्ठांगकर्मकलापेषु, प्रयाते चैकत्रिंशदधिकाष्टशतोत्तरसहस्रपरिगणिते शालिवाहनशके वत्सरे च सौम्याभिधे, शैशिरसुरभिमारुतामोदितजनौघे, मासि च माघे, प्राघूर्णिकतामुपेयुषि, पक्षे च शुक्ले, तिथौ द्वादश्यां मुहूर्ते चाभिजिति शुभतमेषु वारनक्षत्रयोगकरणेषु स भगवान् गुरुसार्वभौमः प्रविश्य प्रासादाभ्यान्तरं तत्र जपद्भिरर्चयद्भिस्तुवद्भिरुपासीनैः पावनैर्भूसुरैरुपास्यमानां, शरन्नीहारहारतारानुकारिधाराळरुचिनिचयकवचिताङ्गलतां, कनत्कनकरेखालिखितराजहंसावळीविराजमानकुसुंभपाटलोद्गमनीयकमनीयां, प्रस्थानत्रयभाष्यनिर्माणलब्धविजयसितपताकायमानभसितत्रिपुंड्रलेखांकितललाटपट्टां, पुराकृतभागधेयसुजनहृदयप्रतिफलनसमुचितवदनामृतांशुबिंबां, महामोहकूपान्तःपतितजगदुद्धरणाभयदानधुरीणकरकमलांचितज्ञानमुद्रां, लावण्यपीयूषकासारसञ्जातनीरेजसन्देहसंक्रांतभृङ्गाळिनीलोरुरुद्राक्षमालापरिष्कारकण्ठाभिरामां अद्वैतब्रह्मविद्यास्थापनमूलस्तंभायमानवेणुदंडपरिष्कृतबाहुमूलां, सं-

सारविषवेगसम्मूर्छितसज्जनोज्जीवनसुधारसपूरितकनककलशोपमकमण्डलू-ज्वलपुरोभागां, प्रशान्तपावनां, निखिलजनहृदयङ्गमां शातकुम्भमयीं शाङ्करी प्रतिमां तद्वामभाग एव परिकल्पिते महति मन्दिरे सकलाम्नाय-महाप्रासादसोपानारोहणप्रतीहारीं हारीकृतहीरमणीगणमहानीलतरळपरि-ष्कृतग्रीवाभिरामां, अभिरामकुटिलालकामृतदरहासितवदनसरोरुहां सरो-रुहायमाणलोचनप्रान्तसंवेल्लितकटाक्षन्यक्कृतकल्पवल्लरीं, कल्पवल्लरीप्रसून-मालायितभुजाचतुष्टयप्रसाधितमणिमयाङ्गदरत्नवलयावळिं, वळित्रयालवाल-मध्यसंरूढरोमवल्लीफलायमानकुचयुगळबन्धुरां, बन्धुरारुणमणिप्रभापटल-खलीकारदानचतुरकौसुम्भकौशेयसमलङ्कृतोरुदण्डमञ्जुळां, मञ्जुळतुलाको-टिमञ्जीरकिङ्किणीरत्नरुचिकवचितपदकुशेशयां, शयविधृतपुस्तकाक्षमाला-ङ्कुशपाशां, पाशप्रतिमानश्रवणाग्रवेल्लद्रुचिररत्नताटङ्कयुगळापदेशविधृतरज-निकरदिनेशबिम्बां, बिम्बफलायमानमञ्जुळाधरपुटलटन्मन्दहासतिरस्कृत-शतधरकलां, शशधरकलाङ्कितानघरत्नराजिसंवलितकोटीरकोटिं, कोटिज-न्मोपार्जितसुकृतशतपरिपाकलभ्यमानचरणसेवां, सेवावसरप्रतीक्षणप्रवण-सुरासुरावळिं, वाङ्मनसातीतदिव्यमहिमास्पदं, चतुरास्यमानसखेलन्म-राळीं, शब्दब्रह्मात्मिकां, पराशिवकलारूपिणीं, श्रीशारदां च मान्त्रवर्णिक लिङ्गसंसूचितदिव्यमहिमभिस्सूक्तानुवाकसामभिराराध्य, सुरभिळकुसुमो-पहारधूपदीपबलिभिरभ्यर्च्य, सर्वेषां श्रेयोभ्युदयसम्पदायुरारोग्यपुरुषार्थ-सिद्धिं सङ्कल्प्य समं सर्वलोकाभ्युदयेन प्रतिष्ठापयामास ॥

जनास्सपदि सम्मदाज्जयजयेति वाचा स्तुवन्
रराम घनदुन्दुभिस्सुरकराग्रकोणाहतः ।
ववर्ष मरुतां गणः कुसुमवृष्टिमत्यादरात्
प्रसेदुरधिकं दिशो मुमुदिरे स्थिरा जङ्गमाः ॥ ६० ॥

द्रुतविळम्बिततारमनोहरं श्रुतिसमान्वितताळलयोद्भटम् ।

श्रुतिसुखं कलगीतिषु कोविदैरधिजगे निगमान्तगुरोर्यशः ॥६१॥

अनुवनमधिकं सुपुष्पिताग्रैस्तरुभिरियं वसुधा समृद्धसस्या ।
पुनरपि गुरुशङ्करस्य जन्मग्रहणदिनोत्सवमन्वभूद्दिवासीत् ॥६२॥

एवं प्रमोदरसनिर्झरपूरमग्न-
चित्ते समस्तभुवने गुरुसार्वभौमः ।
वाचाभरैर्नवसुधामधुरैरुदारै-
स्तुष्टाव हृष्टमनसा गुरुमष्टमूर्तिम् ॥ ६३ ॥

नमोवाकं ब्रूयामशरणशरण्याय भवते
महामोहोद्भ्रान्तद्विजनिवहरक्षाप्रतिभुवे ।
त्रयीलक्ष्यार्थाय स्मृतिविहितकल्याणनिधये
दयाधारासारैश्शमितपरितापाय सततम् ॥ ६४ ॥

कराळात् क्ष्वेळाद्वा कबळितचरस्थास्नुनिवहा-
न्निरूढादज्ञानाज्जननमरणायासफलदात् ।
परित्रातुं लोकान् प्रभवति न चान्यः क्षितितले
विना सर्वज्ञं त्वां तदिह दयया पालय विभो ॥ ६५ ॥

त्वमेव ननु शङ्करोऽस्यपरथा कथं शक्नुयाः
पुरारिसहधर्मिणीचुबुकचारुतावर्णने ।
यदीयकमनीयतां न विदुरञ्जसा शङ्करा-
दृते कमलसम्भवप्रमुखनिर्जरा वा दिवि ॥ ६६ ॥

मायामयीं जवनिकां व्यवधाय गूढं
श्रुत्यापि नेति कथितं मनसाप्यगम्यम् ।

तत्त्वं विविच्य निजयोगबलेन दृष्टा
त्वं चेन्न दर्शयासि लोकहितं कुतस्स्यात् ॥ ६७ ॥

त्वत्सूत्रभाष्यसरणौ पदमेकमेव
भक्त्या पठन्ति भुवि ये पुरुपुण्यभाजः ।
सिद्धा महीमभिजनं च पवित्रयन्तो
धन्यास्त एव सनकादिभिराद्रियन्ते ॥ ६८ ॥

श्रीब्रह्मसूत्रार्थविवेचनाय
त्रैय्यन्तसिद्धान्तविबोधनाय ।
दुर्वाददुस्तन्त्रशमाय लोक-
क्षेमाय भूमौ विधृतोऽवतारः ॥ ६९ ॥

'अवधीरितनिगमागमविधिना जितकलिना
मलिनीकृतधिषणे सति भुवने बहुकृपया ।
सुजनावाळिमवितुं भुवि विधृतानघजनुषं
गुरुशङ्करमनिशं हृदि कलये सुरविनुतम् ॥ १ ॥

मुरशासनकमलासनमुखसेवितचरणम्
वसुधाहितखलदर्शनपरिधूननानिपुणम् ।
तुलितामृतकवितारसजलधीकृतभुवनम्
गुरुशङ्करमनिशं हृदि कलये सुरविनुतम् ॥ २ ॥

धरणीतळविबुधावनधृतकङ्कणमनघम्
शरणागतभरणादरकरुणं श्रुतिशरणम् ।
निगमागमहृदयाम्बुजतरुणारुणकिरणम्
गुरुशङ्करमनिशं हृदि कलये सुरविनुतम् ॥ ३ ॥

कृतकेतरवचनाम्बुधिमथनोद्धृतसुधया
    विनिवारितभयशोकदघनसंसृतिगरळम् ।
भुवनाभयकलनाद्वयमतबोधनकुशलम्
    गुरुशङ्करमनिशं हृदि कलये सुरविनुतम् ॥ ४ ॥

दुरितैरिव कुमतैरिह भुवने घनतिमिरे
    विशदीकृतिनिपुणानघमिहिरायितचरणं ।
रजनीकरकरसोदरयशसाञ्चितभुवनं
    गुरुशङ्करमनिशं हृदि कलये सुरविनुतम् ॥ ५ ॥

फणिभाषितकणभुञ्जतकपिलागममुखरैः
    निगमाशयलवबोधनविधुरैः किमु भुवने ।
यदुदीरितमतमेव हि विदुषामतिसुखदं
    गुरुशङ्करमनिश हृदि कलये सुरविनुतं ॥ ६ ॥

सनकादिममुनिमानसनळिनार्चितचरणं
    कलुषार्जितभवसागरतरणं भयहरणं ।
मुरशासनमुखनिर्जरगणसंस्तुतसुगुणं
    गुरुशङ्करमनिशं हृदि कलये सुरविनुतम् ॥ ७ ॥"

पूर्वं त्वया स्थापितधर्ममार्गः खिलीकृतः कैश्चन दुर्विनीतैः ।
भूयोऽपि लोकाभ्युदयाय भूमन्कृपां कुरुष्वेति निवेदयामः ॥ ७० ॥

तत्सन्निहिते महति प्रासादे कृतदिव्यसन्निधानामम्बामभिवन्द्या-स्तावीत्—

सेवाकाकिमभीप्सितं फलति मे भावानुरक्तास्सुराः
    केवा किं शरणं ममेति बहवो देवा वृथा चिन्तिताः ।

सेवालालसनिर्जरेन्द्रवनिता हेवाकिभावार्चितां
दैवादाश्रितवत्सलां गुरुकृपां श्रीवागधीशां भजे ॥ १ ॥

रक्षार्थं जगतां गृहीतवपुषं यक्षाधिराजार्चितां
शिक्षाकल्पमुखाङ्गसङ्गतवचोभिक्षाप्रदानादरां ।
ऋक्षाधीशमुखीं समस्तजगतामक्षामसम्पत्प्रदा-
मुक्षाधीशरथप्रमोदजननीं दाक्षायणीमाश्रये ॥ २ ॥

आसेरे बहुलातपेऽपि धनिनां वासाङ्गणे चङ्क्रमा-
दासायं वसनाशनेऽपि कृपणो दासायतेऽयं जनः ।
नासामौक्तिकभासुराधरसुधाकासारकल्पानने
भासाक्रान्तदिगन्तरे जननि मां हासास्पदं मा कृथाः ॥ ३ ॥

पीनास्सन्ति सुधाशनाः दितिसुतैर्दूनाः स्वरक्षाविधौ
नानाक्लेशजुषो मदर्थघटने को नाम तेषु प्रभुः ।
दीनाढ्य करणव्रते दिविरुहां मानापनोदक्षमा
मीनाक्षीं हृदि भावये शिवगुरुध्यानास्पदं चित्कलाम् ॥ ४ ॥

भृङ्गारुं मणिवल्लकीं करतळासङ्गाधिकोद्भासिनी
शृङ्गारागमपुस्तकं च दधती पिङ्गाक्षमालां करैः ।
तुङ्गाशैवलिनीतटान्तविलसच्छृङ्गाद्रिपीठीस्थितां
साङ्गाम्नायशरीरिणीं हृदि भजे भृङ्गाळिनीलालकाम् ॥ ५ ॥

कान्तिस्सुधाम्शौ द्युमणौ प्रकाश
ज्वाला हुताशे जलदेषु वृष्टिः ।
भूतेषु शब्दादिगुणाश्च ये स्यु-
स्ते त्वन्महिम्नः कणिकाणुलेशाः ॥ ६ ॥

व्यावृत्तभावान्विषयान्तरेभ्यः
सम्मूढसर्वेन्द्रियबाह्यवृत्तीन् ।
जनान् स्वसंवेद्यसुखास्तनोति
निद्रेव नव्याकृतिरम्बिकायाः ॥ ७ ॥

वराळिरुचिराळकाभुवनमोहनाकारिणी
द्विषद्दनुजभैरवी सुकृतसिन्धुमन्दारिका ।
जटाग्रधृतशङ्कराभरणरत्नभूपाळिका
तनोतु मनसो मुदं श्रुतिप्रणयिकल्याणिनी ॥ ८ ॥

मृष्टान्नैर्बहुदक्षिणाभिरुचितैर्वासोभिरत्युज्वलैः
सौवर्णैः कटकैर्दुकूलयुगळैर्हारैरुदारैरपि ।
श्रीमच्छङ्करदेशिकेन्द्रविलसत्कुम्भाभिषेकोत्सवे
मान्यान्मानयति स्म तत्तदुचितैस्सम्प्रीतिदानैर्गुरुः ॥ ७१ ॥

अहर्दिवं भोजनसङ्गतानां
त्रिंशत्सहस्राधिकपङ्क्तिरासीत् ।
सुगन्धिपाकान्सुविभाव्य भोक्तुं
सुधाशनाश्च स्पृहयांबभूवुः ॥ ७२ ॥

परामृशन्तो जठरप्रसेवं
समुत्कलापीकृतचूर्णचूडाः ।
क्षीराज्यवारान्निधिशोषणेन
स्वनामसार्थिक्यमवापुरोजसा ॥ ७३ ॥

एवमतिक्रामत्सु कतिपयदिवसेषु—
प्रच्छायनिद्रालुमृगो जलान्त-
रालीनमीनो निभृताण्डजन्मा ।

उन्निद्रपङ्केरुहगूढहंस-
स्तृष्णाळुलोको मधुराविरासीत् ॥ ७४ ॥

भिदेळिमापल्लवतल्लजोऽपि
रक्तीकृतोऽनेन तदीयरागः ।
साकूतनेत्राञ्चलनिर्वृतेषु
साङ्ग्रामिकोऽभूदभिकेषु यत्र ॥ ७५ ॥

उद्भिन्नकोशाम्बुरुहातपत्रै-
र्विलोलपुष्पस्तबकप्रकीर्णैः ।
पुंस्कोकिलोद्गीतनिजापदानै-
र्नरेन्द्रलीलां मधुरासासाद ॥ ७६ ॥

मधुप्रसङ्गाद्कुसुमानवाची-
मपास्य दाक्षिण्यमपि व्यहासीत् ।
उच्छृङ्खलानां विषयेषु लोके
दाक्षिण्ययोगः क्वनु संस्तुतेषु ॥ ७७ ॥

उषस्समीरोच्छ्वसितैः परागैः
क्लृप्ताङ्गरागच्छुरिता धरित्री ।
प्रसूनगुच्छोद्गळिते मरन्दे
तापापनोदाय तपस्यतीव ॥ ७८ ॥

रसाळगुच्छं नवपाटलानि
धारागृहं चान्द्रमरीचिसेवा ।
शीतो निकुञ्जो हिमवालुका च
निदाघसौभाग्यपरम्परेयम् ॥ ७९ ॥

हरो हिमाद्रिं हरिरब्धिमध्यं
चतुर्मुखस्तामरसम्फणीन्द्रः ।
पाताळमिन्द्रोऽम्बुधरञ्जनाश्च
धारागृहन्तु प्रविशन्ति तापात् ॥ ८० ॥

सन्ध्याभ्रकाषायनवाम्बरश्री-
श्चन्द्रांशुभस्मच्छुरिताङ्गरागः ।
जगत्रयीजाड्यनिरासहेतुः
श्रीशङ्करस्यानुकरोति चैत्रः ॥ ८१ ॥

प्रसाधिता साधुवसन्तलक्ष्म्या
सा केरळेन्द्रक्षितिरुत्सुकेव ।
श्रीकृष्णराजेन्द्रसभाजनार्थ-
महर्गणान् सा गणयन्त्यवात्सीत् ॥ ८२ ॥

छायाप्रदानैस्तरवो लताश्च
प्रसूनवर्षैर्मरुतः प्रचारैः ।
उपाचरन्स्वागतभाषितेन
पुंस्कोकिलाः कृष्णमहीमहेन्द्रम् ॥ ८३ ॥

तदनु मनुसमानः सत्यधर्माभिमानः
सदयहृदयवृत्तिर्लोकविख्यातकीर्तिः ।
सुजननिवहमान्यो राजराजो वदान्यः
गुरुपददृढभक्तिः कालटीमभ्ययासीत् ॥ ८४ ॥

नृपासनस्थः कुशविष्टरस्थं
षाड्गुण्यवेत्ता विजितारिषट्कं ।

महोदयार्थी विनिवृत्ततर्षं
स राजयोगी यमिनन्ददर्श ॥ ८५ ॥
सप्ताङ्गराज्यस्थितिमन्त्रगुप्ति-
रष्टाङ्गयोगप्रसितस्वचित्तं ।
त्रिवर्गसंसाधनयोगशीलो
गुरुं चतुर्वर्गविदं व्यनंसीत् ॥ ८६ ॥
कर्णाटक्षितिपालमौळिमुकुटः श्रीकालटीमागत.
दृष्ट्वा शङ्करदेशिकेन्द्रचरणौ श्रीशारदाम्बां मुदा ।
सेवार्थं नवहीरहारमतुलं सौवर्णलेखाञ्चित
कौशेयं च निवेद्य भक्तिविवशो मूर्ध्ना ववन्दे गुरुम् ॥ ८७ ॥
तस्यैव परभागभक्तिमतुलां श्रीकृष्णभूमीपतेः
धर्मे चाभिरतिं निरीक्ष्य सुदृढां श्रीदेशिकेन्द्रो मुदा ।
आशीर्भिस्सफलाभिरेनमनघं संवर्धयन् भूपतिं
प्रायच्छत्परमादरेण सफलां श्रीधर्ममूलाभिदाम् ॥ ८८ ॥
भूपालमौळिर्विनयाभिरामस्तपस्विनामग्रसरो यमीन्द्रः ।
उभावलञ्चक्रतुरङ्गसोभौ नीतिं च धर्मं च सतां हिताय ॥ ८९ ॥
उदारकान्तस्य निरीक्ष्य राज्ञो न विस्मयं प्राप तथा जनौघः ।
तद्दत्तरत्नेष्वपि निस्पृहत्वाद्यथा निरीक्ष्यास्य गुरोर्वशित्वम् ॥९०॥
धर्मार्थौ सङ्गतौ यत्र तत्रानन्द इति श्रुतिः ।
मूर्तिमद्यतिराजभ्यां सा चान्वर्थाभवच्छ्रुतिः ॥

एवं महीयसामपि महाकविवचसामतिदवीयसि प्रचलति श्रीशङ्करशारदाप्रतिष्ठामहोत्सवे, सङ्गतेषु नानादिगन्तागतविबुधजन-समुदयेषु श्रीमज्जगद्गुरुवरेणैवाभिनन्दितेषु, न कश्चिदनभिनन्दितो वा, असम्मानितो वा, अननुयुक्तो वा, अनुपचरितो वा, अलालितो वा, अप्राप्तमनोरथो वा, अपुरस्कृतो वा, अधिक्षिप्तो वा, उदासितो वा दृश्यते ।

अहो दिव्यानुभावता जगद्गुरुवरस्य ! अहो माहाजनकी धार्मिकता गुरुवर-परिच्छदस्य ! अहो वयमतिपुण्यभाजः, यदीदृगपि कलिः पापीयान् कृतयुगमत्येति वैदिकधर्मप्रवर्तकेण जगद्गुरुणा ! यदहो चक्षुषा निरीक्षामहे भगवदुत्सवं, न खल्वभागधेयानां दृग्गोचरीभवेदयमनुभूयमाननवनवः प्रसादातिशयः परमेश्वरस्येति प्रशंसन्तः तत्तद्विषयान् , निगदन्तश्शङ्करा-पदानानि भट्टभास्करविजयादीनि, स्तुवन्तश्श्रीमन्तमुमाकान्तं, प्रणमन्तः परमां कलां परमेश्वरस्य श्रीशारदाभिधानां परदेवतां , नमस्यन्तश्श्रीमद्गुरु-पादुकायुगळं, सङ्गृह्णन्तस्सम्पादिताक्षतविजयानिवाक्षतचयान् , उपार्ज-यन्तः प्रसूनकाश्मीरफाणितप्रसाधिनी वलयादीनि निषद्यासु । द्विगुण त्रिगुणभारप्रसेविकाग्रन्थयः ध्यायन्तश्चन्द्रमौळेश्चरणाम्बुजं, मन्दम्मन्द-मनुकामीना गुरुवरमभिववन्दिरे । तदनु श्रीमद्गुरुवरोऽपि प्रस्थितांस्तानभि-वीक्ष्य प्रसादमधुराया दृशा, विनिनीषुरानुश्राविकान्, धर्ममार्गेषु प्रियहितां श्रेयस्साधिनीमनुलङ्घनीयां, प्रसन्नगम्भीरां मधुरामिमां वाचमाददे—

" अयेविधेयमहाजनाः, एधिषीध्वमायुष्मन्तश्चिराय । समुन्नमयत कुलप्रतिष्ठां, चिन्तयत चिन्तितार्थचिन्तामणिं श्रीमन्तमुमाकान्तं । प्राये-णैतद्विदितमेव सर्वेषां ' धर्मो विश्वस्य जगतः प्रतिष्ठे ' ति । नास्त्यैवाद्य तादृशवैदिकधर्मपरिपालने शक्तिरस्माकं, मन्वादयोऽपि देशकालानुरोधिनीं धर्मव्यवस्थां स्फुटमुदैरयन्, धर्मशास्त्रेषु धर्मोऽपि सार्वत्रिकः सार्वकालिकः सार्वजनिक इति न कश्चिदिह दृश्यते । शास्त्रोपसंहारे सामयिकं धर्मं परिषन्निर्णीतं चानुमेनिरे महर्षयः । वृत्तिकर्शितानां ब्राह्मणानां प्रत्यन-न्तरं वृत्तिग्रहणमनुमतमाचार्यैः । यदि कुटुम्बिनो यावत्कुटुम्बिभरणपर्याप्ता-धिकं धनं विद्यते, तदा धर्मादिषु प्रवृत्तिरुपचीयते । इष्टापूर्तादीनि प्रभूतद्रव्यसाध्यानि, अतः प्रथममर्थाधिगमाय नित्यमुत्थानवता पुरुषेण भाव्यं, यदेतदनुत्थानं नाम तदेवातीव परिभवस्थानं । अतो नित्योत्था-यिनो भवन्तः येनात्मापकर्षो न भवेत् , यदालम्बनेन कुलधर्मानविपद्ये-

रन्, येनानुष्ठितेनान्तरात्मा प्रसीदति, तमेव जीवनहेतुमाश्रित्य यावदर्थ-परिग्रहाः स्वस्वधर्मानातिष्ठत । विद्येति मद्यसन्धानावरोहणं, वृत्तिरिति कृचिसीवन, सेवेति नीचोपसर्पणं, वाणिज्यमिति विगीतवस्तुविक्रयः, लाभ इति न्यासहरणम्, शिल्पमित्युच्चावचकर्मारम्भश्चैते पुनर्द्विजधर्माणां नाशहेतवः, विगीतवृत्त्या वृत्तिसाङ्कर्यं, तेन वर्णसंकरः, ताभ्यामात्मापकर्षः, तैरधोध.पात इति बहुळानर्थपरम्परा प्रसज्यते । तस्मादभिजातः पुमानात्मोद्धाराय प्रयतेत । नैवात्मनिपाताय । भद्रमुखाः, दयाक्षान्तिरनसूयाशौचमनायासो माङ्गल्यमकार्पण्यमस्पृहेति श्रुतिचोदितैरष्टाभिरात्मगुणैर्विजितारिषड्वर्गाः परां सिद्धिमादास्यध्वे । एव साधितत्रिवर्गाणां धीराणामपि देहाद्यभिमानो हि बन्धहेतुरवसादयत्यपवर्गचिन्तां । आढ्योऽहमभिजातोऽहमूर्जस्वलो मनस्वीति श्रेयोविरोधिषु कामरागादिषु प्रवृत्ता नचैव चेतयन्ते स्वार्थभ्रंशं । एवमुत्सिक्तस्य मनसो निग्रहार्थमेव सर्वे नियमाः यमाः कामवाद-कामचार-कामभक्षादिनिषेधाय मुनिभिरुपदिष्टाः यथोक्तमनुष्ठातारं वर्धयन्ति । अदान्तः पुरुषः सर्वक्लेशभाजनं भवति । असकल्पात् कामं, कामनिग्रहात्क्रोधं, अर्थेष्वनर्थपरिभावनया लोभं, आत्मविद्यया मोहं, साधुसेवया दम्भं, तत्त्वावमर्शेन मदं, सर्वभूतसाम्येन मात्सर्यं च समूलघातं निहत्य, शास्त्राचार्योपदेशकुशलमतिर्धीरः श्रेयो विन्दते । तत्त्वपरामर्शात्कर्मबीजपरिक्षयात्सतां सन्निकर्षाच्चोपचितसत्वो नानाविधजन्ममरणक्लेशप्रहाणकारणेन महेश्वरप्रणिधानेन विगळितान्यसंवेदन. स्वसंवेद्यमानन्द समश्नुते । श्रद्धयानुष्ठितैर्विधया विहितैःकर्मभिरन्तरात्मा प्रसीदति । प्रसन्ने तस्मिन् स्वस्वश्रद्धानुरूपान् भौमान् दिव्यांश्च कामान् यथाधिकारं पुरुषः समश्नुते । इदमेवात्र पुरुषार्थचतुष्टयप्रयोजनं सर्वेषां । विवेकिनः प्रेयश्श्रेयसोरन्तरं विदित्वा कृतार्था भवन्ति" ।

इत्यनुशास्य शिष्यान् श्रीमज्जगद्गुरुपट्टभद्रसच्चिदानन्दशिवाभिनवनृसिंहभारतीयमिसार्वभौमः, शारदाशङ्करयोः सदातनसपर्यासंविधौ

विधातुमानुश्रविकान् भूसुरान्विनियुज्य, सर्वेषामपि सान्दृष्टिकोदर्कश्रेयो-भ्युदयकल्याणान्याशासानो महता प्रमोदेन जयतितरान्धरातळे ॥

एधिषीष्ट चिरं श्रीमज्जगद्गुरुरुदारधीः ।
एधिषीरन् जनास्सर्वे तत्पादयुगळाश्रयाः ॥ ९१ ॥
जगद्गुरुपदाक्रान्तिपावनं कालडीति यत् ।
क्षेत्रं कलुषविध्वंसि तदादि भुवि पप्रथे ॥ ९२ ॥
यत्र वाराणसीं हित्वा जन्म लेभे महेश्वरः ।
तदलं तस्य माहात्म्यसूचनाय महीतळे ॥ ९३ ॥
आदिष्टपूर्वं गुरुशङ्करेण समग्रलोकाभ्युदयं विधाय ।
जगाद भूयो गुणरत्नकोशान् श्रीकण्ठशास्त्रिप्रमुखान्विनेयान् ॥ ९४ ॥
सुकृतिभिरिदमेवं साध्वमस्माद्विधेये
विहितमिव भवद्भिर्धर्मकार्ये यथावत् ।
निरवधि गुरुभक्तिश्श्रेयसे कल्पतामि-
त्याशिषदथ सभायां मानयंस्तान् यतीन्द्रः ॥ ९५ ॥
क्काहं निसर्गजडधीर्जगतां गुरुः क्क
शब्दप्रपञ्चरचनाचतुरो विरिञ्चिः ।
तस्यैव कोपि महिमा मयि सन्निधत्ते
ग्रावापि येन भुवने विबुधायते स्म ॥ ९६ ॥
वाचामधीश्वरि तवैव कृपाबलेन
यद्व्याहृतं जडधिया चरितं गुरूणाम् ।
स्यात्सङ्गतार्थमपि काव्यगुणैरुपेतम्
भूयादियं मम कृतिर्गुरुदक्षिणायै ॥ ९७ ॥
अधीतिः साहिती यस्य विनेता श्रीजगद्गुरुः ।
सुब्रह्मण्यस्य कृतिषु जीयाच्चेतःप्रसादिनी ॥

---

## ग्रन्थविमर्शः

---

**नाट्यप्रयोगसारसङ्ग्रहः—**

इदमभिधानः कश्चन प्रबन्धः कर्नाटकभाषामयः अस्मन्नयनसरणिमवतीर्णो विराजते । अस्य च रचयिता सुगृहीतनामधेयः विश्रान्त-महीशूरराजकीयसंस्कृतपाठशालापर्यवेक्षकाधिकारः सि. वेंकटरमणार्य-महाभागः । ग्रन्थोऽयं आपादचूडं सोत्साहं चावालोकि । ग्रन्थे चास्मिन् त्रयो भागास्समुल्लसन्ति, तत्रादिमे नाट्यमण्टपरचनाक्रमः, पूर्वरङ्गीयकार्यकलापः इत्येते विषयाः, द्वितीये अभिनयतत्त्वनामधेये अभिनयोद्देशः, तत्प्रयोजनं, भावपुष्टिः, रसोत्पत्तिः, अभिनयाङ्गानि इत्यादयो विषयाः, चरमे नृत्तरसाह्वये नृत्ताभिनयप्रचारस्य प्रत्येकमुद्देशाः, नृत्तप्रादुर्भावः, पिण्डीकरणविचारः, ताण्डव, लास्यं, तत्प्राप्तिप्रकार इत्येते प्रमेया समग्राहिषत । अयं प्रबन्धः भरतप्रणीतनाट्यशास्त्रमूरीकृत्य प्रवृत्तत्वात् तत्सारसंग्रह इति अन्वर्थनामा चकास्ति । सर्वत्रापि मृदुमधुरभारतीभासुरा वाक्यसरणिर्विराजते । अनतिसंक्षिप्तवाग्धोरण्या चिरन्तननाट्यतत्त्वानि जननिकरे प्रचारयितुमेव ग्रन्थकारमहोदयस्समधिकं प्रयतते । सर्वत्रापि सन्दर्भशुद्धा एव गिरस्समधिकं समुल्लसन्ति ॥

प्रबन्धपीठिकायां प्रयोजनत्रयं प्रबन्धप्रणयनस्येति प्रादर्शि प्रबन्धप्रवरेण, तद्धि,—

(i) भारतीया नाट्यकलास्वग्रगण्याः.

(ii) भारतीया संस्कृतप्रगतिरतिप्राक्तनी.

(iii) भारतीया नाट्यसाहिती न ग्रीकप्रभावप्रभूताचेति.

सत्यमेतत्त्रयं, अथापि विचिकित्साः नापयान्ति स्वान्ताच्चिरन्तनपुस्तक-

परिवर्तनपारायणेन, यावद्वैज्ञानिकयुक्तयो नोद्दीर्यन्ते । अपिनामात्र प्रोक्तप्रयोजनपरिरक्षणाय पाश्चात्यविपश्चिन्निकरशिरश्चालनचणा दृढतरवैज्ञानिका युक्तयः कुत्रापि प्रावोचिषत ? किंवा कुत्रचित् भारतनाट्यशास्त्रस्यातिप्राचीनता समसाधि ? केवलं नाट्यशास्त्रं त्रेतायुगीयमित्येतावता वैज्ञानिकयुक्तिप्रवणा वयमित्याभिमन्यमाना नवीना किमु विश्वसेयुः? मन्ये नूनमन्य एव मान्यतम. प्रोक्तविचिकित्सासमुत्सारणाय ऐतिहासिकयुक्तिप्रकरभूषितः प्रबन्धः प्राणायि प्रबन्ध्रेति । स चाचिरादेव नयनगोचरतां प्रतिपद्येतेत्यपि वयं विभावयामः ॥

अद्यत्वे हि भारतीयनाट्यकलामुद्दिश्य बहवः पाश्चात्यविपश्चितः वीबर्, पिसचिल्, विण्डिस्कि. लेबि, कनोन्, रिड्जवे, बार्नेट्, कीत्प्रमुखा बहून्प्रबन्धान्प्रणिन्युः । तत्र सर्वेऽपि मौलिकगवेषणायां व्यापृता भारतसाहितीं ग्रीकप्रभावप्रसूतां मन्यन्ते । यदा ह्यलकसुन्दरो ग्रीकधरेन्द्रः भारतधरां विजेतुकामः भारतेलामलमकार्षीत् , तदा तेन सह प्रायशस्सहस्रत्रयपरिमिताः कलाकुशलास्समाजग्मुः । तत्र केचन भारतीयैः मुद्रानिर्माणे नियमिताः । अपरे तु ग्रीकनृपालाधिष्टितेषु भूभागेषु नाटकाभिनयचातुरीं प्रदर्शयन्ति स्म । तेषां सङ्घर्षादेव भारते नाटयकलाया अभ्युदयः । अतएव भारतीयनाटकपटलेषु ग्रीकदेशीय Attic comedy सौसादृश्यं नितरां दरीदृश्यते । शकुन्तलायां अभिज्ञानमङ्गुलीयकं, विक्रमोर्वश्यां सङ्गमणिः, रत्नावल्यां सागरिकाया रत्नावली, नागानन्दे आकाशपातितमणिः, मालतीमाधवे माधवीधृता मालिका, मृच्छकटिके वसन्तसेनाया रत्नालङ्कारः, मुद्राराक्षसे राक्षसीयमुद्रा, मालविकाग्निमित्रे सर्पमुद्राङ्कितमङ्गुलीयकमित्येतानि निदर्शनस्थानतामश्नुवन्ति । तत्रापि रत्नावल्यां नौकातः पतनं Rudens नायिकायाः सिसिलीकूले नौकापतनं नितरामनुकुरुते । प्रबन्धकारः परं मृच्छकटि-

कस्य क्रि पू. द्वितीयशताब्दीयतां भारतनाट्यसाहित्याः प्राचीनतायां गमनिकामूचे। ततः पूर्वमेव क्रि. पू. तृतीयशताब्द्यां खल्वलकसुन्दरो भारतमाजगाम। सत्येवं द्वितीयशताब्दीयता कथं परमप्राचीनतायां गमनिका भवेत्?

-किं च मृच्छकटिकरूपक एव विण्डिस्किसाहेबः Cistallaria (Little-chest) Alulularia (Little-pot) प्रमुखानामनुकृतिं राजनीतिप्रेमसम्मिश्रणादिकं चावलोक्य भारतीयरूपकनिकरस्य ग्रीक्प्रभवतां निरूपयामास। विहाय चैतान् चारुदत्तवसन्तसेनयोः परस्परमनुरागः, मदनिकामुक्तिकाले शौर्वलिकचौर्य, वसन्तसेनाया अनुरागः, गणिकावसन्तसेनायाः वधूशब्दावगुण्टनलाभः, शकारचारित्रमित्यादीनां समालोचने स्फुटमेवावगम्यते ग्रीक्प्रातिकृतिरिति॥

एवं क्रि. पू. द्वितीयशताब्दीयपाणिन्याचार्यस्य "पाराशर्यभिक्षुनटसूत्रयो" रिति सूत्रेण नाट्यसाहितेः कथं कलियुगादिवर्त्तित्वमवगम्यते? रामायणमहाभारतादयोऽपि अन्धकविहोमरादिग्रीककविरचितप्रबन्धाननुकरोतीति किल पाश्चात्या वदन्ति। तस्मात्तेषां प्राचीनतां बलवत्तरवैज्ञानिकहेतुभिः प्राक्प्रसाध्य, तदनु चैव वक्तव्यम्॥

तथाप्ययं प्रबन्धः विवेचकानां बहूपकरोति। पाश्चात्यविपश्चितः रामगडनामकगिरिकन्दरे विद्यमाना "सीता बेंगा गुहा" Bloch ग्रीक्रङ्गमञ्चानुकारं निर्मिता, अतएव भारतनाट्यसाहिती ग्रीकप्रभावभावितेति निरूपयन्ति। एतत्प्रबन्धोक्तप्रकारेण प्राचीनभारतीनाट्यरङ्गप्रतिकृतिरचने नूनं ग्रीक्रङ्गमञ्चात्सीताभेंगातश्चातिशयं वैसादृश्यमेव प्रतीयते। एवमेतत्प्रबन्धोक्तनाट्यवर्णितचरित्रभाषाप्रमुखानां पर्यालोचनेन ग्रीक्नाट्यवैरूप्यं भारतीयप्राचीननाट्यपटलस्यावसीयते। परन्तु अर्वाचीनरूपकेषु केषुचित् ग्रीक्प्रभाव अनपलपनीय एव, अद्यत्वे किल आङ्ग्लेयाना-

मनुकारः अधुनातननाट्यनिकरेषु कथं प्रसरन्नास्ते इति वाचकास्तत्र नेत्राणि प्रसारयन्तु । एवमेव प्रागपि केषुचिन्नाटकेषु ग्रीक्प्रभावस्समासीदेव । तावता किन्नश्छिन्नं? परन्तु भारतनाट्यसाहित्योद्भवकार्यं ग्रीक्देशीयनामुपरि निवेशनं नितरां न सम्भवतीत्यन्यत्र विस्तरः ॥

एवमादिप्रयोजनकरेदृशप्रबन्धाः कर्णाटभाषायां न सन्त्येवेति नात्युक्तिः । एतादृशमपमानमपनोदायितुं कर्णाटकेषु प्रथमत एव प्रावर्तत प्रबन्धकार इति नाट्यप्रयोगसारसङ्ग्रहकाराय सि. वेङ्कटरमणार्यमहाभागाय बहून्धन्यवादान्समर्पयामः । अशास्महे चास्य ग्रन्थस्य कर्णाटकजनपदे सर्वत्रापि प्रचारोस्त्विति ॥

**का. प्राणेशाचार्यः,**

## समस्यापूरणम्.

---

" अस्ति स्तः सन्ति . . . . नास्ति न स्तो न सन्ति । "

इमे समस्ये द्वे अप्येकस्मिन्नेव पादे यथा भवतस्तथोद्यमः कार्यः ॥

**विद्वान् पि.पि. लक्ष्मीनारायणोपाध्यायः,**
श्रीमन्महाराजसंस्कृतमहापाठशालाविद्यार्थी.

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

# विषयसूचना

---

---

# सम्पादकीयसमितिः

---

१. श्रीमन्तः वि. सुब्रह्मण्यार्याः, बि.ए., विश्रान्त मैसूरु विश्वविद्यालयाधिकारिणः (रेजिस्ट्रार्)

२. श्रीमन्तः अर्थशास्त्रविशारदाः विद्यालङ्काराः महामहोपाध्यायाः डाक्टर् आर्. शामशास्त्रिणः, बि.ए., पिएच्.डि., एं.आर्.ए.एस्., विश्रान्त मैसूरु प्राच्यकोशागाराध्यक्षाः शासनविमर्शशाखाध्यक्षाश्च

३. श्रीमन्तः प्रोफेसर् डि. श्रीनिवासाचार्याः, एं.ए., मैसूरु महाराजाकालेज् संस्कृत प्रधानोपाध्यायाः

४. पण्डितरत्नं धर्माधिकारिणः ब्र. श्री. काशी शेषवेङ्कटाचलशास्त्रिणः

५. महामहोपाध्यायाः पण्डितरत्नं ब्र.श्री. लक्ष्मीपुरं श्रीनिवासाचार्याः, विश्रान्तमहापाठशालाविशिष्टाद्वैतवेदान्तप्रधानोपाध्यायाः

६. महाविद्वांसः ब्र. श्री. क. गोपालकृष्णशास्त्रिणः, महापाठशालासाहित्यप्रधानोपाध्यायाः

७. महाविद्वांसः ब्र. श्री. करूरु शेषाचार्याः, महापाठशाला ज्यौतिषप्रधानोपाध्यायाः

८. श्रीमन्तः एस्. बि. कृष्णमूर्तयः, एं.ए., महापाठशालाध्यक्षाः (सम्पादकाश्च)

# विज्ञप्तिः

भो भो महाशयाः ! सहृदयाः ! सप्रश्रयमिदमिदानीं विज्ञाप-यामः-संस्कृतविद्याभिमानिनः पुरुषप्रवराः यं कंचन विषयमधि-कृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरि-कर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोप-कारकरं धर्माद्यविरुद्धं "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टसुख विलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पार-यामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य.

---

# मूल्यप्रकारः

१. अस्याः पत्रिकायाः वार्षिकम् अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम्. (भारतमण्डले.)
२. विद्यार्थिनां पुनः एकरूप्यकम्. प्रापणव्ययपृथक्कृतम्.
३. विभिन्नदेशे सपादरूप्यद्वयम् (3*s.*) प्रापणभृतिः पृथक्.

पत्रिकाप्राप्तिस्थानम्,

संपादकः,

श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु.

## सधन्यवादमस्माभिरङ्गीकृता एताः
## विनिमयरूपाः पत्रिकाः

---

1 संस्कृतसाहित्यपरिषत्पत्रिका, श्रीनगरम्.
2. संस्कृत साहित्यपरिषत्पत्रिका, कल्कत्ता.
3. उद्यानपत्रिका, तिरुवाडि.
4. सुप्रभातम्, काशी.
5. सूर्योदयः, काशी.
6. संस्कृतरत्नाकरः, जयपुरम्.
7 संस्कृतपद्यवाणी, कल्कत्ता.
8. मञ्जूषा, कल्कत्ता.
9. अच्युतः, काशी.
10. कल्याणम्, गोरखपुरम्.
11. मधुरवाणी, बेलगाम्.
12. देववाणी, कल्कता.
13 The Mythic Society Journal, Bangalore.
14. Annals of the Bhandarkar Oriental Research Institute, Poona.
15. Review of Philosophy and Religion, Poona.
16 Journal of Oriental Research, Madras.
17 The Law College Magazine, Madras.
18 The Literary and Educational Supplement to "The Hindu," Madras.
19. The Aryan Path, Bombay.
20. The Theosophical Movement, Bombay.
21. The Philosophical Quarterly, Calcutta.
22. Karnataka Historical Review, Dharwar.
23. Ardra, Ceylon

24. "Yoga," Bulsar.
25. The Vaitarini, Chowdwar
26. ಆಂಧ್ರ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕಾ, ಕಾಕಿನಾಡ
27. ಭಾರತೀ, ಮದ್ರಾಸು,
28. ಸನಾತನಮತಪ್ರಚಾರಿಣೀ, ಭಟ್ಟವಲ್ಲಿ.
29. ಜಯಕರ್ಣಾಟಕ, ಧಾರವಾಡ
30. ಸದ್ಬೋಧಚಂದ್ರಿಕೆ, ಆನಂದವನ.
31. ವಿಶ್ವಕರ್ಣಾಟಕ, ಬೆಂಗಳೂರು.
32. ತಾಯಿನಾಡು, ಬೆಂಗಳೂರು.
33. ಅಧ್ಯಾತ್ಮಪ್ರಕಾಶ, ಬೆಂಗಳೂರು.
34. ರಂಗಭೂಮಿ, ಬೆಂಗಳೂರು.
35. ಕರ್ಣಾಟಕ ಸಾಹಿತ್ಯಪರಿಷತ್ಪತ್ರಿಕೆ, ಬೆಂಗಳೂರು
36. ಕಾದಂಬರೀಸಂಗ್ರಹ, ಚಾಮರಾಜನಗರ.
37. ಪ್ರಬುದ್ಧಕರ್ಣಾಟಕ, ಮೈಸೂರು
38. ವಿವೇಕಾಭ್ಯುದಯ, ಮೈಸೂರು.
39. ಪೂರ್ಣಬೋಧ, ಮೈಸೂರು.
40. ಸಾಧ್ವೀ, ಮೈಸೂರು.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासत्रयं प्रकटीक्रियमाणा



"कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः"

(ईशोपनिषत्)

सम्पुटम् ११] अक्टोबर् १९३५ [सञ्चिका ४

## सु भा षि ता नि.

ते साधवो भुवनमण्डलमौलिभूता
ये साधुतां निरुपकारिषु दर्शयन्ति ।
आत्मप्रयोजनवशीकृतखिन्नदेहः
पूर्वोपकारिषु खलोऽपि हि सानुकम्पः ॥ १ ॥

सुजनाः परोपकारं शूराश्शस्त्रं धनं कृपणाः ।
कुलवत्यो मन्दाक्षं प्राणात्यय एव मुञ्चन्ति ॥ २ ॥

वाच्यतां समयोऽतीतः स्पष्टमग्रे भविष्यति ।
इति पाठयतां ग्रन्थे काठिन्यं कुत्र वर्तते ॥ ३ ॥

दुर्जनस्य विशिष्टत्वं परोपद्रवकारणम् ।
उपोषितस्य व्याघ्रस्य पारणं पशुमारणम् ॥ ४ ॥

शुनां च पिशुनानां च परवेश्मप्रवेशने ।
प्रयोजनं न पश्यामः पात्राणां दूषणादृते ॥ ५ ॥

अहो खलभुजङ्गस्य विचित्रोऽयं वधक्रमः ।
अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते ॥ ६ ॥

निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अवन्ध्यकाले वश्यात्मा स वै पण्डित उच्यते ॥ ७ ॥

यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ ८ ॥

यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न किंचिदवमन्यन्ते नराः पण्डितबुद्धयः ॥ ९ ॥

आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥ १० ॥

सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ११ ॥

अव्याहृतं व्याहृताच्छ्रेय आहुः
सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।
प्रियं वदेद्व्याहृतं तत्तृतीयम्
धर्म्यं वदेद्व्याहृतं तच्चतुर्थम् ॥ १२ ॥

भूपः कूप इवाभाति नमज्जनसुखावहः ।
ददाति गुणसम्बन्धाद्यथापात्रानुरूपतः ॥ १३ ॥

पदस्थितस्य पद्मस्य मित्रे वरुणभास्करौ ।
पदच्युतस्य तस्यैव क्लेशदाहकरावुभौ ॥ १४ ॥

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति गौरवम् ॥ १५ ॥

———

॥ जयन्ति श्रीकृष्णभूपतिः ॥

# श्रीकृष्णराजनवनीतसुधोपहारः

---

विष्णोः पूर्णावतारं विदुरिह मुनयस्सन्ततौ यत्र यस्मिन्
गीताशास्त्रावतारं जगुरिह विबुधास्तत्र सर्वाभिनन्द्ये ।
राज्ञां वंशे यदूनामविरळयशसा खण्डिताशाकटाहः
जातस्सोमप्रकाशः जयति नृपवरो नाल्वडीकृष्णराजः ॥ १ ॥

यद्वंशे भुवनत्रयीनुतनते नासात्त्वतानां जनिः
गीता व्यासमहर्षिणा यमधिकं मेने स्वधाम्नो हरिः ।
यस्मिन् विश्रुतविक्रमा नृपवराः देवांशतो जज्ञिरे
जातस्तत्र नृपोत्तमो विजयते कृष्णेन्द्रविद्वन्निधिः ॥ २ ॥

क्षोणीशूरतुरीयकृष्णधरणीपालः क्षमावासवः
सल्लक्षोज्ज्वलजीवरत्ननिचयप्रत्युप्तसिंहासने ।
वीरश्रीजयचामराजयुवभूपालादिभिर्मण्डितः
संविष्टस्सकलाः प्रजास्समदृशा संरक्षताद्विष्णुवत् ॥ ३ ॥

अमृतकिरणवंशाभिख्यसन्तानभूज-
प्रभवयदुकुलात्मक्षीरवाराशिचन्द्रः ।
प्रथितमहितवाणीसन्निधानार्यभूमि-
प्रभवनृपतिधर्मो वर्धतां कृष्णराजः ॥ ४ ॥

श्रीमत्कृष्णमहीपुरन्दरयशःपुञ्जांशुपञ्जीकृत-
ब्रह्माण्डस्थसमस्तकोशनिलयप्रत्यूढकोशच्छटाः ।

प्रापुः काममलेखतां श्रुतधराः कोशानपेक्षं बुधाः
स्वाध्यायाध्ययनादिवत्प्रवचनं छात्रेष्वहो तन्वते ॥ ५ ॥

लेखाः प्रापुरलेखतां क्षितिधराः कैलासतामब्धयः
क्षीराम्भोनिधितां शकुन्तनिवहाः कादम्बतां कुञ्जराः ।
जिष्णोर्वारणतां सितेतररुचस्सर्वास्सिताकारतां
कृष्णेन्दो! यदुवीर! तावकयशश्चैविक्रमप्रक्रमे ॥ ६ ॥

स्पर्शग्राह्यलिपिस्थितिर्धवलिमामात्रेण वर्णस्थितिः
वाङ्मात्रेण सितेतरास्थितिरपां क्षीरात्मनावस्थितिः ।
दर्शादर्शविशेषविस्मृतिरपि क्ष्मासुरूढाः ध्रुवं
कृष्णेन्दो! तवशुक्लनिस्तुलयशःपुञ्जेन्दुजैत्रोत्सवे ॥ ७ ॥

कामी कोऽपि यशांसि ते न सहते कृष्णेन्द्र! विद्वन्मणे!
को हेतुर्वद कोविद! क्षितिपते हेतुः किलायं शृणु ।
कीर्त्या ते नृपते समस्तभुवने शुक्लीकृते कुन्तलान्
कामी कोऽपि विलोक्य यौवनगतान् निन्दत्यलं ते यशः ॥ ८ ॥

कृष्णेन्दो! तव धर्मपालनकलालेशं विधिस्तोलनं
कर्तुं भूमितुलापुटे नृपवरान् सङ्ख्यातिगान् स्थापयन् ।
नाऽलन्तामवगम्य सर्वजनताक्षेमैकदत्तात्मनो
सङ्ख्यातानधुनापि तत्र कलयन्नेवास्ति रूढश्रमः ॥ ९ ॥

सा त्वां पातु सरस्वती नरपते! सर्वाङ्गरक्ता कथं?
शुक्लाङ्गी ननु सा? पुरा खलु तथा! कृष्णेन्द्र! साद्यारुणा ।
कस्मात्? तेऽद्य घरानुरागकिरणैश्शोणीकृता साधुना
कृष्णेन्दो! तदुदीरिता ननु मया सर्वाङ्गरक्तेति सा? ॥ १० ॥

ब्रह्मक्षत्राङ्गरूढैर्भुवनहितकृते सङ्गतैर्वैश्यशूद्रा-
श्चान्ये लोका यथार्हं स्वसुतसमदृशाधूतसाङ्कर्यदोषाः ।
नित्यं संरक्षणीया भुवनयुगशुभायेति शङ्कासवित्री
प्रज्ञामुद्राऽतिवेलं कुशलमुपहरेद्वाक्पतेः कृष्णगोप्त्रे ॥ ११ ॥

वाणीवागीशपूजानिरतमुनिकुलश्रीपदाम्भोजसेवा-
सन्तानप्राप्तलेखर्षभसमविभवो मातृवाणीविलासी ।
विद्वत्सन्तानविद्यासदनसमुदयाभीष्टचिन्तामणिर्नः
श्रीकृष्णेन्द्रो धरित्रीमवतु सतनयस्सानुजो जिष्णुवद्याम् ॥ १२ ॥

पद्यान्तरगर्भितं पद्यम्

श्रीचामुण्डामरार्थिव्रजहितनयना कृष्णशक्तिस्वरूपा
राराजद्वीरहासप्रशमितमहिषा मांसला मान्यभावैः ।
राज्यश्रीधर्मधीदा यदुकुलमहिता भक्तमन्वादिहृद्य-
स्वप्रीता सत्यपद्यारतमवतु सदा स्वाश्रियं कृष्णराजम् ॥ १३ ॥

निगूढपद्यम्

श्रीचामराजतनय ! कृष्णराज ! रसामिमाम् ।
समाराधय, मन्वादिहृद्यपद्यामवस्वयम् ॥ १४ ॥

गर्भस्थस्वस्तिवचनपद्यम्.

श्रीमानेधि कृपालुरास्व विलसानुष्णाश्रियाराष्ट्रगान्
शाध्यन्यान् जय तेजसा लस भुवि स्वर्णा[1]र्णवर्षोऽस्तु ते ।
हस्तिप्रेष्ठवरप्रदस्तव शुभं कुर्यान्निगूढात्र का-
प्याशीरस्ति लसन्ति तत्र नृपते कृष्णेन्द्र ! पूर्णाशिषः ॥ १५ ॥
(गर्भस्थस्वस्तिवचनम्—"श्रीकृष्णराज ते स्वस्ति" इति ॥)

[1] अर्णः—वर्णः विद्यावर्ष इत्यर्थः

वाणीप्रासादविद्यासदनपरिलसद्भद्रपीठाधिरूढा
भव्यश्रीकोशशालायुगशुभनयना विश्वविद्याप्रतीका ।
नित्यं विद्वत्सवित्री विनतमुसलमध्याशुवागीशयन्ती
वाणी वाणीविलासप्रियसुतमवतान्नाल्वडीकृष्णराजम् ॥ १६ ॥

चिन्तारत्नं प्रजानां विबुधकुलमनःप्रार्थनाकामधेनुः
दीनानाथामरद्रुः सुजनतनुबलं भूमिभृन्नीतिसारः ।
सत्योद्धाराहर्यश्वं किमपि वसुमतीजीवितं धर्मशौर्यं
श्रीकृष्णेन्द्रो धरित्रीमवतु सतनयस्सानुजो गां यथेन्द्रः ॥ १७ ॥

कर्णाटं सुगुणैश्शुभाङ्गरुचिभिर्नेत्राटमावर्जनैः
चित्ताटं स्वकथामृतैः कवयतां जिह्वाटमामोदतः ।
घ्राणाटं शुभकर्मणां स्वयशसा विश्वाटमाज्ञाबलैः
सर्वाषाटमवैमि कृष्णनृपतिं तीर्थाटदिग्दर्शिनम् ॥ १८ ॥

यस्याभूच्चातुरी क्ष्माततविमलयशश्चेलकृत्ये तुरीव्या
यच्चेलं भारतीज्यासमुदमविरतं सर्वतः पर्यधत्त ।
सोऽयं श्रीमान् तुरीयो लसति समधिकं सर्वतो जिष्णुकल्पः
रत्नोप्ते भद्रपीठे यदुकुलमहिते विश्रुते कृष्णराजः ॥ १९ ॥

सात्वतपदाब्जभृङ्गः सात्वतभक्तान्ववायजलधीन्दुः ।
सात्वतसमानकीर्तिः सात्वतवत्कृष्णभूपतिर्जयति ॥ २० ॥

मुक्ताहारमनोहरं सुविलसन्मन्त्रं सदैवाञ्चितं
युक्ताहारपरायणं निरुपमश्रीकोशदत्तेक्षणम् ।
तत्तत्तन्त्ररहस्यदत्तनयनं श्रीकृष्णभूपालकं
राजर्षिं विबुधास्स्मरन्ति भुवने यत्तत्प्रतीमः परम् ॥ २१ ॥

नित्यं तीर्थोपसेवी समरसहृदयः दीर्घघण्टानिनादे
नित्यं बद्धावधानः करिमुखविभव मध्यबद्धोड्डियाणः ।
प्रत्यग्रूपाक्षमालः शरदि धृतकरः सर्वपर्वप्रतीक्षः
राजर्षिः कोऽपि जीयाद्विनतशरणदो नाल्वडीकृष्णराजः ॥ २२ ॥

स्वर्णप्रदं भविकविग्रहदत्तदृष्टिं
भद्राक्षवर्तनपरं महिताक्षराशम् ।
यात्राप्रियं स्वकरणप्रगृहीतचापं
राजर्षिमाहुरिह नाल्वडिकृष्णराजम् ॥ २३ ॥

कुशासनपरिग्रहं बहुसुवर्णमुद्राञ्चितं
कुशासनविलोपकं विहितशासनोन्मेषिणम् ।
बलिष्ठरिपुमर्दिनं विहितधर्मसंरक्षकं
नृपर्षिमभिदध्महे समुदमार्यकृष्णप्रभुम् ॥ २४ ॥

योगीन्द्रादृतराजयोगनिरतं वर्णाश्रमोदञ्चकं
धर्मब्रह्मविदं तपःपरिणतं निष्कामकर्मस्थितम् ।
नानादर्शनमर्मदर्शिमुनिभिस्संप्राप्तसद्दर्शनं
त्वां राजर्षिमुपेत्य नन्दति परं कृष्णक्षितीन्द्र! क्षमा ॥ २५ ॥

अक्रूरप्रियदर्शनस्सविजयो धर्मप्रियस्सात्वतः
गीताभिज्ञमनोहरो नकुलदृक् सत्वेक्षणो गोपतिः ।
विद्वद्वैदिकपुत्रवर्धनपरो गोवर्धनार्चाप्रियः
भामाढ्यः किल कृष्णभूपतिरयं जागर्ति कृष्णः परः ॥ २६ ॥

अक्रूरसौम्यदृष्टिं नकुलैकाक्षं च शुभगुणैकाक्षम् ।
सत्यादरं श्रियाढ्यं कृष्णेन्द्रं कृष्णमेव जानीमः ॥ २७ ॥

चातुर्यस्थैर्यधैर्यप्रमुखशुभगुणैर्लोककर्णान्तरेऽटन्
दानेऽटन् कर्णतुल्यो लसति भुवि यथार्थोह्यकर्णाटभूपः ।
सोऽयं कृष्णक्षितीन्द्रस्तनययुवमहीवल्लभाद्यैर्जनानां
नेत्रप्रान्ते मुदाटन्नजनि पुनरहो लोचनाटक्षितीन्द्रः ॥ २८ ॥

धराशूरावासात्क्षितिविबुधरक्षाप्रणयना-
द्धरासारावासादपिच महिषाख्याऽसुरपदात् ।
धृताभिख्याभेदे सुरपुरसमे भूसुरपुरे
महीं रक्षन्नास्तामनिशमपि कृष्णक्षितिपतिः ॥ २९ ॥

सर्वामात्यगुणाकरं मिहिरजं दीनेषु विश्राणने
भूपालप्रियमद्वितीयधिषणं राजप्रजावत्सलम् ।
विख्यातं मिरजाप्रभुं सचिवयन्नार्थाग्रणीरद्यनः
कृष्णेन्द्रस्सकलाःप्रजास्समदृशा पुष्णाति पुत्रानिव ॥ ३० ॥

मान्यं सर्वसहोदराग्रिमशुभाभिख्यानुरूपक्रियं
तम्बूचट्टिमहाशयं शुभगुणप्रेक्षं समप्रेक्षणम् ।
तन्वन्नद्यनिजान्तरङ्गसचिवं श्रीकृष्णभूवल्लभः
स्वावासं कमलानिवाससदनं विभ्राजयन्नेधते ॥ ३१ ॥

राज्यश्रीप्रभवः धनेशविभवः शुक्लातपत्राञ्चितः
कृष्णेन्दुर्जयति प्रमोदभरितो धीरः प्रजानांपतिः ।
सत्याङ्गाङ्गिरसप्रवर्धनपरो धीश्रीमुखाढ्योभव
न्यस्ताक्षश्च युवा प्रशस्तपदवीधाता स्वतन्त्रेश्वरः ॥ ३२ ॥

धर्मात्मा बहुधान्यवर्धनपरः क्लेशप्रमाथ्याङ्गिनां
धर्मस्थापक विक्रमः वृषपरः चित्रस्वभानूज्ज्वलः ।

दैन्योत्तारणपार्थिवो व्ययपरः पात्रे गुणैस्सर्वजित्
धर्मध्वंसिषु सर्वधारिरवनीतानां विरोधी परम् ॥ ३३ ॥

धूतान्तर्विकृतिः खरारिमहितः श्रीनन्दनेक्षाबलात्
प्राप्तद्विड्विजयः जयध्वज पतिः दुर्मन्मथेदुर्मुखः ।
हेमालम्बिपदो विलम्बितभुजश्श्वेतोविकारिष्वरिः
संपूर्णोदितशार्वरीसखमुखः क्लेशाम्बुराशिप्लवः ॥ ३४ ॥

लोकानां शुभकृत्सभावसुमती शोभाकृदार्यद्विषां
क्रोधी विश्वगुणैकवीक्षणविधौ विख्यातविश्वावसुः ।
क्वाप्यप्राप्तपराभवः प्लवगहृत्सत्कीलकं सौम्यवाक्
सत्साधारणसंश्रयो नयतनुद्वेष्टुर्विरोधैककृत् ॥ ३५ ॥

वृत्त्यर्थं परिधाविकोविदगणाभीष्टैकचिन्तामणिः
दृत्तोद्बोधवचाः प्रमादिषुधरानन्दैकजन्मालयः ।
बुद्ध्याराक्षसभावशोधकसमोनव्योनलः पिङ्गळः
कान्त्या सिंहशुभासनस्य सहसोद्यत्कालयुक्त्याञ्चितः ॥ ३६ ॥

सिद्धार्थिव्रजकामधुक्कुवचसां रौद्रीकलास्पर्शनः
तत्तद्दुर्मतिदुर्मदापहरणः यात्रोल्लसद्दुन्दुभिः ।
रक्तोद्गारिनिबर्हणोऽरिसुहृदोः रक्तेक्षणः क्रोधनः
स्थानेष्वक्षयसंपदां स्थिरपदं षष्ठ्यब्धिलीढाब्दभाः ॥ ३७ ॥

पद्यान्तरगर्भितपद्यानि—(४)

आर्यश्रीयुत राष्ट्रोचन! महाभाग्य! स्वपुण्यानत-
त्राणाऽर्थप्रद! राज्यबन्धुर! यशोलक्ष्मीसमृद्ध! प्रभो!

श्रेयःकाम्य! भवन्तु भद्रततयो–भद्राङ्ग! ते सर्वदा-
विष्णोः क्षेमवरप्रसादसुखदाश्श्रीकृष्णराजस्य ते ॥ ३८ ॥

निगूढपद्यम्

“ आयुरारोग्यपुत्रार्थराज्यबन्धुसमृद्धयः ।
भवन्तु ते सदा विष्णोः ” प्रसादात् कृष्णराज ते ॥ ३९ ॥

राधाकान्तयदुक्ष्मापतिकुलोत्तंस प्रभो भोजभू-
कान्त स्वप्रतिबिम्बसप्रभ धराकाम्य प्रियक्ष्मासुर! ।
धर्माधार धरोपमक्षम नरोत्तंसप्रिय त्वत्समः
कृष्णेन्द्रः कृपया तवात्र विजयीभूयात्सुभद्रेशवत् ॥ ४० ॥

निगूढपद्यम्

राधाकान्त कुलोत्तंस! भोजभूकान्तसप्रभ! ।
धरासुरधरोत्तंस कृष्णेन्द्र विजयीभव ॥ ४१ ॥

श्रीमान् कृत्यविदुष्णरश्मिसमभाः विद्वत्प्रभुस्सारवाक्
सत्यस्थोर्थमतोवनीपकहितो भूमण्डलाऽलंकृतिः ।
तीर्थावासपदं समंप्रकृतिभिर्नित्यं नृपालप्रियः
रक्षन्नेव समेधतां भुविधरां श्रीनाल्वडीकृष्णराट् ॥ ४२ ॥

निगूढपद्यम्.

श्रीकृष्णविभुरत्यर्थमवनीमण्डलंकृती ।
समं प्रकृतिभिर्नित्यं पालयन्नेधतां भुवि ॥ ४२ ॥

विद्वन्मण्डललोल सत्कविनुताऽनल्पप्रद श्रीतताऽऽ-
चारोन्मेषदशाक्ष भूप सुकरप्रेष्ठेक्षण प्रज्ञ भोः ।

# का व्य जि ज्ञा सा

अथातः काव्यजिज्ञासा—

कस्यायं सङ्ग्रहोऽथेति? यत्कारणं मङ्गलाद्यनेकार्थाख्यानोऽथ-शब्दो नामेति तदुच्यते—योऽर्हति तदाख्यान इति। यद्येवं तत्तर्हि वक्तव्यं, कैषा सरणिः? ययाऽऽर्हन्त्यवध्रियतां, यावता न वृत्तं किञ्चिदुपलभामहे इति। अत्राह—नैवमत्राभिनिवेष्टव्यं यत् वृत्तस्योप-लम्भन एवैवञ्जातीयिकाऽवधृतिरायतत इति, यतः खलु वर्तिष्यमाण-मनुरुन्धानैरप्यवध्रियत एवैषोऽर्थ इति। वर्तिष्यते च काव्यजिज्ञासेति विचाराख्यानः शब्दः उपलम्भने चैवञ्जातीयकस्य, तत्रैव काव्याख्या-नेऽर्थे सन्दिग्धे इत्यवधर्तुमलं, विचारो हि सन्देहेन व्याप्त इति। नो खलु लेशतोऽप्यनवगच्छन् सन्देग्धुमीष्टे, नोतराञ्च सुस्पष्टमवगच्छन्। तदिहैष सन्देहः कल्प्यमानः सामान्यावगत्या व्याप्त इति। व्यापिनी सामान्यावगतिरपीष्टेऽत्रावस्थातुम्। द्वितन्त्रा चैषावगतिः स्यात्। यथा व्युत्पन्नो देवदत्तः स्वतः पठति काव्यमवगच्छति चार्थमिति। यथा च यज्ञदत्तो देशिकोपदिष्टमवगच्छतीति। सेयं सरणिः, अनयावध्रियता-मानन्तर्यस्यैवार्थस्यार्हन्तीति तस्यैवायं सङ्ग्रहोऽथशब्दो नामेति॥

हेत्वभिधानोऽतश्शब्दो वृत्तमपदिशन्, यत एतच्छब्दवृत्तोऽत इति तसिलन्तः सार्वनामिकः उक्तपूर्वात् सन्देहात् इत्यर्थाभिधानः। सन्देहात्मा विनश्यतीति च द्वैपायनीया शासना तदिहैवञ्जातीयकं सन्देहं निवर्तयितुमेषा विचारणेति स्फुटितम्। किम्पुनस्तत्काव्यम्? कश्च वा संशयः? कथञ्चापगमः? तत्राह—यत्र प्रतिज्ञोपरोधः॥

द्वयमिह पर्यनुयोगस्य निरुणद्धि, किम्पुनस्तत्काव्यम्? कश्च वा संशय इति। यत्र हि काव्ये कविः प्रतिज्ञामुपरुणद्धि, तदेव काव्यमिह प्रेक्षावत्प्रतिपित्सागोचर इति। त्यजतीति यावदुक्तं भवति, तावदुक्तं भवति उपरुणद्धीति। यदाहि प्रतिज्ञातमर्थमाचष्टे देवदत्तः, तदा प्रतिज्ञामुपरुन्ध इति, यदा तु न, तदा प्रतिज्ञामुपरुन्ध इति चाभिव्याहार इति प्रतिज्ञातार्थसन्नयासः स्फुटितः। नचैतन्नयाय्यमस्य कवेः, यत्कारणं महामहिमैष कवी राजा कवीनामिति विश्रुण्मः। तत्किमेष सन्नयास्येव प्रतिज्ञातस्यार्थस्य? उताहो नेति विचिकित्सा। अतोऽसन्दिग्धं प्रेक्षावत्प्रतिपित्सागोचर इदं काव्यं, यदुत, अथवा कृत-वाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः। मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः इतिचैवमुपक्रमकम्। ननूपवर्णितविकर्तनान्वयाः पूर्वे सूरय एष चेति, अश्रद्धेयं वो वचो यत् प्रतिज्ञोपरोध इति, इति चेत्, न॥ **कृणुतोकवादात्**–पूर्वसूरिभिरिति पूज्यनिर्देशो बहुवचनः। स च कृणु-तोकप्रख्यानः। ननु वल्मीकतोकवादः एषः पूर्वसूरिभिरिति। नैतदेवम्, न हि वल्मीकस्य तोकः सम्भवतीति। तत्किमेष वाद उन्मत्तजल्पितं, वाल्मीकीयं रामायणमिति? तत्राचष्टामहे कृणुरेव वल्मीकाभिधान इति। कथमिदमवगम्यताम्? स्कान्द्या ख्यात्येति पर्यवस्यति। तथाह्यर्थावगतिः। पम्पायाः कूलमनुवसन् शङ्खाख्यानर्षी रचिततपा-श्चरन् कदापि व्याधबद्धो व्याधापहृतछत्रपादुकादिसर्वस्वो धर्मत से जातघृणतद्व्याधोपहृतपादुको दैवात् व्याधनाथितव्याधजन्मान्तरपुण्य-पापादिनिखिलवृत्तान्त आचष्टास्मा अनुग्रहमनीषो धर्मजन्मनी॥

'शाकलनगरास्थानश्रोत्रियः श्रीमान् वत्सान्वयजन्मा स्तम्बा-भिधानः बहुवारनारीपरिवारितः त्यक्तात्मधर्मो धर्मनिन्दकः नैकविध-रुजाकबलितो दैवोपचारं पलघुपचरितसवेश्यः अनुभूयमानदारिद्यपरकाष्ठो

धूर्तकृत्यवेश्यात्यक्तो राजयक्ष्मार्तोतिवेलदूयमानात्ममनोनाथिताखिलात्म-दुष्कृत्यक्षमापणः अतिसाधुतत्पत्नीनिवेदितभवान्तरात्तपापमात्रोपादानक-तद्दुःखः साधुतत्पत्नीकृतमृतचितारोहणोऽनुभूतादभ्रनरकभवान्तरोऽवाप्त-व्याधजन्मासीति ॥

सुदीर्घकालं निरन्तरं सत्कुर्वन्नासेवस्वेमान् धर्मान् —

यात्रिकमनुजानुपचर फलमूलैः घर्मकालसौलभ्यैः ।
कुटिभिः प्रपयाहर्निशमयि रे वच्म्यन्यतत्वं ते ॥
अवधेहि सोम्य सततं जप रे श्रीराम रामेति ।
मोचकमाखिलात्पापात् आत्मानन्दाप्तिहेतुमनुराजम् ॥ इति च ॥

तदन्वनुष्ठितैतदादिष्टसर्वधर्मावाप्तमरणधर्मा चाजायत कृणुतोकः । यथाह भगवान् द्वैपायनः—

प्रातः स्नात्वा दिवारात्रं जपन् रामाभिधं मनुम् ।
व्याधजन्मनि नामासौ वल्मीकस्य सुतोऽभवत् ॥
कृणुर्नाम ऋषिः कश्चित् तस्मिन्नेव सरोवरे ।
तपो वै दुस्तरं तेपे बाह्यव्यापारवर्जितः ॥
वल्मीकमभवत्तत्र तस्य कालेन भूयसा ।
वल्मीक इति तं प्राहुरतो वै मुनिपुङ्गवम् ॥
पश्चात्तपेविरामान्ते कृष्णौ स्मृतिपथं गते ।
स्त्रियोऽनुस्मरतो राजन् स्खलितश्चेन्द्रियं मुनेः ॥
जग्राह शैलुषी काचित् तस्यां जज्ञे वनेचरः ।
वाल्मीकिरिति विख्यातो भुवनेषु महायशाः ॥
यो वै रामकथां दिव्यां स्वैः प्रबन्धैर्मनोहरैः ।
लोके प्रख्यापयामास कर्मबन्धनिबर्हणीम् ॥ इति ॥

अत्राह—सत्यं कृणुतोकवादः पूर्वसूरिभिरिति नैव त्वेष प्रतिज्ञामुपरुणद्धि, तत् असम्बद्धमेवोपन्यस्तं कृणुतोकवादात् तत्सिद्धिरिति तदुच्यते ॥

अद्धा असम्बद्धमुपन्यस्तं स्यात्, यदि दिव्यां कर्मबन्धनिबर्हणीं इति कथां विशिंषन्तमंशं न पर्यालोचयेम, इह हीदमेवादितो विमर्ष्टव्यं भवति, किन्निबन्धनोऽयमस्याः कथायाः दिव्यतावादः? कर्मबन्धनिबर्हणतावादो वेति? न खलु कथा नाम कथात्वादेव तादृगुभयविधावस्थातुमीष्टे, यतो नैवं पश्याम इति। वयन्तु पश्यामः श्रौतीयमिति तादृगुभयविधतावाद इति ॥

ननु नैवैवमाह श्रुतिः—राम आसीत्कौसल्यामाता त्रिभ्रात, लक्ष्मणसखः सीताजानिः पौलस्त्यार्द्दन इति चैवमादि—तत्कुतस्त्यास्याः श्रौतता? तदभावे च कुतस्तरां तादृगुभयविधता? तदभावे च कुतस्तमां प्रतिज्ञोपरोधः? तत्रोच्यते ॥

**कृणुतोकवादात्—**

वदत्यसावाभाणकः कृणुतोकं विशिष्टवेषवेषितं।<br>
वेदवेद्ये परे पुंसिजाते दशरथात्मजे।<br>
वेदः प्राचेतसादासीत् साक्षाद्रामायणात्मना ॥ इति ॥

वदन्ति च भट्टपादा वेदप्रस्थानाभ्याससंस्कारसंस्कृतमतयो हि वाल्मीकिद्वैपायनप्रभृतयः तच्छायान्येवात्मवाक्यानि रचयन्तीति ॥

**लिङ्गदर्शनाच्च—**

लिङ्गं खल्वपि दर्शयन्ति। किं लिङ्गं भवति? आहुः—

यथा रुमायां लवणाकरेषु मेरौ यथा वोज्वलरुक्मभूमौ।<br>
यज्जायते तन्मयमेव तत्स्यात् तथा भवेच्छास्त्रविदात्मतुष्टिः ॥<br>
एवञ्च विद्वद्वचनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितं।

सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ इति ॥

असन्देहपदानि पुनः सर्वात्मना प्रमाणानीति प्रदर्शितम् ।

अवश्यश्चैवमेवतत्प्रतिपत्तव्यम् । किं कारणम्?

**कृणुतोकवादात्—**

कृणुताकं वदति ब्रह्मा अप्रार्थितोपनतः विवर्णयिषितनारदोपदिष्टसर्वगुणसमष्टिरूपपरमपुरुषं ॥

"धर्मात्मनो गुणवतो लोके रामस्य धीमतः ।

वृत्तं कथय वीरस्य यथा ते नारदात् श्रुतम् । इति ॥

इह धर्मात्मा गुणवान् धीमान् वीर इति चतुरो विशेषान् वदन् चतुर्मुखत्वमात्मनोऽसफलयत् । अतोऽन्योऽप्येवं वर्णयन् आत्मनो मुखं सफलयदिति स्फुटितम् । एवं ॥

"रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ।

रामस्य सह सौमित्रे राक्षासानाञ्च सर्वशः ॥

वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः ।

तच्चाप्यविदितं सर्वं विदितं ते भविष्यति ॥ इति ॥

अनेन चावगतं वरदानमस्मै । तथा ।

न ते वागनृता काव्ये काचिदत्र भविष्यति ॥ इति ॥

अनेन असदर्थादिग्रथननिबन्धनाः काव्यदोषाः परास्ताः, येन काव्यत्वनिबन्धना अनुपादेयताशङ्क्येत ततश्च यथार्थनिर्देशात् स्मृतितास्य ग्रन्थस्य द्योतिता न केवलं दोषाभावः गुणाश्चात्र भवन्तीत्याह—

कुरु रामकथां पुण्यां श्लोकबद्धां मनोहराम् ।

यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ॥

यावद्रामायणकथा लोकेषु प्रचरिष्यति ।

यावद्रामायणकथा त्वत्कृताप्रचरिष्यति ॥

तावदूर्ध्वमदश्च त्वं मल्लोकेषु निवत्स्यसि ।

इत्युक्त्वा भगवान् ब्रह्मा तत्रैवान्तरधीयत ॥ इति ॥

अत्र पुनस्सर्वकामावाप्तिमाचष्ट पद्मजः । अष्टगुणात्मोपासनाया-मायत्वत एतत्फलं तज्जातीयायां वा कथाहि छन्दोगा आमनन्ति ।

य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति इति ॥

तादृक्फलवत्ताचात्र कीर्त्यमाना, कथां कथयितुः कथानायक-निविष्टबुद्धेस्तादृगुपासनानिर्वृत्तिं गमयति ॥

अत्रोच्यते—स्यादेतत्सर्वमेवमेव, यद्येष यथोपदेशं वर्णयेत् कथं पुनरिदमवगच्छामः यथोपदेशं वर्णयतीति ॥

**कृणुतोकवादात्**—इति ब्रूमः ।

वदति हि कृणुतोको यथोपदेशमेवात्मनः प्रवृत्तिम् ।

श्रुत्वा वस्तु समग्रं तत् धर्मात्मा धर्मसंहिताम् ।

व्यक्तमन्वेषते भूयो यद्वृत्तं तस्य धीमतः ॥

उपस्पृश्योदकं सम्यङ्मुनिः स्थित्वा कृताञ्जलिः ।

प्राचीनाग्रेषु दर्भेषु धर्मेणान्वेषते गतिम् ॥

शुचितेह कीर्त्यमाना वैदिककर्मतां कर्मणः क्रियमाणस्य गमयति ।

पुरायत्तत्र निर्वृत्तं पाणावामलकं यथा ।

तत्सर्वं तत्त्वतो दृष्ट्वा धर्मेण स महाद्युतिः ॥

अभिरामस्य रामस्य चरितं कर्तुमुद्यतः ।

अनेन योगमहिम्ना अज्ञाताखिलार्थावगतिः कीर्त्यमाना धार्मि-कप्रवरतां गमयति स्पष्टमेव यथोपशमाचरणं प्रतीमः ॥

कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरम् ।
समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम् ॥
स यथाकथितं पूर्वं नारदेन महर्षिणा ।
रघुवंशस्य चरितं चकार भगवानृषिः ॥ इति ॥

यत आह यतस्तराञ्च धर्मज्ञतामाख्याति रामस्य तदनुष्ठातृतां अन्वतो धर्मरूपतां च, अतो मन्यामहे धर्माख्यानोऽयं प्रबन्धः इति। तथाहि को नु धर्मज्ञः कृतज्ञः, इति पृच्छति रक्षिता स्वस्य धर्मस्येति ज्ञानाधीनानुष्ठानेन प्रतिवक्ति कीर्तयति च धर्मकण्ठको मारीचो धर्मस्वरूपं रामचन्द्रं आरण्यकाण्डे ॥

यस्मिन्न चलते धर्मः यो धर्मं नातिवर्तते ।

इति धर्मानतिवर्तिनमाह शुको युद्धकाण्डे—

चातुर्वर्ण्यं च लोकेस्मिन् स्वे स्वे धर्मे नियोक्ष्यति । अनुष्ठापयितृत्वञ्चैवमादिना नारद उत्तरवाक्ये वक्ति—

विद्धि मामृषिभिस्तुल्यं केवलं धर्ममास्थितम् ।

इति स्वयमेव रामोऽयोध्याकाण्डे तदनुष्ठातृतां वदति ।

सशपथं च लक्ष्मणः धर्मस्वरूपं आख्याति युद्धकाण्डे—

धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि ।
पौरुषे चाप्रतिद्वन्द्वः शरैनं जहि रावणिं । इति ।

किं बहुना ब्रह्मैवाचष्टे धर्मस्वरूपमेनं 'लोकानां त्वं परो धर्म' इति ॥

**उपपत्तेश्च—**

उपपत्तिञ्चेह पश्यामः । यथाह भगवान् द्वैपायनः श्रीकृष्णसूक्ति—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ इति ।

अखिला अपि ह्यवताराः श्रीपरमेश्वरस्य धर्मान् स्थापयितुं अधर्मांश्चापहन्तुमिति हि शास्त्रमर्यादेति ॥

तत्सिद्धं कृणुतोकं प्रति ब्रह्मवचनात्, कृणुतोकस्यात्मवचनैश्च धर्मप्रधानकोऽयं प्रबन्ध इति ॥

कतमः पुनरत्र सर्वेषु धर्मेषु विशिष्टः प्रतिपादितः स्यादिति मीमांसा ॥

ननु राज्ञां राजधर्माः तदितरेषाञ्च तत्तद्धर्माः प्रतीताः तथाहि—

स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः ।
दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे ॥
न नास्तिको नानृतको न कश्चिदबहुश्रुतः ।
नासूयको न चाशक्तो नाविद्वान् वर्तते तदा ॥
दीर्घायुषो नरास्सर्वे धर्मं सत्यञ्च संश्रिताः ।
वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः ॥
क्षत्रं ब्रह्ममुखन्त्वासीत् वैश्याः क्षत्रमनुव्रताः ।
शूद्राः स्वधर्मनिरताः त्रीन् वर्णानुपचारिणः ॥

इति चैवमाद्यत्र प्रतिपाद्यते । ततस्तत्तद्धर्मानुष्ठानं तस्य तस्य प्रशस्तमिहाभिसन्धत्ते महर्षिरिति अवगच्छामः ॥

इदन्तावत् स्थूलदृष्टिवेद्यं, सूक्ष्मेक्षिकाश्रीयतामिति प्रवर्तते ।

एवन्तर्हीदमेवं गृह्यतां, यतः पश्चात् आरभ्यते । ननु—

तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥

(अनुवर्तते)

# श्रीरामस्तवतारावलीभूमिका

पारं भवाख्यजलधेर्भुवनैकसारं
स्वैरं कृतोरुविधवेदपथप्रचारम् ।
आरञ्जितामरजनं सुखचिच्छरीरं
धीरं स्मरामि हृदि सत्यवतीकुमारम् ॥

प्रबन्धस्यैतस्य प्रबन्धारो निखिलवेदोद्धरणचणहयवदनमनुमनन-समेधितविशालधिषणाः महामहोपाध्याय-पण्डितशिरोमणिप्रमुखोपाधि-प्रवेकधारिणः सुगृहीतनामधेयाः काशी तिम्मण्णाचार्या अनन्तपुरजिल्ला-न्तर्गतपेनुकोण्डपुटभेदने नभोनगाङ्कभू (१६७०) मिते शालीवाहनशके प्रभवेऽब्दे आश्विने मासि सितगरुति दशम्यां विष्णुभे ललाटन्तपे भगवति मयूखमलिनि निखिलनिगमागमपारदृश्वनः रामचन्द्रनाम्नो बुधाग्रण्याः सहधर्मिण्यां जानकीनाम्न्यामेते प्रादुःषन्ति स्म । ततो विधिहतकेन तनीयस्येव वयसि दिवमारोपिते स्वपितर्यासप्तदशवत्सरेभ्यो मूढनिर्वि शेषमवर्तिषत । तदनु महामहोपाध्यायेत्याद्यनेकाबिरुदालङ्कृतकृष्णंभट्टान्ते-वासिनां विट्ठलेशोपाध्यायसतीर्थ्यानामात्मपितृव्यानां वाराणसीवास्त-व्यानां रमणाचार्याणामधिसंनिधि जनन्या नीतास्तत्र विंशतिवर्षाणि यावदधिजग्मुरामूलं सकलामपि न्यायशास्त्रपद्याम् । ततः कदाचित्पुण्य-पत्तने प्रचलितायां विद्वन्महासभायां रमणाचार्यैः स्वप्रातिनिध्येन प्रेषिताः कृष्णंभट्टानपि स्वप्रातिभाबलेन प्रतोष्य तेभ्यो राङ्कववस्त्रयुगलं ऊर्णवसन-मप्येकमलभन्त । अथ काशीतो नदीस्वर्णपुरी (होळेहोन्नूरु) मधिजग्मुषामुत्तरादिमठाधीशानां सर्वतन्त्रस्वतन्त्रेत्याद्यनेकगुणमणिभूषि-तानां श्री. श्री. सत्यधर्मतीर्थवरेण्यानामनुग्रहेण सर्वामध्यात्मविद्यां

द्वादशभिर्वत्सरैः परिजगृहुः । ततो गुरुवरप्रसादलब्धां सीताराममूर्तिं पूजयन्तो जैत्रयात्रायै प्रस्थिता नवद्वीपे (नदीया) सर्वानपि विदुषोऽवधूय गादाधरीनिबन्धाननेकधा खण्डयाञ्चक्रुः । एवं सर्वजगद्विसृमरप्रभावाः महीशूरराजधान्यां सम्मानिताः राजाधिराजश्रीमन्मुम्मडिकृष्णराजसार्वभौमसभायामपि सर्वमान्यान् अनेकान् ग्रन्थान्व्यभिषत । ततो वाराणसेयगणेशशास्त्रिसमधिगतन्यायशास्त्राः रजतपीठ (उडिपि) पुरवासिनः श्रीकृष्णापुरमठाधीशाः सकलकर्मन्दिवृन्दवन्दितपदारविन्दद्वन्द्वाः सर्वतन्त्रस्वतन्त्रत्वादिविशेषणविलासिनः श्री. श्री. १०८ विद्याधीशसंयमीन्द्राः द्वादशवत्सरपर्यन्तमेभ्यो वेदान्तमवायन् । ततो नभोङ्गनगभू (१७६०) मिते दुर्मुखवत्सरे जन्मदिने दिवः परममूर्ध्वसीमानं मिमाने सहस्रघृणौ श्रीमन्तं सीताराममाराध्येमं स्तवं भक्तिपरवशेन मनसा समुदीरयन्तो भगवच्चरणशरणमयासिषुः । एतेषां वंशे वैदुष्यं अद्यापि नो खिलीभवतीति मोदामो वयं निवेदितुम् ॥

इति सहृदयदासः,

**विद्वान् लक्ष्मीनारायणोपाध्यायः.**

# अथ श्रीरामस्तवतारावली



नमस्तुभ्यं देव! प्रणतजनकारुण्यजलधे
विधेहि स्वीये मय्यविदुषि दयालेशमनिशम् ।
क्षमस्व स्वामिन्मे सकलमपराधं रघुपते
न सन्त्याज्यो राज्ये पितृभिरपराध्यन्नपि शिशुः ॥ १ ॥

पिता मे माता मे गुरुरपि च मे बन्धुरपि मे
सखा मे स्वामी मे सकलमपि मे त्वं रघुपते! ।
त्वदन्यं नो जाने तव चरण[1]पाथोजशपथ-
स्त्वमन्तस्साक्षी सन्नखिलमपि जानासि भगवन् ॥ २ ॥

भवन्तं गायन्ति, स्फुटमकुटिलार्थोपनिषदो
जगत्सर्वं व्याप्य स्थितमनिशमन्तर्बहिरपि ।
अपि स्थूलः स्थूलेष्वणुरणुषु भूत्वा विहरत-
स्तव ध्यातुं को वा जगति महिमानं प्रभवति ॥ ३ ॥

कु[2]तस्त्वं का[3]दृक् त्वं कत[4]म इति वा नाध्यवसितं
[2]कुतः की[3]दृक्को[4]ऽहं तदपि न मया साधु विदितम् ।

---

हयास्यास्याङ्गणलसल्लास्यनिर्माणपाण्डिता ।
रमणी द्रुहिणस्याद्य ननर्तु मम मानसे ॥

[1] चरणौ पाथोजे इव चरणपाथोजे, तयोः शपथं यस्य सः । पाथोजे कमले ॥ २ ॥ [2] कस्मादागतः. [3] कीदृशमहिमा. [4] किंस्वरूपः.

तथाऽपि त्वां चेतः कलयितुमलं नाथ यतते
विचित्रा ते शक्तिस्स्वयमविष[1]यः कर्षसि मनः ॥ ४ ॥

दुरूहो यस्तर्कैर्दृढमविषयो वाङ्मनसयो
र्गुणस्ते सर्वेषां हरति हृदयं चञ्चलमपि ।
यया शक्त्या यच्च श्रयति वपुरेत[2]त्तदुभ[3]यं
स[4] वा सा[5] वा तद्वा[6] सकलभुवनश्लाघनपदम् ॥ ५ ॥

समर्थो [7]यत्रासौ नियत[8]विषयो नेन्द्रियगणो
यथा[9]कामा यस्मात्प्रकरणसमा[10] नूनमनुमा ।
अथाऽऽम्नायः स्वव्याहत[11]वचनभावेन विषमो
गुणस्तोमो न स्यादमितगुण शक्योऽध्यवसितुम् ॥ ६ ॥

यदा[12]म्नाया नित्यं निजगदुरणीयांसमणुतो
महीयांसं च त्वां परममहतोऽनन्य[13]विषयाः ।
अन[14]श्नन्तं च त्वामखिलजगदत्ता[15]रमदितिं
जनः को जानीयाज्जगति हृदयं वेदवचसाम् ॥ ७ ॥

---

[1] अविषय इत्यतः प्राक् मनस इति शेष· ॥ ४ ॥ [2] एतत् हृदयं. [3] तदुभयं वाङ्मनसे. [4] गुणः. [5] शक्तिः. [6] वपुः ॥ ५ ॥ [7] गुणस्तोमे. [8] रूपादिकॢप्तविषयबोधकः. [9] इच्छानुसारिणी. [10] साध्याभावसाधकहेत्वंतररूपः सत्प्रतिपक्षः प्रकरणसाम्यं, तेन युता. [11] "अणोरणीयान् महतो महीयान्" इत्यादिना वेदे स्वोक्तिविरोधस्य ब्रह्ममीमांसासहायं विना दुष्परिहरत्वादितिभावः ॥ ६ ॥ [12] आम्नायवैषम्यमेवेदानीं प्रकटीकरोति । यदाम्नाया इति. [13] नन्वनयोः श्रुत्योर्विभिन्नविषयतया कथं विरोध इत्याशङ्क्याहुः अनन्यविषया इति "सर्वे वेदा यत्पदमामनन्ति" इत्यादिना वेदसामान्यस्य विष्ण्वेकपरतायाः सिद्धत्वादिति भावः. [14] अनश्नन्तामिति "अनश्नन्नन्यः" इति श्रुतिः. [15] "जगदिति" अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते, इति श्रुतिः. ॥ ७ ॥

अपि द्रष्टव्यं[1] त्वामभिदधति चाद्रे[2]श्यमिति वा
अपि श्रोतव्यं त्वां श्रवणवचना[3]नामविषयम् ।
अपीमे दुर्ज्ञेया नियतममिता नाथ निगमा
निरस्ता दूरे तद्गहनतरतत्त्वार्थकलना ॥ ८ ॥

प्रमाणैरक्षा[4]द्यैस्त्रिभिरपि न ते जातु भगवन्
जनोऽप्यन्तर्वा[5]णिः प्रभवति गुणानध्यवसितुम् ।
अक[6]ल्पः केनाऽहं जगति जडकल्पः प्रभविता-
स्म्यतस्ते चारुश्रीचरणकरुणैवेह शरणम् ॥ ९ ॥

भवा[7]नेव स्वामिन्ननघ वृणुते यं करुणया
परं तेनैव त्वं गुणनिलय लभ्यस्सुकृतिना ।
स[8] एव द्रष्टा ते तनुमतनुचित्सत्सुखमयीं
ततः[9] कः संसारः क्व च परिभवानामवसरः ॥ १० ॥

प्रगाढं भिद्यन्ते प्रचुरहृदयग्रन्थितिमिरा-
ण्यथापि च्छिद्यन्तेऽखिलविषयरागाः खलु दृढाः ।
क्षणेन क्षीयन्ते कृतविषमदोषाश्च भवति
स्वबि[10]म्बे संदृष्टे शशितरणि[11]दृष्टे भगवति ॥ ११ ॥

---

1 "अपीति" आत्मावा अरे द्रष्टव्य· श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इति श्रुति·. 2 अद्रेश्यमिति यत्तदद्रेश्यमग्राह्यमिति श्रुतिः. 3 श्रवणेति यच्छोत्रेण न श्रुणोति, यद्वाचानभ्युदितं, इति च श्रुती ॥ ८ ॥ 4 अक्षाद्यैः प्रत्यक्षानुमानागमैः 5 अन्तर्वाणिः—विद्वान्. 6 अकल्पः—असमर्थ ॥ ९ ॥ 7 यमेवैष वृणुते तेन लभ्यः इति श्रुतिः. 8 सः सुकृती. 9 तत· त्वद्दर्शनानन्तरं ॥ १० ॥ 10 स्वबिम्बे जीव-बिम्बरूपे त्वयि. 11 दृष्टं दृष्टिः नेत्रमिति यावत् ॥ ११ ॥

अतस्ते नो यावद्भवति करुणा काऽपि भगव-
न्न तावद्रूपं ते वपुषि परिपश्यन्ति कवयः ।
न यावत्पश्यन्ति श्रवणमननध्याननिपुणा
न तावद्ब[1]न्धोऽयं प्रणतजनब[2]न्धो ! विगलति ॥ १२ ॥

अथाम्ना[3]तं यद्यत्तव खलु दयासाधनतया
विरक्तिर्भक्तिश्चेत्यखिलमविनाभावि दयया ।
इति द्रागन्योन्याश्रयिणि करुणासाधनधने
न जाने श्रीजाने कृतिषु कुरुषे केन करुणाम् ॥ १३ ॥

स्वभा[4]वात्संसक्तो विषयसमुदायेषु च दृढं
विमूढोऽयं लोकः कथमिह विरज्येत सहसा ।
असान्निध्यं यावद्भवति विषयाणां तनुभृतो
विरागो वा तावत्तदनु विवशोऽयं ननु जनः ॥ १४ ॥

बलादेके कर्षन्त्यपि निपुणमापातमधुराः
वयःकान्ताकालद्रविणगुणकर्मप्रभृतयः ।
तदा[5]यत्तं चित्तं भृशमिह यदा[6]यत्तमखिलं
पराधीनो जन्तुः किमपि न विधातुं प्रभवति ॥ १५ ॥

---

[1]बन्धः संसारः. [2]प्रणतजनबन्धो संबोधनमेतत्. [3]अथेति भगवद्दया-मन्तरा भक्तिवैराग्यशमदमादिकं नोत्पद्यते, दया च भक्त्याद्यधीनेत्यन्योन्याश्रयेण भक्त्यादिषु दयासाधनेष्वेकस्याप्यसिद्धौ कृतिषु त्वद्दया कथं घटतामिति भावः ॥ १३ ॥ [4]निसर्गादेव विषयासक्तस्याज्ञानिनस्तत्र विरक्तिर्नस्यादित्यत्रार्थान्तरं न्यस्यन्ति । असान्निध्यमिति । विषयासंनिधावभाववैराग्यं सर्वेषामपि कथञ्चित्स्यात् । तत्संनिधौ तु सर्वोऽपि विषयपराधीन इति भाव । तदनु विषयसांनिध्यदशायाम् ॥ १४ ॥ [5]तदायत्तं वयःकान्ताद्यधीनं. [6]यदायत्तं चित्तपराधीनं ॥ १५ ॥

बतैवं संसारे विकलसकलोपायकतया
प्रमृष्टे विज्ञाने प्रचरति च मोहान्धतमसे ।
दधाने वैमुख्यं त्वयि पुनरकस्मादिव विभो!
जनोऽयं दीनः कं व्रजतु जगतीनाथ! शरणम् ॥ १६ ॥

[1]यमुग्रं ब्रह्माणं यमृषिमपि कर्तुं स्पृहयते
तमुग्रं ब्रह्माणं तमृषिमपि या नाम कुरुते ।
स्वयं यस्तादृश्याऽप्युदधि निजयोनिर्निजगदे
स च त्वं सा चेयं रघुतिलक यस्याः पतिरसि ॥ १७ ॥

युवामेवंभूताद्भुतभुवननिर्माणनिपुणौ
शरण्यौ भूतानामनिशमनियद्भूतमहिमौ ।
मनागप्यन्यः कस्तनुभृदतिवर्तेत मनसाऽ-
प्यचिन्त्या यच्छक्तिर्नियमयति नित्यं विधिमपि ॥ १८ ॥

यदी[2]हा सर्गोऽयं भवति यदुपेक्षैव विलयो
यदन्वीक्षा[3] मोक्षो यदव[4]मतिरेवान्धतमसम् ।
यदादौ यन्मध्ये विलसति यदन्ते च जगतां
तदेव त्वं देवोत्तम! किमपि तत्त्वं परमसि ॥ १९ ॥

[5] विजिज्ञास्यश्च त्वं विजितविषयैः सद्गुणतया
गुणानां सर्वेषां त्वमसि शरणं शास्त्रविदितम् ।

---

[1] स॰, सा, इत्यनयोरुत्तरश्लोकस्थेन युवां, इत्यनेन सम्बन्ध., "यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधां" इति । "अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वान्त. समुद्रे" इति च श्रुती ॥ १७ ॥ [2] ईहा इच्छा, अत्र निमित्तनैमित्तिकयोरभेदोपचारेण ईहानिमित्त. सर्ग इत्यर्थे ईहा सर्ग इति प्रयोग. । एवमग्रेप्यनुसंधेयं । [3] अन्वीक्षा मननं. [4] अवमति॰ द्वेषः ॥ १९ ॥ [5] समग्रशास्त्रार्थं सङ्क्षिपव

त्वमेवाम्नायानां हृदयमभिधेयं च परमं
त्वमेवानन्दात्मा नियमयसि यच्चेष्टयसि च ॥ २० ॥

त्वमन्तस्त्वं प्राणस्त्वमखिलमतस्त्वं निखिल-
भुक् त्वमग्निस्त्वं द्युभ्वाद्ययनमथ भूमाक्षरमपि ।
त्वमव्यक्तं ज्योतिः प्रकृतिरसदादिस्त्वयि परे
विमुह्यन्त्यन्ये त्वां त्वयि कृतधियो यान्ति तव ये ॥ २१ ॥

[1]प्रसूते यद्वस्तु स्वत इव यतो यस्य च यदा
यथा यस्मिन् यस्मै यदिव यदिदं येन नियतम् ।
समासव्यासाभ्यां समविषमभाजां प्रकृतिभि-
र्नियन्ता सर्वेषां त्वमसि खलु तेषामविषमः ॥ २२ ॥

---

आदौ अध्यायपादपीठार्थं संगृह्णन्ति "विजिज्ञास्यश्चे" ति अध्यायशेषार्थं संक्षेपतोऽनुवदन्तः प्रथमतः समन्वयाध्यायार्थं वदन्ति "त्वमेवे" त्यादिना ॥ २० ॥ अविरोधाध्यायार्थं सूचयन्ति "त्वयि परे" इति. साधनाध्यायार्थं संगृह्णन्ति "कृतधिय" इति फलाध्यायार्थं ब्रुवंत "त्वां" इति प्रतीति शेषः ॥ २१ ॥

[1] यद्वस्तु कार्यात्मकं घटादिकं । स्वत इवेत्यनेन जनकत्वं हर्यधीनमिति सूचितं । यतो यस्मात् कारणात्मकात् मूलप्रकृत्यादेः । यस्य यद्वस्तुसम्बन्धात् । यदा यस्मिन् काले । यथा येन प्रकारेण । यस्मिन् यमाश्रित्य यस्मै यमुद्दिश्य । यदिव यं दृष्टान्तीकृत्य । यदिदं सर्वं जगत् । येन राजादिना । नियतं तत्तत्कार्यजाते नियमितं । समविषमभाजां सत्वरजस्तमोरूपगुणानां साम्यावस्थावैषम्यावस्थाभ्यां युतानां सर्वेषां । प्रकृतिभिः तत्तद्वस्तूचितस्वभावैः । समासव्यासाभ्यां संक्षेपविस्तराभ्यां नियन्ता नियामकः । अतस्त्वं तेषां सर्वेषां कार्यकारण, सम्बन्ध, काल, प्रकार, आश्रय, उद्देश्य, दृष्टान्त, नियामकरूपिणां जगतां अविषमोऽसि वैषम्यनैर्घृण्यमन्तरा नियामकः खलु । सर्वत्रैकप्रकारेण तत्तद्योग्यतानुसारेण नियामकतया भवान् सर्वसम इति हृदयम् ॥ २२ ॥

अथैता[1]वानस्य स्फुरति महिमा ते गुणगणै-
रतोऽपि ज्यायांस्त्वं पुरुष न हि शक्यः कलयितुम् ।
परं रामेत्युच्चैर्नम इति च वागेव शरण
क्व चाऽहं मन्दात्मा क्व च पुनरपारास्तव गुणाः ॥ २३ ॥

गणयितुमसौ दोषोद्रेको ममेह न शक्यते
लघुरपि गुणः कश्चिन्मृग्यो न चैव मयि प्रभो !
स्वयमव दयासिन्धो ! बन्धो ! भवाब्धिषु सीदतां
वरद शरणं भूयो भूयस्त्वमेव न मे परः ॥ २४ ॥

मोहावर्तभयानके परधनासत्कामिनीकर्दमे
लोभक्रोधतिमिङ्गिले च विविधक्लेशोर्मिमालाकुले ।
दुर्वारेन्द्रियतीव्रवेगविषमे संसारपाथोनिधौ
सीदन्तं करुणानिधे ! रघुपते ! मामुद्धरैकाकिनम् ॥ २५ ॥

सोऽहं नूनं यदपि विमुखस्त्वत्सपर्यानुषङ्गा-
त्कामं कामैरहह निभृतोऽप्यंहसां संहतेश्च ।
त्वं तु स्वामिन्सहजसरलो वत्सलश्चित्सुखात्मा
लक्ष्मीनाथस्त्रिजगदविता मय्युपेक्षा कुतस्ते ॥ २६ ॥

दोषानेव वितर्कयद्भिरखिलैः स्नेहाद् दृढं वारितोऽ-
प्याबद्धाञ्जलये तवाहमिति सम्प्राप्ताय सद्यः प्रभुः ।
यः शत्रोरपि सोदराय विपुलं लङ्काधिपत्यं ददौ
तस्मिन्नेव मनो ममास्तु करुणास्निग्धप्रसन्नेक्षणे ॥ २७ ॥

[1] अथेति ॥ "एतावानस्य महिमा अतो ज्यायांश्च पूरुषः" इति श्रुति ॥ २३ ॥

कल्याणानां किमपि सदनं भाजनं सद्गुणानां
सूत्यागारं सकलतपसां लाभमाश्चर्यसिन्धुम् ।
प्राणं देव्याः प्रचुरकरुणामूर्तिमोजश्शरीरं
सर्वस्वं मे किमपि भुवनक्षेमधाम प्रपद्ये ॥ २८ ॥

वाचादक्षेण हि श्रीमच्छर्मणेयं समर्पिता ।
स्तवतारावली रामचन्द्रे दिशतु मङ्गलम् ॥ २९ ॥

तत्क्षम्यतामविदुषो मम यद्दुरुक्तं
भूयः प्रसीद पुरुषोत्तम! तावकोऽहम् ।
लोके व्यवस्यति जनस्सकलोऽपि वक्तुं
कस्तत्र वेद तव रूपनिरूपणानि ॥ ३० ॥

सर्वस्य नित्यानित्यस्य विविधस्य च कर्मणः ।
आदावन्ते च यो भाति स देवः स गुरुर्मम ॥ ३१ ॥

इति श्रीमच्छर्मोपाध्याय काशी तिम्मण्णाचार्य विरचिता
श्रीरामस्तवतारावली समाप्ता ॥
॥ श्रीकृष्णार्पणमस्तु ॥

---

सर्वस्येति ॥ नित्यस्याकाशादेः अनित्यस्य घटादेश्च सर्वस्य जगत विविधस्य नित्यनैमित्तिककाम्यभेदेन त्रिविधस्य कर्मणः आदौ कारयितृत्वेन अन्ते फलदातृत्वेन च यो भाति स देवः क्रीडादिगुणविशिष्टो भगवान् इष्टदेवता स एव मम गुरुः गुर्वन्तरवस्थित्या तत्त्वोपदेशकः ॥ ३१ ॥

नानार्थरचनारम्या रम्यकान्तिरदूषणा ।
स्तवतारावली भाति रामतारापतिप्रिया ॥
लक्ष्मीनारायणेनेयं ज्योतिर्विज्ञानवेदिना ।
स्तवतारावली रम्या प्रभयोल्लासिता मुहुः ॥

॥ श्रीः ॥

# अखिलभारतीयप्राच्यविद्याविपश्चित्सम्मेलने पण्डितपरिषच्छाखास्वागतसङ्घाध्यक्षभाषणम्



अयि महाशयाः अवगतसकलकलापाः अशेषजनसम्भावनीयाः अभिजनविद्यासमुचिताः सदाचारशीलशालिनः महाभागाः पण्डितप्रवराः,

अस्माकं महाप्रभोः श्रीमन्महाराजस्य श्रीकृष्णराजवर्यस्य महोदाराश्रयावलम्बनेन निरतिशयप्रोत्साहनेन च अद्य अस्मिन्प्रदेशे समवेतां अखिलभारतीयप्राच्यविद्याविपश्चित्सम्मेलनसम्बन्धिपण्डितपरिषदं प्रति समाहूतानां तत्रभवतां स्वागतसंस्थाभ्यर्थनामङ्गीकृत्य शारीरपरिश्रमादिकं बहुदूरदेशागमननिबन्धनं च अपरिगणय्य अत्र सन्निहितवतां महतां भवतां सुखस्वागतं प्रशंसितुं स्वागतसङ्घप्रतिनिधिभूतोऽयं जनः समुद्वहतिनिरतिशयममन्दमानन्दम् ॥

तथैवास्य स्वागतसङ्घस्य प्रार्थनामतीवादरेण पुरस्कृत्य पण्डितपरिषत्सङ्घं शाखाध्यक्षपदवीं अलङ्कर्तुं सफलीकर्तुं च सङ्घसमुद्देशविशेषान् स्वीकृतसन्निधानानां तत्रभवतां मद्रास् प्रेसिडेन्सि कालेज् संस्कृतप्रधानोपाध्यायपदमधिष्ठितवतां महामहोपाध्यायविद्यावाचस्पतिप्रभृतिविविधबिरुदावलीविभूषितानां विपश्चिदपश्चिमानां एस्. कुप्पुस्वामिशास्त्रिवर्याणां सान्निध्याभिनन्दनं च समावेदयितुं सर्वेषां भवतां प्रातिनिध्येनापि एषोऽस्मि स्वीकृतक्षणः सम्प्राप्तनिरतिशयप्रमोदः ॥

सैषा खल्वखिलभारतीयप्राच्यविद्याविपश्चित्समितिः समवैतिस्म एकोनविंशत्युत्तरैकोनविंशतिशततमे(१९१९)वत्सरे पुण्यपत्तने अन्वर्थनाम्नि महाराष्ट्रनगरे । ततः तादृश्यः एव समितयः तत्र तत्र प्रसिद्धेषु नगरेषु संभूय समतीताः षट्संख्याकाः । अष्टमीमिमां समितिं धर्ममूर्तेरास्तिकमहाशयस्य राजर्षेरस्मत्प्रभुवर्यस्य सांवीक्षिकसन्निधानेन प्रख्याततमे विविधवैचित्र्यसमलङ्कृते विद्यावीचिसहस्रसम्भ्रममिलद्दुग्धार्णवाडम्बरे महीशूरनगरे प्रवर्तयितुं कृतः यत्न. अस्माकं परमः सौभाग्योदयः तत्रापि आदधाति पण्डितपरिषच्छाखानिर्माणं अतिशयितं सन्तोषमस्माकम् ॥

उद्देशविशेषाः.

१. तत्र प्रथमम् अस्मिन् भरतखण्डे विविधविद्याप्रवीणानां पण्डितानां परस्परसल्लापसौहार्द्रसम्भावनेन परिचयसौजन्यसम्पादनम्.

२. प्राच्यविद्वत्प्रमुखानां परस्परसाहाय्यकरणेन सर्वविद्याभिवर्धनप्रोत्साहनम्.

३. स्वस्वविद्यासंसेवनेन परिनिष्पन्नानां अपूर्वाणां अभिप्रायाणां परस्परसमावेदनेन मनोवैशद्यसम्पादनम्.

४. प्राच्यविद्याप्रचारप्रतिबन्धकानामपनोदनाय समुचितानामुपायानामन्वेषणम्.

५. प्राच्यविद्याधुरीणेषु प्रकाशमानानां भौतिकार्थिकसामाजिकदार्शनिकदृष्टीनां परस्परसौजन्यसम्पादनम्.

६. द्वीपान्तरीयविद्याभ्यासेषु परिदृश्यमानानां गुणांशानां परिग्रहेण सकलविद्याभ्यासक्रमसौलभ्यसम्पादनम्.

७. पण्डितानां प्रबन्धप्रणेतॄणामुत्साहजननेन शान्तिप्रधान-प्रबन्धाभिवर्धनम्.

महात्मानो भवन्तः अत्रागत्य अस्मदीयां अल्पामपि सपर्यां बहुधा बहुमान्य निसर्गसौहार्दप्रसादेन अनुगृह्णन्ति इति भृशमभिनन्दामि । एतदर्थं भवतां मुहुर्मुहुः धन्यवादानाकलय्य पुनरपि प्रार्थये महाशयान् श्रीमतः शास्त्रिवर्यान् अध्यक्षपदालङ्करणेन कर्तव्यकार्य-कलापपरिचिन्तनेन इमामनतिसुलभां सभां प्रचलयितुम् ॥

अये मान्याः सभ्याः दिशि दिशि लसत्कीर्तिसुभगाः
यदस्मासु प्रीत्या समुपगतवन्तः सद इदम् ।
तदत्यन्तं प्राप्ता वयमिह परानन्दलहरीं
कृतज्ञाः संवृत्ताः पुनरपि कृतज्ञाः पुनरपि ॥

इति शुभम् ॥

——

## अध्यक्षमहाशयानां महामहोपाध्याय–विद्यावाचस्पत्यादिविरुदालङ्कृतानां ब्र. श्री. एस्. कुप्पुस्वामिशास्त्रिवर्याणां उपक्रमभाषणम्.



अयि मान्या अखिलभारतीयप्राच्यविद्यासभापतयः, मान्याः सोदर्याः, महामान्यमहाराजबहुमानितवैपश्चितीका विपश्चितः,

अस्मिन्नष्टमेऽखिलभारतीयप्राच्यविद्यासम्मेळने संस्कृतशाखाध्यक्ष्यं मयाङ्गीकर्तव्यमिति यदाज्ञापितमध्यक्षैस्तच्छिरसि निधीयते मयेदानीम् अस्मिन्प्राच्यविद्यासम्मेळने विशेषतः संस्कृतशाखायां यदाध्यक्ष्यं मयि स्थापितं तन्महत्सुकृतफलमिति भावयामि । अयन्तु समयः, एवं संस्कृतभाषासेवां कर्तुं सुकृतवशात् संपन्नः इति यथाशक्ति तत्सेवां कर्तुं प्रयते ॥

यत्पूर्वतनसंस्कृतशाखाध्यक्षैर्मयि महत्त्वं प्रकटितं तदर्थयाद्दरीत्या प्रस्तुतामिति वक्तुमुत्सहे । किञ्च यद्यपि तादृशं महत्त्वं मयि नास्त्येव । तथापि—

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम् ।
किं नाभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥

इत्युक्त्यनुरोधेन यथारुणोऽन्धकारनिष्कासने स्वयमशक्तोऽपि भगवत उष्णरश्मेरनुग्रहाद्गाढान्धकारमपि निर्मूलयितुं शक्तो भवति तथैवाहमपि अत्रभवतां विद्वद्वराणां प्रोत्साहनेन यथाशक्ति संस्कृतभाषासेवां कर्तुं प्रभवेयमिति सुदृढं विश्वसिमि ॥

संस्कृतभाषाया महिमा न केनापि वर्णयितुं शक्यते । महामान्यामनितरसाधारणप्रभाववतीं संस्कृतभाषां तदभिज्ञान् पण्डितवरांश्च सभाजयितुं प्रवृत्ता अत्रत्याः—

नैवात्मनः प्रभुरयं निजलाभपूर्णो
मानं जनादविदुषः करुणो वृणीते ।
यद्यज्जनो भगवते विदधीत मानं
तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥

इति प्रह्लादकृतस्तोत्राभिप्रायेण आत्मानमेव मानयिष्यन्तीति सप्रमोदं वदामि ॥

कस्मिंश्चिद्वत्सरे इदमखिलभारतीयप्राच्यविद्यासम्मेळनं प्रयागक्षेत्रे प्रचलितमभूत् । अहमपि तत्रासम्; वाराणसीविद्वांसश्चासन् । एकस्मिन्दिने सन्ध्याकाले तत्रत्यैः कैश्चित् पण्डितैर्मां दृष्ट्वा साकूतमेवमुपक्षिप्तम् "अखिलभारतीयप्राच्यविद्यासम्मेळनस्यास्य कस्मिंश्चित् कोणे पण्डितशाखेति काचन शाखा स्थापितो दृश्यते । किमितराः शाखा अपण्डितानाम्? इयमेकैव शाखा पण्डितानामिति व्यञ्जनतया बोधयितुमियं रीतिः समाद्रियत? वयं निरुष्णीषा अतो वयमेव पण्डिताः किम्? अन्ये च सोष्णीषकञ्चुका अपण्डिताः किम्? किमर्थमयं विभागः? 'समबुद्धिर्विशिष्यते' इति हि खलु भगवदुद्घोषः, एवं स्थिते किमर्थमयं विभागः?" इति । तस्योपक्षेपस्योत्तरदाने प्रवृत्तोऽहं विमर्शकशाखेति काचन शाखा, पण्डितशाखेति काचन शाखेति एवं प्रकारेण बहुधा शाखा वर्तन्ते" इत्यादिकं प्रवक्तुं यदोद्युक्तोऽभूवम् तदा कश्चन तार्किकः "किं नाम पाण्डित्यं? किं नाम विमर्शकत्वम्" इत्येवं अन्वयुङ्क्त । तदानीं मयोक्तम्—

यद्यपि सर्वदेशकालानुगुण्येन पाण्डित्यस्य लक्षणं प्रतिपादयितुमसाध्यमेव तथापि पण्डितप्रकाण्डैः पाण्डित्यस्य लक्षणं यथा प्रतिपादितं तथा वर्णयितुं शक्यत एव । कालविशेषेण वा देशविशेषेण वा विपर्यासं अलब्ध्वा व्याजान्तरमवलम्ब्य परमार्थज्ञानमात्रमवलम्ब्य पण्डितैः पाण्डित्यस्य स्वरूपमावेद्यत । जातिकुलवयोधनादिकमनपेक्ष्यैव परमार्थज्ञानमात्रेण सर्वे पण्डिताः पाण्डित्यधना अभवन् । भागवतैरपि "न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः" इत्यादिना जात्यादिकमवलम्ब्य भगवद्भक्ता विप्राः इति स्वसम्प्रदायः प्रतिपाद्यते । ते च पण्डितवीराः वैराग्यप्रधानाः प्रज्ञाधना धीराश्चाभवन् । पाणिनि–पतञ्जलि–व्यास-कालिदासप्रभृतिभिः पण्डितवर्यैः ये विषया उल्लिखितास्तानेव विषयान्विमर्शकाः अपीदानीमवलम्ब्य विचारार्थं प्रवर्तन्ते । तेषां पण्डितवर्याणां ज्ञानमेव बलमभूत् । नैव तेषां गृहारामादिकं वा रत्नकनकादिकं वा पुत्रमित्रादिकं वा धनमभूत् ॥

अध्यात्मज्ञानधनाः प्रायेण तदात्वे पण्डिताः—

'किं न तेन कृतं पापं चोरेणात्मापहारिणा ।
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥"

इति वदता भगवता व्यासमहर्षिणाध्यात्मज्ञानाऽभाववतः निर्धनत्वं ज्ञानिनस्त्वर्थात् धन्यत्वं च प्रत्यपादि । तथा च परमार्थज्ञानमेव निरुपचरितपाण्डित्यस्य लक्षणमिति सिद्धम् । ब्रह्मचर्यं नैरपेक्ष्यं धैर्यं ज्ञानैकशरणतेत्यादयो येन पुरुषधौरेयेणावलम्ब्यन्ते स एव श्रेयोभागी पण्डितमान्यो नान्य इति सिद्धम् ॥

कस्मिंश्चित्समये कविसार्वभौमो राज्ञा केनचिद्दौत्ये नियोजितः अन्यस्य राज्ञः सकाशं जगाम । तदानीं स कविसार्वभौमो महाराजेन न यथार्हं सभाजितः । तदा राजसभायां महान्कोलाहलः समजनि ।

विद्वद्भिः प्रतिबोधितो महाराजः स्वन्यूनतां ज्ञात्वा कविसार्वभौमाय कालदेशानुगुणं यथोचितमासनं दातुं प्रावर्तत । तदानीं स कविसार्वभौमो महाराजसत्कारमप्यविगणय्य पण्डितानां धरणिरेव योग्यमासनमित्युक्त्वा भूमितले एवोपविवेशेति ज्ञायते । अत्रेदं काळिदासस्य पद्यमनुसन्धानपदवीमध्यास्ते—

इह निवसति मेरुः शेखरः क्ष्माधराणां
इह विनिहितभाराः सागराः सप्त चान्ये ।
इदमहिपतिभोगस्तम्भविभ्राजमानं
धरणितलमिहैव स्थानमस्मद्विधानाम् ॥

एवमेव विजयनगराधिपतेः प्रधानामात्यैर्विद्यारण्यैस्तत्रागमनार्थं प्रार्थिता वेदान्तदेशिकाचार्याः अपि अनितरसाधारणं धैर्यमवलम्ब्य शास्त्रार्थोपदेश एव यत्र कुत्रापि स्थित्वा कर्तव्य इति ज्ञात्वा वयमत्रैव स्थित्वा भगवन्तमेव सेवितुं निश्चिनुमह इति अवदन्निति श्रुणुमः । अस्मद्दौर्भाग्यवशादिदानीं तादृशा धीरा विरक्ता ज्ञानिनः पण्डितप्रवरा विरलाः ॥

इदानीं पण्डितशब्दस्तदर्थश्चाकुलीकृतौ दृश्येते । आन्तं तान्तीकृत्य पण्डितशब्दं 'पण्डिट्' इति विकृत्य प्रयुञ्जते जनाः । अर्थोऽप्यस्य शब्दस्य बहुधा ह्रस्वीकृत्य व्यवह्रियते । न केवलं अस्मत्संस्कृतपण्डितानामेवेदृशं लघुत्वं दृश्यते किन्त्वाक्र्यालजीत्यादिविषये पण्डितानामप्येवमेव लघुता विभाव्यते । वस्तुतस्त्विदानीमपि बहुश्रुता गुणज्ञा यशस्विनो ज्ञानिनः पण्डिताः वर्तन्त एवेत्यत्र न कोऽपि सन्देहः ॥

विमर्शकत्वं कीदृशमित्यस्योत्तरं देयमिदानीम् । 'स्वसमानाधिकरणसंस्कृताद्यनिष्णातकत्वम्' तदिति केषाञ्चिदभिप्रायः । नैतत्

समीचीनम् । बहवो विमर्शका विषयान्विचार्य सम्यक् शोधयित्वा वस्तुस्वरूपपरिज्ञानाय प्रयतन्ते । विमर्शका नोद्धताः । निर्णीतान्विषयान् सर्वानप्यन्येभ्यः प्रकाशयन्ति । शब्दमर्थञ्च सम्यक् विचार्य निर्णयं कुर्वते । प्रपञ्चस्य स्वरूपं तत्त्वं च विचार्य निर्णेतुं प्रवर्तन्ते ॥

इयं विचारपद्धतिरस्मत्पूर्वजैरप्यादृताऽऽसीत् । प्रमाणप्रमेयादिव्यवस्थाविषये विचारः कर्तव्यः । तत्र संशयो मूलमिति भगवताक्षपादेन संशयस्य स्वरूपमुपयोगविशेषश्च प्रादर्शि । पाश्चात्यो डेकार्ट् महाशयश्च सर्वत्र संशयः कर्तव्यः, यद्यपि स संशयोऽधिष्ठानावशेषो भवतीत्यभ्यधत्त ॥

एतावता विचारेण विमर्शनस्य कर्तव्यत्वं प्राप्नोति । तच्च विमर्शनं संशयमात्रपर्यवसितं निष्फलं भवति । निर्णयपर्यवसायि च तत् सप्रयोजनं भवति । व्यायामेन शरीरदार्ढ्यं यथा संपाद्यते तथा विमर्शनेन मानसं दार्ढ्यं संपादयितुं शक्यते । तस्माद्विमर्शनाख्यसंस्कारसंस्कृतं मनः परमार्थवस्तुस्वरूपपरिज्ञाने समर्थं भवति । तच्च विमर्शनं पांडित्ये सर्वथा समायतते, इत्यतः पण्डितसरणिमुपजीवति विमर्शनसरणिः । पण्डितसरणिश्च विमर्शनसरणिमवलम्बेत, अन्यथा तत्त्वं न प्रकाशेत । एवं सति परस्परं भावयन्तो विमर्शकाः पण्डितवरेण्याश्च परं श्रेयः साधयेयुरिति सुदृढं प्रत्येमि । 'परस्परं भावयन्तः श्रेयः परमवाप्स्यथ' इति भगवतो वासुदेवस्योपदेशः सम्यगनुसंधीयताम् ॥

---

रचिते । समये चास्मिन्प्राचीनटीकाकारवात्स्यायनोपवर्षवृत्तिकारा (बोधायन) एवं शबरस्वामी आवर्तन्ते ' ति ॥

III. सम्प्रतिनः अध्यापकः किथ् (Dr. A.B Keith) महाशयो व्यलिखदेवम् *—' बौद्धनैय्यायिको दिङ्नागः वात्स्यायनभाष्यं आक्रम्य गुरुतरं निराचकार । तस्मादेव वात्स्यायनः ४०० क्रिस्ताब्द्याः प्रागेवाविर्बभूवेत्यत्र नास्ति कस्यापि विवादः । तत्परिचयस्तुविशेषतो न ज्ञायते । केवलं तदीयं नाम 'पक्षिल स्वामी' त्यासीदिति ज्ञातुं शक्यते " इति ॥

IV. म. म. डाक्टरसतीशचन्द्रविद्याभूषणमहोदयस्त्वेवं वदति † अनुमानतः ३०० क्रिस्ताब्दमध्ये माध्यमिकलङ्कावतारसूत्राणि प्रणीता-

---

lived the old commentators- Vatsyayana, Upavarsha, the Vritti-kara (Bodhayana) and probably Savara-swamin (J A.O.S. for 1911 the dates of the Philosophical Sutras—Hermann Jacobi.)

* Vatsyayana was severely handled by the Buddhist Logician Ding-naga. It is reasonably safe therefore, to assign Vatsyayana to a period before A.D. 400. Of his personality we know nothing save that his name was Pakshila-svamin.

Indian Logic and Atomism--A.B. Keith PP. 27-28.

† Hence the earliest limit of this age is A.D. 300 when the Madhyamika-sutra and Lankavatara-sutra are supposed to have been composed. As Ding-naga lived about 500 A D. and Vasubandhu about 480 A.D. Vatsyayana who preceded them could not have lived after the latter date. Taking the mean between the earliest and the latest dates we may approximately fix the date of Vatsyayana at about 400 A D.

History of Indian Logic by DR. S. C. Vidyabhushana p. 116.

नीति ज्ञायते । वात्स्यायनो निजभाष्ये माध्यमिकलङ्कावतारसूत्राणां समालोचनं चकार । तस्मात्स नागार्जुनानन्तरकालिकः । दिङ्नागः ५०० क्रिस्ताब्दे वसुबन्धुः ४८० क्रिस्ताब्दे चावर्तेताम् । दिङ्नागवसुबन्धू वात्स्यायनभाष्यं समालोचयामासतुः । तस्माद्दिङ्नागवसुबन्धुभ्यां प्राक्तनो भवति वात्स्यायनः । स कथमपि ४८० क्रिस्ताब्दस्मनन्तरकालिको ३०० क्रिस्ताब्दतः पूर्वतनो न भवत्येव । अनयोर्मध्यवर्तिनि कस्मिंश्चित्समये अनुमानतः ४०० क्रिस्ताब्दे समासेति वक्तुं शक्यते इति ॥

V. म. म. विन्ध्येश्वरीप्रसादद्विवेदीमहाशयस्तु न्यायवार्त्तिकभूमिकायां (७३) एवमवोचत्—शतपथब्राह्मणे बृहदारण्योपनिषदि पद्मपुराणे च वात्स्यायनस्य चर्चा समस्ति । तस्मान्न्यायभाष्यकारो वात्स्यायनश्चिरन्तनमुनिरित्यत्र न विगानम् । विशेषतश्च न्यायवार्त्तिक उद्योतकरो वात्स्यायनं 'अक्षपाद-प्रतिमः' (अक्षपादप्रतिभः) इत्युल्लिलेख । तस्मात्स न्यायसूत्रकारवच्चिरन्तनः । तत्कृतन्यायभाष्येपि न किमप्युपलभ्यते, येन तदर्वाचीनता सिध्यति इति ॥

VI. म. म. फणिभूषणाचार्यस्तु एवं निरूपयति—"वात्स्यायनवाचस्पतिमिश्रयोर्वचननिचयेन बौद्धदार्शनिकाभ्युदयानन्तरं वात्स्यायनो न्यायसूत्राण्युद्धृत्य भाष्यं प्रणिनायेति ज्ञायते" इति ॥

एतत्सर्वं समाकलने प्रधानतः मतचतुष्टये पर्यवस्यति—

I. काबेल–वेबरसाहेबस्य मते वात्स्यायनस्य कालः ६०० क्रि. श. ॥

II. Dr. जकबि किथ् विद्याभूषणानां मते ४०० क्रि. शताब्द्याः परवर्ती न भवति तस्य समयः ॥

III. म. म. विन्ध्येश्वरीप्रसादस्य मते चिरन्तनो मुनिर्वात्स्यायनः ॥

IV. म. म. फणिभूषणमहोदयस्य मते तु बुद्धसमसामयिको वात्स्यायन इति ॥

I. तत्र काबेलबेबरयोर्मतमश्रद्धेयमिति जेकबिकिथ्प्रभृतीनां वचनेनैव प्रतीयते । दिङ्नागो यदि षष्ठशताब्द्यां वर्तेत, तदा वात्स्यायनः षष्ठशताब्दीयो न कथमपि भवेदेव; दिङ्नागेन निजरचितप्रमाणसमुच्चयनामकनिबन्धे वात्स्यायनमतस्य निराकरणात् । यद्यस्मिन्समये वात्स्यायनो जीवेत्, तदा निश्चप्रचमेव दिङ्नागस्य मतं निराकुर्यादेव । तस्मादेतन्मतं नैव ग्राह्यम् ॥

II. Dr. जेकबि, किथ्, विद्याभूषणा अपि वात्स्यायनस्य समयं न सम्यङ्निर्धारितवन्तः; वात्स्यायनो ४ शताब्द्याः पश्चात्तनो नेत्यतन्मात्रं प्रकाशयन्ति । ४ शताब्द्याः पूर्वं कदा वर्ततेत्येतत्को वा वदेत्? न्यायभाष्ये यदा नागार्जुननामग्राहं माध्यमिकमतं न निराचष्टे, "प्रतीत्यसमुत्पाद" प्रभृतिपारिभाषिकशब्दानपि न प्रयुङ्क्ते, तदा बौद्धयुगपूर्ववर्ती स इत्यत्र कीदृश्यापत्तिः प्रादुर्भवति? माध्यमिकशून्यवादः बौद्धधर्मश्चातिचिरन्तन इत्येषः प्रबन्धान्तरे सम्यगस्माभिस्सुदृढमुपपादितः । तस्मादेतन्मतमपि अतीव दुर्बलम् ॥

III. म. म. विन्ध्येश्वरीमहाशयस्तु गोत्रप्रवर्तकमूलपुरुषं वात्स्यायनमेव न्यायभाष्यकारम्मत्वा तस्यातिचिरन्तनत्वं प्रतिपादितवान् । परन्तु स्वयमेव वात्स्यायनो नाम कश्चित्, तच्च नाम न गोत्रनिमित्तमिति लिखति (न्यायवार्तिक-भूमिका—७४ पृष्ठम्, एवं तत्रैव ८५ तमं पत्रमपि द्रष्टव्यम्) तस्माद्वात्स्यायनस्य चिरन्तनतावगमो दुरवगाह एव । यद्ययं चिरन्तनमुनिः तर्हि निजनिर्मितभाष्ये पूर्वतनानां बहूनां

नैय्यायिकानां दार्शनिकानां च मतं कथं निरा*कुर्यात्? तस्मादेतन्मतमपि न ग्राह्यमेव। परन्तु गोत्रप्रवर्तकमूलपूरुष इत्यत्र किञ्चिद्विचार्यमस्ति। वात्स्यायनोऽतिप्राचीनोऽपि शतपथब्राह्मणादिषुप्रथितोऽपि न्यायभाष्यकारो वात्स्यायनः गोत्रप्रवर्तकमूलपूरुषवात्स्यायनो न भवतीति स अक्षपादापेक्षया बहुपरवर्ती। "अक्षपादप्रतिमः" अथवा "अक्षपादप्रतिभो" भवेत्तर्हि अक्षपादसमसामयिकः स्यादित्यवगन्तुं न पार्यते। सोऽपि न्यायसूत्रकार इव न्यायप्रतिभासम्पन्नस्समासेति न्यायभाष्यं कर्तुं प्रबभूवेत्येव तेन सूच्यते। विशेषतो, न्यायभाष्ये स्पष्टं उल्लिखितानां दार्शनिकमतानां पर्यालोचनेन वात्स्यायनस्सूत्रकाराक्षपादाद्बहुपरवर्ती वेदव्यासादपि बहोः कालात्परमाविर्बभूवेति विज्ञायते। तस्माद्विवेदिमहाशयमतं किञ्चिद्विचारणीयमेव ॥

IV. एवं म.म. फणिभूषणमतमपि साकल्येन ग्रहीतुं न शक्यते। बौद्धदार्शनिकाभ्युदयतः परं न्यायभाष्यं विरचितमित्यत्र न्यायभाष्ये किमपि प्रमाणं नोपलभ्यते। यदि तथैव भवेत्तर्हि वात्स्यायनो विशेषतः प्रमाणकाण्डविचारं कुरुते स्म। वात्स्यायनभाष्ये यानि मतानि उपलभ्यन्ते तेषु किमपि परवर्तिबौद्धानामित्येवं न ज्ञायते। परन्तु अस्पष्टनिर्देशात्तत्सर्वं प्राचीनमेवेति ज्ञायते ॥

किञ्च वात्स्यायनः कुत्रापि नामग्रहणपूर्वं कस्यापि बौद्धमतस्य खण्डनं न कृतवान्। परन्तु प्राचीनबौद्धवादस्य खण्डनमेव चकारेति

* "अवयव-विपर्यास-वचनं न सूत्रार्थः" न्या. भा १–२–९ 'कालातीत' सूत्रं ॥

"दशावयवानेके नैय्यायिकास्तत्रक्षते' न्या. भा. १ ९ अवयवसूत्रे ॥

"अस्त्यन्यदपि द्रव्य–गुण–कर्म–सामान्य–विशेष–समवाया. प्रमेयम्। तद्भेदेन चापरिसंख्येयम्। अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात्संसार इति" इति न्या. भा. 'प्रमेय' सूत्रे इत्यादि.

# चेतःप्रसादस्य शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ११ | तेनैन | तेनैव |
| ६ | ११ | लम्भमान | लम्बमान |
| ९ | ४ | फलावनम्रान् | फलावनम्रै. |
| १४ | १५ | प्रन्तर | प्रान्तर |
| १५ | ७ | कुसुमावसरो | कुसुमवसरो |
| १७ | ३ | छत्रद्वय | चक्रद्वय |
| ,, | १३ | हरिशायमान | हरितायमान |
| १८ | ६ | महाशालं | महानसं |
| ,, | १५ | भागदेय | भागधेय |
| १९ | १६ | मूतिमनिशं | मूर्तिमनिशं |
| ,, | २० | क्षमं | क्षेमं |
| २० | १२ | कुाट्टम | कुट्टिम |
| ,, | १७ | कोलख्य | कालेख्य |
| ,, | १७ | रक्षाघ्न | रक्षोघ्न |
| ,, | १९ | प्रीतश्रुन्मुखरीदङ्मण्डलं | प्रतिश्रुन्मुखरदिङ्मण्डलं |
| २१ | १ | सवाश्चर्य | सर्वाश्चर्य |
| ,, | २ | प्रसाद | प्रासाद |
| ,, | ३ | करणान् | शरणान् |
| २२ | ७ | कल्पानध्वरा | कल्पान्यध्वरा |
| २३ | ५ | लकामृत | लकावृत |
| ,, | १३ | शतधर | शशधर |
| २५ | १ | दृष्टा | दृष्ट्वा |
| ,, | ११ | जितकलि | बत कलि |

SAN. M.

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २६ | ११ | विदूषा | विदुषा |
| २७ | ७ | आसेरे | आसारे |
| ३१ | १४ | भिदाम् | भिधाम् |
| ,, | १७ | उदारकान्तस्य | उदारतां तस्य |
| ,, | १८ | वशीत्वम् | वशित्वम् |

॥ श्रीः ॥

# श्रीरामस्तवतारावळी



श्रीमच्छर्मोपाध्याय काशी तिम्मणाचार्य विरचिता

श्रीज्योतिर्वित्फणियाडी लक्ष्मीनारायणोपज्ञ
लघुप्रभया समुल्लसिता



मैसूरु
राजकीय शाखामुद्रालये सम्मुद्रिता
१९३६

## पत्रिका–परिचयः

**मधुरवाणी**—एषा च गीर्वाणवाणीमयी पत्रिका बेळगांनगरतः नियतं प्रतिपक्षमाविर्भवन्ती मृदुमधुरभारतीमरन्दधारैस्सहृदयानां हृदयं आनन्दयति । अस्याश्च सम्पादकः नैकतंत्रप्रवेत्ता श्रीमान्गळगली रामाचार्यमहोदयः । सहसंपादकस्तु विद्वद्वरबुर्लीश्रीनिवासाचार्यमहाभागः । वार्षिकं मूल्यं एकरूप्यकं प्रापणव्ययः पृथक् ॥

ननु जानन्त्येव विबुधधौरेयाः यदद्यत्वे देशीयानामन्यभाषापोषणमानसतया सुरभाषायोषा करालकालसर्पसन्दष्टेव चिरंप्रमुषितचेतना विकलकरणा च निजविलासजालमाविष्कर्तुमसमर्थेति । परिस्थितिमेतां दर्शंदर्शं दूयमानमानसाः केचन विपश्चिदपश्चिमाः चटुलेन भाषापीयूषवर्षणेन तदीयं हालाहलमपनोदयितुकामाः काश्चिद्वृत्तपत्रिकाः वंगादिजनपदेभ्यः प्राचकाशन् । तथैव कर्नाटकदेशेषु तादृशोदन्तपत्रिकाभावं परिवीक्ष्य तज्जनितमपमानमपनोदयितुं गीर्वाणवाणीप्रणयी संपादकमहाभागः मधुरवाणीनाम्नीं मधुरभारतीभासुरां पत्रिकां प्रवर्तयामास । पत्रिकाचेयं कविहृदयहारिभिः कविताजालैः, कमनीयाभिश्च कथाभिः विबुधवराशिरश्चालनचणैः प्रश्नप्रतिवचननिचयैश्च रसिकजनमनांसि नितरामावर्जयतीति निवेदयितुं प्रमोदामहे । सोत्साहं सश्रद्धं च संपादिता चैषा पत्रिका संपादकीयसमीहितसाधनपूर्वकं चिरं जीवतादित्याशास्महे ॥

# लोचनोल्लासस्य शुद्धिपत्रम्

(शोधकीयभूमिकायाम्)

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २० | म | में |
| ४ | २१ | ग्रन्थान्थे | ग्रन्थान्ते |
| ,, | २२ | ० | इति |

(लोचनोल्लासे)

| | | | |
|---|---|---|---|
| १ | १ | माशाशे | माशासे |
| ,, | १४ | यथा-ल्लोफ | यथालोक |
| २ | २० | त्त्वंतदु | त्वं तदु |
| ५ | २२ | दनुभवं | दनुभवतु |
| ६ | १९ | प्रीत्ये | प्रीत्यै |
| ७ | २० | ललिता | लुलिता |
| ,, | २२ | ६८ | ३८ |
| ९ | १ | भ्यर्थन इत | भ्यर्थनत इत |
| १० | १४ | पर्यङ्के | पर्यङ्कं |
| ११ | १ | दययन | दयन |
| ,, | १५ | विधायालं | विधूयालं |
| १७ | १ | ।वभो | विभो |

# गतसञ्चिकासमस्यायाः पूरणोद्यमाः

देवानां विष्णुराद्यस्त्रिभुवनविनुतावश्विनौ रूपभाजाम्
पुत्राणामग्रगण्या दशरथतनया व्यासतुल्यो मुनीनाम् ।
मुक्तानां जन्ममृत्यू प्रशमितमदने चेन्द्रियाणां विकारा
अस्ति स्तः सन्ति सर्वैरपि खलु विदितं नास्ति न स्तो न सन्ति ॥ १ ॥

एका भार्या भुजबलजिता विश्ववन्द्या पवित्रा
पुत्रावस्त्रैर्विजयसहजैर्दिव्यरूपैरुपेतौ ।
रामस्यैव स्थगितरिपवो भ्रातरो भ्रातृनिष्ठा
अस्तिः स्तः सन्त्यथ दशशिरसो नास्ति न स्तो न सन्ति ॥ २ ॥

देवी लक्ष्मीरभिमतफला स्वैरसंचारशीला
हर्षोद्वेगौ प्रकृतिचपलो तत्क्षणैकप्रगल्भौ ।
दायादाश्च स्वहितनिरता अर्थमात्रावसक्ता
अस्ति स्तः सन्त्यनुपदमहो नास्ति न स्तो न सन्ति ॥ ३ ॥

क्लीबो भर्ता विवशवनिता निर्धनं चैव मित्रम्
रागद्वेषौ लघुबलवतां शौर्यधैर्ये जितानाम् ।
दुर्भाग्याणां कृपणमनसां संपदो भोगशून्या
अस्ति स्तः सन्त्यपि ननु पुनर्नास्ति न स्तो न सन्ति ॥ ४ ॥

रामा रामा बहुमतगुणा नन्दिनी मानशीला
संपाद्विघे समयसुलभे पीडितानां जनानाम् ।
सन्मित्राणि व्यसनसुखयोरेकरूपाणि भाग्यात्
अस्ति स्तः सन्त्यकृतसुकृतौ नास्ति न स्तो न सन्ति ॥ ५ ॥

मा. ग. पाटील, मिरज.

# समस्यापूरणम्

१. “मिथ्यावादिनमाममनन्ति सुधियः त्वां सत्यसन्धं कथम् ?”

२. “श्रीशारदाहृदयवासिहयास्यगीतः।”

प्रथमसमस्या पूरणीया।

द्वितीयसमस्यायां अन्तर्लापनिबन्धरीत्या पदयोगात् आद्यन्तवर्णयोगात् समस्यासमष्टियोगाच्च यथारुचि प्रश्नान् गृणन्तः समस्यां पूरयत ॥

समस्याप्रवर्तकः,

**स. श्रीनिवासदेशिकाचार्यः,**

श्रीमन्हीशूरपुराधीशशारदाभाण्डागारप्रधानपण्डितः.